पं. भक्तरामस्येदम्पुस्तकम्   ता.-१२-१२

॥ श्रीः ॥

जम्बूराजधानीयमीरपुरनगराभिजनीय-

रावलपिण्डीनगरनिवासी हरनालजातिकुलोत्तंस-

श्रीमत्पण्डितभगवद्दत्तकृतं

# ॥ मनोदूतकाव्यम् ॥

तत्पितृश्रीमल्लालानन्दशास्त्रिकृत-

गूढार्थप्रकाशिकाख्यटीकयासमलङ्कृतं

श्रीमत्पण्डितसंस्कृतइन्सपेक्टर

॥ श्रीकाशीराम ॥

इलाहाबादनिवासिसहायेन

जठारेत्युपनामकपंडितसीतारामदिनकरस्य

श्रीलक्ष्मीनारायण मुद्रणालये

मावलंकरेत्युपनामक पं० कृष्णराव मोरेश्वरस्य

अध्यक्षतायां मुद्रापितं ।

विक्रम संवत् १९६९.

प्रथमावृत्तिः   संख्या १०००

सर्वलोकोपकाराय नकेनचित् धनव्ययेन ग्राहकेन लभ्यते

शुभम् भूयात्



ॐ

# विशेषवक्तव्यमिदम् ।

इदम्मनोदूतकाव्यं हरनालजातीयजम्बूराजधानीस्थपण्डितबालानंद शास्त्रिकृतगूढार्थप्रकाशिकाख्यटीकयासहितं वैकुण्ठनिवासिषोडशवर्षीय श्रीमत्पण्डितभगवद्दत्तविरचितमस्मिन्विषये ममेत्यभिलाषा इदं शतसहस्रधाभूयदेशान्तरीयानेकानेकविदुषां दृष्टिगोचरीभूय पवित्रतां लभेत् ।

तथाविद्याध्ययनशीलविद्यार्थिगणानां विदुषाञ्च साधनव्ययंविनामित्रम्भवेदिति मे अभिलाषां पूर्णीकर्तुं रावलपिण्डीसदरेतिप्रसिद्धस्थानस्थचातुर्वर्ण्यविज्ञालदेशनिवासि राजकीय प्रतिहरिसभास्थसभ्यगणैः प्रेमपूर्वकसर्वप्रियधनव्ययेन सर्वलोकोपकारार्थं श्रीवाराणसीस्थलक्ष्मीनारायणमुद्रणालये मुद्रापितंकृत्वा ममायं शुभसङ्कल्पस्सफलीकृतः ।

इत्यहमेतत्सद्गुणसम्पन्नगृहस्थवंगवासिहरिसभास्थगणनां तथा यैः

**पण्डित काशिराम संस्कृत इन्सपेक्टरेति प्रसिद्धैः**

शारीरकोद्यमेनाधिकधनव्ययान्न्यूनव्ययेन मुद्रापितं तेषामप्यनेकशो धन्यवादङ्करोमि, तथा परमेश्वरात्सदा प्रतिक्षणमिदं प्रार्थये । इयंसभा तथास्याः, सभ्यगणाश्च श्रीमत् पण्डितकाशीरामश्चेलाहबादनिवासी इमे सर्वे दीर्घकालपर्यन्तं सुखपूर्वकस्वस्वकार्य्यस्य प्रतिदिनमुन्नतिङ्कृत्वा लोकोपकारपूर्वकयशोभागिनो भवन्तु ॥

**पण्डित बालानन्द शास्त्री,**

**रावलपिण्डी नगरनिवासी.**

श्रीमत् पण्डित भगवद्दत्त पिता ।


Ved Mandir Library
No. 358/4
Date 24.7.77
JAMM

*Durbhanga.*
*22-7-12*

It was a great pleasure that H. H. of Durbhanga while at Rawalpindi heard extracts, from an excellent sunskrit Poem in sanskrit named MANODUTA. composed by a remark able youth of 18 years, named Pandit Bhagavan Dutta who soon died after completing the poem after the style of MEGHADUTA. by *Kalidasa.*

Pancit Balanand Shastri famous poet ( his father ) with whom one cannot withhold his sympathy for losing so promising a son as Bnagwan Dutt, is himself a Sanskrit scholar and is memorising his brilliant son. He is writing a very worthy and able Bhashya ( commentary ) on MANODUTA. His Highness was very favourably impressed with both the composition and the commentary, by a worthy son and a worthy father. I also show my hearty appreciation for man.

( S D. ) GOPINATH PANDIT,
*Actg. Private Secretary.*

॥ ॐ ॥

श्रीगणेशायनमः ।

# ग्रन्थकर्तुर्जीवनवृत्तान्तः ।



वैकुण्ठम्भगवद्दत्तोगतोऽष्टादशवार्षिकः । पश्यपश्यममस्वान्तञ्च
भिन्नंदैवयोगतः ॥ १ ॥ यस्यस्मृत्वाचसद्वार्त्ताङ्कथञ्चित्प्राणधारणम् ।
उत्क्रामतिममप्राणः सर्वथारक्षणंकथम् ॥ २ ॥ नागमिष्यतिलोकेऽस्मि
न्नेवन्निश्चितमानसः । निराशोविमनाभूत्वादेवदत्तात्पराङ्मुखः ॥ ३ ॥
जातस्स्वर्गसमोममप्रियकरः पंचाब्दसंस्कारितः मातृप्रेमप्रियः स्व
वंशतिलकोवेदेरतिर्जन्मतः । संस्कारैर्दशभिः पवित्रहृदयो धर्म्मेसदा
स्वग्रणीः प्रेम्णायस्यभवन्तिवुष्टमतयः स्वस्मिन्सदार्द्रस्थिताः ॥ ४ ॥
सौशील्याद्विनयेनसाधुजनताचक्रेसुपात्रंध्रुवं प्रीतेर्यस्यसमेचकारसत
तमाज्ञांयथाभाविताम् । विज्ञोमातृवचोमनः कृतिविदः सौहार्दपात्रंसतां
भावात्पौरुषमेवशास्त्रमखिलंज्ञातंनचान्यत्परम् ॥ ५ ॥ वेत्ता व्याकरण
स्यनीतिचतुरोन्यायेतथानाटकेकाव्येसाङ्ख्यविदोःसमर्थमतिमान्सा
हित्यछन्दोऽग्रधीः । अब्दात्पञ्चदशात्समाप्तमगमन्शास्त्राणियस्यस्वतः
सर्वैषांगुणसंग्रहः प्रतिदिनंमामेवशोकायताम् ॥ ६ ॥ नित्यम्पद्मसरो
जमेकममलंगङ्गाधरस्यप्रभोः यश्चात्रोकसंस्मर्य्यते प्रतिदिनं सस्मारत
त्स्वान्ततः । तस्याऽऽदत्तवरैस्सुलोकाविदितः पाण्डित्यप्रख्यामगात् वि
द्याब्धेस्तरणैकतानहृदयः पारंगतोभक्तितः ॥ ७ ॥ सौजन्यैकफलस्सु
धर्म्मेनिरतोविद्वत्सुसक्तस्सदायद्विद्याविपुलीकृतंममयशोलोकेतथास

देसुत्र। तेनैवाद्यविनासपापपुरुषंजानातिलोकश्चमाम् वर्षाण्यष्टदशायु
षोऽस्यसकलम्विद्याप्रसङ्गेगतम्॥ ८॥ दृष्टन्नैवसुभोग्यमेकसुखदंपीतंन
खादं तथा खेदार्थसमुपागतश्चवसुधांशोकायपित्रोस्तथा। हाकष्टंखलु
भागधेयविहितन्नोकैश्शिरोधार्य्यताम् नैवाद्यापिसुदैवदृष्टिविषयः शो
केनपूरोऽस्म्यहम्॥९॥दत्तोमेहृदयंजीवउच्छ्वासःप्राणएवच। संसारसु
खसर्वस्वंप्राणिनांहिप्रियोजनः॥ १०॥ रूपसम्पद्भिरग्राम्यः प्रेमप्रायः
प्रियम्वदः। कुलीनस्सानुकूलश्चसुपुत्रः कुत्रलभ्यते॥ ११॥ पुत्रोभवे
त्कस्यनवल्लुभोऽसौधीसंकुलः सुस्थितधर्म्मदृष्टिः। शास्त्रेणविहितंत्रिदि
वंविहाययस्मिन्सुमूढोऽपिरतिङ्करोति॥ १२॥दशवार्षिकी प्रियायस्य
चित्रारूपाविपुष्पिका। अवशिष्टागृहेनित्यंरोदिति सम्मुखेमम॥१३॥
मातातस्याएवमेवकुररीवसुदुःखिता। भृशम्विलप्यचपुनःसद्गुणान्त
स्य शोचति॥ १४॥ पूर्वाह्नम्विहितोंदयादमसकृत्तन्माम्विहायाधुना
यस्यामस्तमुपैतितांकथमयंरागजिघन्यामगात्।इत्येवंश्लथितांशुकेदिन
पतौयातेदिशंपश्चिमामीर्ष्यारोषविषादनीवतमसाप्राचीककुल्लक्ष्यते॥
१॥ १५॥ विश्लेषाकुलचक्रवाकमिथुनैरुत्पीडमाक्रन्दितेकारुण्यादि
वमीलितासुनलिनीष्वस्तश्चमित्रेगते। शोकेनेवदिगङ्गनाभिरभितः श्या
मायमानैर्मुखे र्निश्वासानिलधूमवर्त्तयइवोद्गीर्णास्तमोराजयः॥२॥१६॥
कानामतत्रचिन्ताप्रभवतिपुरुषस्यपौरूषंयत्र। वाङ्मनसोरविषयोवि
धौचचिन्तान्तरंकिमिह॥ ३॥ १७॥ इष्ट्वाक्रतूण्युगशतानितपश्चरित्वा
वाच्छन्तियत्रमुनयः सुपवित्रजन्म तत्तीर्थराजवरदेविकतीर्थसंज्ञाऽ
भूत्तत्रजन्मगरुडध्वजदत्तसूनोः॥ १७॥ पुष्टिश्चतस्यनगरेममपिण्डि
नाम्नः मृत्युर्बभूवपुरिमिर्पुरसंज्ञिकायाम्। एतद्विचित्रगतिराशितउग्र
नाम्नो यः कल्पतेस्थितिलयावुदयंचभिन्नम्॥१८॥ कथन्नु भारतमहा
मण्डल सूर्य्यकिरण चरणरजँप्रकाशकाशेष मनुष्यमस्तक महामणि
समस्तशास्त्रकोविदस्वप्रज्ञाप्राग्भारपराङ्मुखीकृत पुरन्दरगुरुरवि

वरर्पीण्डेतीहिकामुष्मिकवाञ्छितार्थाणिमाद्यष्टसिद्धिप्रदोदारमहत्त्वप्राग लभ्यमार्कण्डेयव्यासादिप्रमुखमुनिगणप्रतिपादितसद्धर्म्मकर्म्माचरणा भिजात्यवित्तविद्याराज्यप्रतिष्ठाविवेकविभवानाकुलमतेः महतीभाग्य परम्परयायुक्तस्य श्लाघानुगुणगुणलाभस्य प्रासादितमहेश्वरस्य श्रीसद्गुरुश्रीमत्पण्डित गोकुलचन्द्रस्य तत्कृपापात्रस्य समस्त सुरासुरलोककर्णपूरीकृतकान्तकीर्त्तिकुन्दकुसुमस्य समस्तमुनि गणपण्डितवरवृन्दारकवृन्दवन्दनीयपादारविन्दाशेषजगदाधारश्रीवि ष्णोः कृपापात्रस्यच श्रीमन्महाराजजम्बूकाश्मीरातिव्वतादिदेशाधीश श्रीरणवीरसिंहश्रीमहाराजप्रतापसिंहपरमसंमाननीयस्य परमानन्द भाजः परमकारुणिकस्य समस्तव्याकरणादिवेदकर्मकाण्डज्यो तिरादिशास्त्रनिष्णातस्य श्रीगुरोः श्रीमत्पंण्डितगङ्गाधरस्यसद्भक्त स्तत्सुशिक्षितश्चानेकजन्मार्जितपुण्यवान् विरचितगर्भादिचूडा करणादि संस्कारक्रमश्चप्राप्तग्रहणकालेनिमित्त मात्रीकृतोपाध्या योऽहं स्वयमेवानवद्यविद्याम्भोनिधेः परंपारमवाप यश्चपंचदशवर्षायु षि महाभाष्यान्तान्व्याकरणग्रन्थान्न्यायमुक्तावल्यन्तानन्यांश्चाधुनिक परीक्षोपयोगिग्रन्थान्पठित्वैतेषु विक्रमोनविंशति शतैकषष्ट्युत्तरसँ वत्सरगतचैत्रे। (ओरिअण्टल कालेजसंज्ञक पाठशालायां लाहौरा ख्यनगरे) तदनुसरणरीत्या दत्तपरीक्षोतिशोभिताङ्कुरितस्मश्रुः यैस्सहेतिप्रतिज्ञाय यश्चममपूर्वजन्मनि ब्राह्मणकुलोत्पन्नस्यानेकाने कसुरासुरकिरीटकोटिकोणशोणमणिमरीचिचंचरीक चुम्बितचरणा म्बुजमम्बिकाप्रियं महेश्वरं सर्वथायजतः समस्तव्याकरणादिशास्त्रा भ्यासवतः केनचिद्रूपेणदुःसहदुःखभरन्ददौसचेदानीमपिब्राह्मण कुलोत्पन्नः पूर्वकृतपवित्रकस्यचिदत्यन्तपुण्येनात्यन्तानन्दतितत्पूर्व शत्रोः पुत्ररूपेणस्वपूर्वदत्तर्णङ्गृहीत्वैवावशिष्टर्णार्थं भार्य्यान्तत्रैवत्य क्त्वाऽऽगमिष्यामि सचभगवद्दत्तोधर्म्मराजप्रभृतिलोकपालैर्व्वर्थिषुम

यामनुष्यजन्मनारुन्धन् पुत्ररूपेणसंयोगीकथम्भवेत् निवारयामासु स्तंखलुदिव्यसम्बन्धार्थिनोबांधवास्ते तत्किमिहशरणम् हाकष्टमिति ब्रुवन् विमुक्तकण्ठोच्चैस्स्वरेणरुदन्दीर्घन्निस्सहनिःश्वासमसकृच्चिन्तय तिमथिभगवद्दत्तंस स्वर्गन्नेतुम्भूमिविश्लेषवियोगिनिवहुशः परिशोक संतप्ते तथा तदनुरक्तसम्बन्धिष्वननुरक्तस्येतस्ततोगन्तव्यं भवद्भिर्म मनिद्रासमयआगतइतिवदतोभगवद्दत्तस्यदिव्यसम्बन्धिस्सदेवः प्र- त्युपस्थितः प्रवबृतेनिनायचस्वर्गं भगवद्दत्तेऽन्यासहायएवनिश्शाखए वदीनइवानाथइवगतः पश्यतोममवृश्चिकदंशदुस्सहव्यथावस्थामनु भवन्निवकंटकैश्चरणमर्मणिविद्यमान इवमुहुर्मुहुर्मुर्मुरपुञ्जान्यङ्गानिधार यन्नुग्रोष्मग्रीष्मानलोल्लोलैरिवाङ्गानिमनागपिनशर्म्म लेभिरेनाद्यापिप्र तिवारितोरुदन् प्रार्थनयाऽतिप्रबलदैवेनशोकातुराणामश्रुसम्पातोनप्र मार्जितोमन्दभाग्यानामस्माकामिति ॥ चन्द्राङ्करसभूवर्षेवैक्रमेकृष्ण फाल्गुने । ममारभगवद्दत्तोभौमेऽह्निचगुणेतिथौ ॥

॥ इति जीवनवृत्तान्तः ॥

॥ ॐ श्रीगणेशायनमः ॥

श्रीमच्चतुरुदधि टीकमानशरच्चन्द्राविशदयशोराश्यशेषभूमण्डला नवरतविख्यातविद्याविजयाभिनन्दचतुरर्णववेलाविराजिताशेषधराचक्रपंडितवरचूडामणिसकलजलनिधिवेलावनिनिखातकीर्त्तिस्तम्भभूषितभुव[illegible]लयाणिमाद्यष्टसिद्धिप्रदोदाराये तात्याशास्त्रिणः ॥ यद्वाक्तामृतपेसुसज्जनजनाः श्रोत्रोन्द्रियम्प्रस्फुटन् भूयोविप्रणयेनशीतहृदयाः श्रीशास्त्रितात्याभिधाः । तृप्यन्तेनहिसर्वथाममगुरुर्योह्लादकोग्लौरिवतस्याङ्घ्रयब्जसुसंततंमसतिर्ब्रह्माण्डभाण्डोदरे ॥१॥ योभातिप्रबलोऽर्य्यमेवसकलेस्फूर्त्यामयूखैरिवतत्पादेषुविनौमिसंततमहंविन्यस्यमौलौकरं । नम्रेऽङ्घौभवतस्सरोरुहनिभेपाद्यम्परागंलिहिवाक्ययग्रंथितमालयेत्रकुसुमैस्स्थित्वातुपूर्वम्पुरः ॥ २ ॥ तांकण्ठेविधरामिमेच भवतोद्वाभ्यांकराभ्यांधृताविभ्रद्भृङ्गकुलावलि प्रविदुषि आमोदविद्यालये । हृद्यन्तस्यमलंचमेसुदलनेस्वांतेमयाधारिणिश्रद्धाभक्त्युपहारपात्रसुहृदः स्तोत्रंहितत्रार्पणम् ॥ ३ ॥ श्रीकाश्याश्चरणारविन्दयुगलाच्छ्रीशास्त्रितात्यागुरोः विद्याभूषणभूषणस्यभवतःपंचालदेशाभिधोयद्घस्नाद्भवतामगाम्प्रतिदिनंयुग्माब्जपादेरतः नोनेत्राञ्जलिनानिपीतमसकृत्तस्मात्स्वरूपामृतम् ॥४॥ नोनामान्वयपल्लवोऽपिचमयाकर्णावतंसीकृतोमन्ये सुष्ठु कृतार्थताम्प्रतिदिनंस्वान्तस्यपादेनते स्वस्यैवामृतस्राविणाममहृद्विनित्यंतथाप्याशया यद्विद्याविपुलीकृतम्ममयशोदौर्भाग्यमन्दस्यच॥५॥ नाम्निश्री रणवीरसिंहनृपतौकाश्मीरदेशाधिपेयेनायंत्वरितेरितः प्रथमतोनन्दान्तबालाभिधः । दत्त्वावेतनमग्रतस्सुपुरुषान्विद्याधिकारींस्तथा तीर्थेचोत्तरवाहिनीतिविदितेविद्यान्नसालङ्कृते ॥ ६ ॥ वर्षैकादशपाठिताः क्षितिसुरास्तत्रैवपिण्डीमगाम् पश्चादत्रकलत्रपुत्रसहितः अद्यावधिद्वादश॥एकःक्षत्रियबोधराजधनिकःयस्यावशिष्टंयशः तस्यश्रीधर

मन्दिरेनिवसतः विद्याप्रसङ्गेमुदा ॥ ७ ॥ आनन्देनभवद्द्याधिकतया प्रेम्णाभवत्पादयोः वर्षाणिप्रययुः सुतोऽत्रपठितोज्येष्ठोगुणैरायुषा॥ वृत्तं यस्यलिखामिकर्णकटुकं दत्तान्तनाम्नोममपुत्रस्याग्रलिपि प्रदर्शनपरं विष्णवङ्कितं पूर्वतः ॥ ८ ॥ कदाचिदायान्ममसन्निधौचनरास्सकाशी स्थभवत्प्रचेता । ननाभिधेनापिविनासुतेर्नाविज्ञपयामासभवत्सुभव्यम् ॥९॥ मयातुभावत्कसुपृष्ठकौशलोवचस्सुतीक्ष्णम्परमाहदुःखी । भवत्सुतोयोविदुषोऽग्रगण्योजगामवैकुंठपदंयशस्वी ॥१०॥ इतीरितन्तस्यवचः कश्शृण्वन्पपातभूमौविकलोबभूव ॥ श्रुतंमयातच्चमनोविदीर्णन्नवैविदीर्णन्तदुदैवयोगात् ॥ ११ ॥ अशेषन्यायादिषुशब्दशास्त्रेतथैवसांख्यविदिकर्म्मकाण्डे ॥ शिरोमणिः सर्वसुधीसभासुसोऽतीवनैपुण्यवरोबभूव ॥१२॥ नदुःखयोग्योहिभवान्सुपुण्यः परोपकारेषुसदार्द्रचितः ॥ तथापिदैवंप्रबलंसत्तांचविनाविचारेणकिमत्रयत्नः ॥ १३ ॥ विपश्चितोज्ञानधियानिरुन्धन्मनोवशीकृत्यसुखीभवन्ति ॥ मृतेसुपुत्रेमरणंहिश्रेष्ठंनस्वमृत्युर्वरतेविपुत्रम् ॥ १४ ॥ एवम्भूतोममवरगुरुः कीर्त्तनीयश्चलोके यस्यज्येष्ठोवरतनय गङ्गाधरोऽगाच्चस्वर्गम् तद्वैकुण्ठेसुस्तुतिगतिको गोकुलाद्यन्नचन्द्रः पूर्वम्पुत्रस्सुगतिमगमत् तत्परोऽगाच्चतातः ॥१५॥ यस्यप्रख्यास्वमृतरसिनीपूरिता श्रोत्ररन्ध्रे भूयोभूयस्सकलसुधियामस्तिमुख्यस्सुराज्ञः । जम्बूश्रीशस्यवरनृसदांयः सदासीत्स्वभिज्ञःएवंरूपेसुमतिभवतोमन्यतेसर्वलोकः ॥ १६ ॥

### भगवद्दत्तपितृबालानन्दकृतोभगवद्दत्तजन्मचरित्रादि वर्णनपूर्वकशोकाविर्भावः ॥

॥ ॐ श्रीगणेशायनमः ॥

सार्द्धंवत्सरमेकमम्बज्वरितः शुष्कोऽस्मिशोकेनच विद्याबृत्तमुपा
स्यव ॅ प्रतिदिनन्नान्यन्मनोरञ्जनम्। निर्धूताखिलघोरपावनकराञ्जा
नामिकिन्त्वाम्बिना नोपूतोऽस्मिशिवेत्वयाहमधुना ज्ञात्वातुकिंदुष्क
रम् ॥ १ ॥ सर्वेदुष्करकारिणस्सुनयनेपूर्णैः कटाक्षैर्नकिंरक्षितवा भवति
त्रिलोकविदितानोशङ्करीभङ्गला । छायाम्प्राप्यसुशीतलान्तवनिश्रेता
पत्रयोन्मूलिकाम् नोदुःखम्ममविप्लुतंसुरनिभेकस्यप्रतीक्षातव ॥ २ ॥
आविर्भूतविषादकन्दमसमव्यामोहमीलन्मनोजातंमे भवतारिणीसुल
लितेसंसारतापान्मम । पापंमेस्मरणंभवेत्तवशिवे कम्पापिनंतारयेः
येषांपादतरिर्भवाब्धितरणेतत्रापितेनोत्वया ॥ ३ ॥ पापीत्थञ्चभवामि
कल्मषद्वेनामाङ्कितश्चेन्मम एवंचेद्भवतीविचिन्त्यकरुणां स्वाभावि
कीम्पङ्क्तिनिस्पृष्ठामांसुकरेणशीर्ष्णिददतानिष्पापिनंतारयेः कृत्वाचन्द्र
निभेतथापिविधुरात्पादायदद्या रतिम् ॥ ४ ॥ यांकृत्वाचसुखीभवेय
मधुनातापत्रयाञ्जन्महेभक्तेष्वेवहिपक्षपातउततेकल्पोपमात्वं भव।
कारुण्यन्नहिपक्षपातइतितेपश्यत्यतोनिर्घृणाम् एवंचेदपि सर्वइन्द्र
यगणस्सेवासुतेऽसौभवेत् ॥ ५ ॥ वित्तन्नैवनचक्रियाऽपिसुलभामूढो
पमोऽयम्ममपाप्येवंहि भवामि कल्मषद्वेयाचामितेऽङ्घ्रिप्लवम्। का
रुण्यङ्कुरुपक्षपातराहितम्भक्ते यथातेकृपानह्यन्यद्भवतारकम्ममविना
त्वत्तोऽधिनश्शोधकम् ॥ ६ ॥

॥ इति श्रीभगवद्दत्तकृतोयंदेव्याः क्षमापनस्तवः ॥



॥ ॐ ॥

श्रीगणेशायनमः ।



# ॥ मनोदूतम् ॥



साम्बशङ्कराय श्रीगुरोश्चपदेशिवसुताय कृष्णायराधिकाकान्ता यदत्तकृतेः ॥ परमकृपालोर्विज्ञस्यगूढार्थस्यगोकुलादिचंद्रवतः रच यतिवालानन्दोमनोदूतस्यदीपिकां सुगमाम् ॥ १ ॥ २ ॥ योगाचार्य्य जगन्नाथान्नद्वयानन्ददायकान् ॥ श्रीगुरुँश्चहृदिध्यात्वानत्वातत्पा-दयुग्मकम् ॥ २ ॥ मैथिलाधिपदेशस्थान्पूज्यपादयुगान्बुधैः ॥ तात्या भिधाञ्छास्त्रिणस्तु स्वात्वांघ्रीतेषां प्रणम्यच ॥ ३ ॥ निखिलंशास्त्रजातं येहृदिधृत्वाबुधः क्वचित् अनभिभूयसुखंयान्ति श्रीगुरून्सुधिमूर्द्धगान् ॥ ४ ॥ चरणसरोजौपित्रोर्नमामिजन्मदायकौ जगतिगणपतिनाम्नोमा तुस्सुलक्षणीति मेपितुर्वरदौस्मरतिच विद्वद्वृन्दकृपाकटाक्ष सीधुवर्ष णकं कृतिरियमल्पादुष्टाऽपिशोभतांहशासतांसमये ॥५॥ इति सफल यन्तु प्रार्थ्यस्मयाऽपि ते सतां सदा प्रकृतिः इदमपिसौहार्दं सज्जनेषु केषुचकासतेऽध्यावदि । स्वसुदयया विज्ञाप्य प्रवीणता गुणन्कृतार्थ कृताःजनिरुपकाराय प्राणतापरस्य यादृशां जगति ॥ ६ ॥

इह खल्वपूर्वादृष्टपुण्येन महर्षिव्यासतुल्यपूज्यतमपादपद्मतलयु गल च्छ्रीमच्छीसद्गुरुसाङ्गवेदशास्त्रजातशिष्यव्राताध्यापितजम्बू काश्मीरतिब्बताद्यनेकदेशाधीश्वरेन्द्रमहेन्द्र महाराज श्री रण वीरसिंह तथा श्री महाराज प्रतापसिंह प्रतिष्ठित वर पण्डितगोकुल

चन्द्रचरण कृपापात्रोक्तमहाराजप्रतिष्ठितानवद्यविद्याऽवध्यवधि श्रीमत्पण्डित श्री गोकुलचन्द्रसुत श्रीमत्पण्डितगङ्गाधरशिष्यतां प्राप्यमाण: श्रीभवानीशानुकम्पया पंचवर्षायु: स्वगृहयोक्तविधिग र्भाधानाद्युपनयनगायत्र्युपदेशब्रह्मचर्य्यषोडशविवाहान्तसंस्कारगुरु मातृपितृ चरणसेवानुकूलाज्ञापालक महादेवदेवादिपूजाप्रदोषव्रता द्यध्ययनविध्यधीतेतिलक्षणविद्यते ज्ञायते विशेषतया ब्रह्मात्मप्रभृति सूक्ष्मस्थूलकार्य्यव्यवहारमात्रमननेतिवेदः ईश्वरप्रणीतत्वे सति सर्व जगत्प्रपञ्चाप्रपञ्चव्यवहारव्यवस्थापकश्रुतिवाक्यत्त्वमिति वेदलक्षणम् किंच वेदस्येत्यनुगतलक्षणंचेतियावदधिकारतावच्छेदकावाच्छिन्नाधि कारिनिरूपितवेदपारायणाद्यनुष्टानद्वारा अदृष्टप्रयोजकत्वम् अन्येषांतु स्थूललक्षणानितथाहिव्याक्रियंते व्युत्पाद्यंते शब्दाः अनेनेतिव्याकर-णम् प्रकृतिप्रत्ययधातुद्वारा शब्दनिष्पत्तिकारणत्वे सति पाणिन्यादि ऋषिप्रणीतसूत्रादिविशिष्टत्वं व्याकरणत्वं नितरां आसमन्तात् ईयते ज्ञायते उद्देशलक्षणपरीक्षादिविशिष्टद्रव्यादिसप्तपदार्थाः अनेने तिन्यायः । द्रव्यादि सप्तपदार्थोद्देशलक्षणपरीक्षादिप्रातिपाद कत्वेसति प्रत्यक्षादि प्रमाण प्रतिपादक सूत्रादिविशिष्टत्व न्यायलक्षणम् । सम्यक्ख्यायते कथ्यते गण्यते वा प्रकृतिपुरुषभेद श्चतुर्विंशति तत्त्वानि वाऽनेन यत्रवेति सांख्यम् । प्रकृतिपुरुषभेदबो धकत्त्वे सति जगत्कारण प्रधान प्रतिपादकसूत्रादिविशिष्टत्त्वम् । सां ख्यलक्षणम् तदुक्तम् । संख्या प्रकुर्वतेयस्मात्प्रकृतिश्चप्रचक्षते । तत्त्वा निचचतुर्विंशत् ॥ ६ ॥ तेनसांख्यंप्रकीर्तितम् । अतएव संख्याकरणात् सांख्यमित्युच्यतेदर्शनम् अत्रसंख्याशब्दस्यार्थद्वयमभिप्रेतम् । आत्म ज्ञानरूपमेकम् । एकत्वादिरूपाचसंख्यातेन प्रकृतिपुरुषज्ञानरूप संख्यायाः प्रतिपादनात् प्रकृतिमहदहङ्कारादि चतुर्विंशतितत्व रूपायाश्च प्रतिपादनात् । दर्शनमिदंसांख्यकथ्यते ॥ छिद्यते

इतिवेदः ज्ञानं ज्ञानकाण्डं तस्यान्तः समाप्तिर्यत्रेतिवेदान्तः ब्रह्म सत्यं जगन्मिथ्या इति प्रतिपादकत्वे सति प्रधानादिभिन्नजगत्परम कारणजावाभिन्नब्रह्मप्रतिपादकश्रुतिसूत्रादिविशिष्टत्वम् वेदान्त लक्षणम् मीमांस्यतेविचार्य्यतेविधिनियमादि यज्ञा दिसाधनमनेनेति मीमांसायागादि धर्म्मानुष्ठानस्वर्गसार्वभौमाद्याधिपत्याद्यभिमतासिद्धि प्रतिपादकत्वे सति विद्यर्थवादादिद्वादश लक्षणीमीमांसा प्रतिपादक सूत्रादिविशिष्टत्वम् मीमांसालक्षणम्। युज्यते समाधीयते चित्तमने नेति योगः इतिव्युत्पाद्यमानयोगशब्दस्य योगपरतया प्रस्तुतोयोगए वात्रन शास्त्रमितिचेत् सत्यं प्रतिपाद्यतयायोगः प्राधान्येनप्रस्तुतः सचतद्विषयेणशास्त्रेण प्रतिपाद्यते इतितत्प्रतिपादनं करणं शास्त्रं करणगोचरंचकर्तृव्यापारोनकर्मगोचरतामाचरति ॥ यथाछे तुर्देवदत्तस्य व्यापारभूतमुद्यमननिपातनादिकर्मकरणभूतपरशुगोचरं न कर्मभूतवृक्षादिगोचरं तथाचवक्तुः पतञ्जलेः प्रवचनव्यापारापेक्षया योगविषयस्याधिकृतत्वकरणशास्त्रस्याभिधानव्यापारापेक्षया तु यो गस्यैवेतिविभागः ॥ यमनियमाद्यष्टाङ्गयोगप्रतिपादकत्वे सति परमे श्वर प्रणिधानसत्वपुरुषान्यथाख्यात्यविद्यादि निवारकत्वे सति चात्म साक्षात्कार प्रतिपादकसूत्रादिविशिष्टत्वम् योगलक्षणम् अलङ्क्रियंते अनुष्टुभादिछन्दांसि अनेनानुप्रासाद्युपमादिनालङ्कारः ॥ रसादिभि न्नव्यङ्गभिन्नत्वेसतिशब्दार्थान्यतरनिष्ठायाविषयितासम्बन्धावच्छिन्न चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् ॥ अलङ्कारलक्षणम्॥ प्रख्यातोन्नतनायकं रसमयं राजर्षिवंशोद्भवं सांगं भङ्गजयान्वितं रस मयं तत्तत्पुराणाश्रयम् भाषावैभवसुंदरं प्रविलसन्नानाविलासं वलद्वृ तिव्याप्तमशेषसंधिसहितं सप्ताङ्कवन्नाटकम् नाटकलक्षणम् कौतिशब्द यतिकथयतीत्यर्थः यथार्थायथार्थगुणादीनितिकविः तस्यकर्म्मकाव्यम् वाक्यं रसात्मकं काव्यमितिलक्षणम् ॥ चन्द्यते आह्लाद्यते लोकमनां

स्यनेनेति व्युत्पत्या चन्देरादेश्चछः अनेनचंदत्तनेरसुन् आदेश्चछकारः छन्दः गातव्यादिः यथाहिछंदसावचसांप्रवृतिरितिस्वरितेनाधिकारः इतिसूत्रेन्यासः । अकारन्तोऽपिछन्दशब्दः।छंदानुवृतिवुःसाध्यासुहृदो विमनीकृताः । इतिमाघः किंच छद्यते अपवार्य्यते दूरीक्रियते इति यावत् पदवाक्यार्थानंसंबधानन्वयादिदोषोऽनेनेति छंदः । छद् अप वारणे अस्मात् सार्वधातुभ्योऽसुनित्यसुन् निपातनान्नुम् अनुष्टभा दिलक्षणविभागादिवर्णगणयोजनशुभाशुभफलप्रतिपादकत्वे सति पिङ्गलादिप्रणीतसूत्रादि विशिष्टत्त्वम् छंदोलक्षणम् ॥ धनात् स्रवति द्रवतीतिधर्म्मः धनं प्रापयितु स्रवतिद्रवतीत्यर्थः धर्म्मः पुण्यकर्म्मत त् ॥ १ ॥ कर्तुमापाद्यतेयत्रेति धर्म्मःधर्म्मशास्त्रम् ॥ आचार शुभाशु-भकर्म्मफलाफलप्रतिपादकत्त्वे सति अशुभप्रायश्चित प्रतिपादकमह र्षिव्यासादिप्रतिपादितवाक्याविशिष्टत्वम् ॥ धर्म्मशास्त्रलक्षणम् ॥ धर्मपदस्यसिद्धिश्चेति धन्नांतशब्दपूर्वक ऋधातोः अर्तिस्तुसुहुसृधृ क्षीत्या औणादिकेन मन् प्रत्ययः गुणतकारलोपौ स्तः किंचानेनैवसूत्रे णधृञः मन् प्रत्ययोध्रियतेइतिधर्म्मः धनात्स्रवतिधर्म्मोहि धारणाद्वेत्ति निश्चयः इति सर्वम्महाभारत शांप० उक्तम् ॥ लक्षितवेदव्याकरण न्यायसांख्यवेदान्तमीमांसा योगालङ्कारनाटक काव्यछंदो धर्म्मशास्त्रा दीनि पञ्चदशवर्षायुस्समाप्य कस्याचित्पापाऽदृष्टवशसार्द्धैकवर्षविषम ज्वरातंकरुक् जीवनाशानिराशपुनरपि भवानीशानुकम्पाऽवशिष्टादृष्ट पुण्यमनस्स्थिरीकरणार्थं पूर्वजन्मान्तरीयकृताभ्यसितयोगसंस्कारोद्भू तसंस्कारकथंचिन्मन स्स्थिरीकृत्यजीवजातं स्वात्मवत्मृत्योरास्यांत र्गतंक्षणभङ्गुरंतापत्रयाग्निदंदह्यमानमह र्निशमात्मन्यनुपश्यतामातिवि वेकिनामपरिपक्वयोगवतांचभवानीभगवत्प्रीत्यै आपातत: स्थिरमन सोरतिरस्तु यथाऽपरिपक्वयोगवतो मम भवानीभगवत्कृपयाआपातत: स्थिरमनसोरतिरस्ति योगविषयत्वाद्रसात्मकत्वाच्चोभयविचित्रं मनो

दूतंकाव्यमारभमाणः इहशिष्टाः क्वचिदिष्टवस्तुनि प्रवर्त्तमाना अभीष्ट देवतानमस्कारपूर्वकमेव प्रवर्त्तन्ते इति शिष्टसमयपरिपालनायतथा श्रेयांसि बहुविघ्नानि भवन्ति महतामपिअश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः इति वचनान्माभूदस्य ग्रन्थस्य काव्यार्थिनां मनः स्थितीच्छूनांचास्य पठनात्सम्यक् ज्ञानोपदेशकतया अष्टाङ्गसाधनम्बिनापि चमनस्स्थितिफलकतया श्रेयोभूतस्य कोऽपिविघ्नः इति विघ्नोपशांतये किञ्चमंगलादीनि मङ्गलमध्यानीत्यादि वृद्धिसूत्रस्थभाष्येण प्रथम फलोद्देशनानुष्ठेयतया वोधितस्य चिकीर्षितग्रंथस्य निर्विघ्नपरिसमाप्ति प्रचयगमनादिफलकस्य च शिष्टाचारानुमितप्रतिवोधितकर्त्तव्यताकं परिप्राप्तेष्टदेवता नमस्कारात्मकं मंगलंयस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः इत्यादिश्रुत्या गुरुस्तुगीष्पतौ श्रेष्ठ गुरौ पितरि दुर्भरे इतिकोश प्रामाण्याद्गुरुशब्दस्यपितृपरत्त्वे मातृदेवोभव पितृदेवोभव इति श्रुत्या गुरुवद्गुरुपुत्रेष्वित्यादिस्मृत्या च गुरुतत्सुतमातृपितृणामपिनमस्कारशास्त्राङ्गप्रतिपादनात्तन्नमस्कारो ऽवश्यम्पृथक्त्वेनकार्य्यइति गुर्वादिनमस्कारलक्षणमंगलाचरणस्यावश्यकर्त्तव्यतांप्रदर्शयन्तन्नमस्कारात्मकं मङ्गलञ्चजयतिगिरिसुतेत्यादिपञ्चश्लोकेनाचरन्शिष्यशिक्षार्थम्प्रतिवध्नाति ग्रन्थतः कार्य्यकारणाभावपूर्वकशिष्टाचारानुमितिरिति स्वरूपसम्बन्धावच्छिन्नाविघ्नध्वंसत्वावच्छिन्न विघ्नध्वंसनिष्ठा कार्य्यता समवायसम्बन्धाव च्छिन्न मङ्गलत्वावच्छिन्नमंगलनिष्ठा कारणता ॥ स्वप्रतियोगिचरमवर्णावच्छेदकतासबन्धेन समाप्तिस्वात्यत्यवच्छेदकजातीयतासम्बन्धेन मङ्गलम् ॥ श्रुतिर्निर्विघ्न परिसमाप्तिर्मेजायतामित्याकारिका विघ्नध्वंसकामनयाशिष्टाचारात् ॥ ग्रंथश्चस्वोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृत्तिमत्त्वम् ॥ तदाह ॥

मू०—जयति गिरिसुतायामंगलास्वस्य काली।
पुलिनमिहवित्तस्तायानिशान्तेन शुभ्रम्॥
सृजति च परिविश्वंताम्बिनौतीशयुक्ताम्।
तबमुतभगवनद्दत्तः पवित्रंकरोति ॥ १ ॥

टीका जयतीति॥

या कलयति गणयति भक्तान्नितिकाली (कलधातोः पचाद्यचि गौरादित्वान्ङीप्) गिरेः हिमालयस्य सुता पुत्री (ऊखनखत्यादि दण्डकेमगि) पठयते अस्मानमङ्गतरलाजिति (अलच्) मङ्गयति भूष यति धनादिना लोकानितिमंगलामंगलसंज्ञेत्यर्थः॥ स्वस्यात्मः स्वो ज्ञाता वात्मनीत्यमरः॥ निशांतेन सदनेन निशान्तपस्त्वसदनमित्य मरः॥ स्वनिवासस्थानेनेत्यर्थः शुभ्रमुद्दीप्तंश्भ्रंस्यादभ्रके क्लीबमुद्दी शुक्लयोस्त्रिष्चितिमोदिनी॥ इह संसारे संसारिकानांपापिनांसंबन्ध सत्वेऽपिन पापलेषः प्रत्युत पवित्रंकरोतीत्पर्थः॥ तदुक्तंवितस्तामाहा त्म्ये॥ हरिहरसंवादे हेमहेशानकश्यप मण्डले पकाहेनसर्वतीर्थफल भवेद्यस्यस्नानात्तत्तीर्थन्देहीत्युक्तामहादेवोऽग्रेदेवीम्पार्वतींदृष्टा आह देवर्षिकार्य्यसिद्धयर्थंतीर्थंदेहीति मौनीभूतांतांस्वयंगच्छेतिनगच्छामि त्वयाविरहिताप्रभो महापातकिनांसंगान्मलिनस्यामहंसदाकथंत्वदं गसंस्पर्शलभेयमपिशंकर इत्युक्तवतीम्प्रतिभैरवः श्रृणुसुन्दरि वक्ष्येहंवि त्तस्तास्नानजंजलं चक्षु यत्त्वामुच्यते जन्तुर्घोरैः पालकसंचयैः कुरुक्षेत्रे प्रयागे च गङ्गासागर सङ्गमेस्नानाद्वर्षम्महेशानियत्फलंप्राप्नुयान्नरः तत्फलंवित्तस्तायामेकाहेंनचस्नातः उवाचश्लक्षणयावाचावित्तस्तांपा पहारिणीं गच्छदेवकरिष्यन्तितत्रदेव्यः सहायतास्र देव्यश्चमहाल

क्ष्मीलम्भोंदरी श्रृङ्गीशीरामेश्वरीमारीच्यादितीर्थानिचंतितत्रैवोक्तम् वित्तस्तायाः वित्तस्तानाम्नीनद्याःअस्यार्थविशेषोव्युत्पत्तिश्चास्याः उत्प तिप्रकरणेटीकायांस्वष्टी भविष्यति पुलिनंतटमितियावत् यदन्तवारिण स्तटम् (तोयोत्थितं तत्पुलिनमित्यमरः) स्वमध्यमुभयपार्श्वश्चेत्यर्थः ॥ पवित्रंमेध्यंपूतम्पवित्रंमेध्यमित्यमरः ॥ यद्यपितत्पुलिनमुक्तविशेषणेन स्वभावनिर्मलं तथापि समयेसमये आगतानांपापिनांसम्बन्धसत्वेनय न्मलिनंताद्विशिष्टंपवित्रंकरोतीति भावोऽतःपवित्रकरणम् ॥ चपुनः विश्वस्यपारेसमन्तात् इतिपरिविश्वंलक्षणेत्थम्भूतेत्यादिनालक्षणार्थे द्वितीया साजयतिसर्वोत्कर्षेणवर्त्ततेईशयुक्तांमहादेवसमन्वितां तांमग लानांमंगलायाः सुतः पुत्रः भगवद्दत्तः तन्नामाविनीतिविशेष त्वं प्रणामेऽष्टाङ्ग दण्डवत्प्रणमाति ॥ इत्यर्थ ॥१॥

मू०—नमतिगजमुखंतंविघ्नराजंकरोतु ।
प्रभवति जगतीहायस्यविघ्नंसदूरम् ॥
चरणकमलधूलिर्यस्यमौलौधृताचेत् ।
हृदयकलुषमशेषंनिहतेचापवर्गम् ॥ २ ॥
सजयतिगुरुशम्भुर्गोकुलाद्यन्तचन्द्रः ।
प्रणमतिमुमनोगंपादपद्मन्तुतस्य ॥

इतितृतीयस्पर्द्ध ॥


Ved Mandir Library
No. 358/Hy
Date 24.7.77
JAMMU.

## टी० सार्द्धैकम् ॥ नमतीति ॥

पूर्वात्सइत्यस्याध्याहारः सः भगवद्भक्तः तंप्रसिद्धंगजस्यहस्तिनो मुखंशुण्डः तदेवमुखंयस्येतिगजमुखस्तंविशेषणहन्यतेध्वंयतेकार्य्याण्येभिर्गुरुदेवताद्यपराधादिदृष्टादृष्टरूपैरितिविघ्नाः । विपूर्वकहनोबाहुलकात्करणेमूलादित्वात्कः तेषांविघ्नानांप्रत्यूहानांविघ्नाऽन्तरायः प्रत्यूहः इत्यमरः ॥

राजाप्रभुः राजा प्रभौचनृपतौक्षत्रियेरजनीपतौ यक्षेशक्रेचपुंसिस्यादितिमेदिनी ॥

विघ्नराजः राजाह सखिभ्यष्टजितिटच् नतुविघ्नात्राजते प्रकाशते इतिविघ्नराजः ॥

किन्तुविघ्नेषुराजते प्रकाशते इतिविग्रहेणतत्स्वामीत्यर्थः ॥

अन्यथायदि राजतेकथंदूरीकरोतीति भावः ॥

यद्वापूर्वोक्तविग्रहेणापिदुष्टान्प्रतिप्रकाशते इत्यर्थः ॥

दुष्टानप्रतिदूरीकरोतीत्यर्थः ॥

यः करोतिसोऽपिनाशयति अन्यथायदिनाशनेसमर्थः करणेऽसमर्थः तदाकेऽपिमन्यन्तेकेऽपिनमन्यन्ते इत्यतः उभयत्रकार्य्येसमर्थः इतिभावः ॥

तंविघ्नराजंगणाधिपंविनायकोविघ्नराजद्वैमातुर्गणाधिपइत्यमरः ॥

नमतिनमनङ्करोतीत्यर्थः ॥

यस्यविघ्नराजस्यईच्छास्पृहेहाकांक्षेत्यमरः ॥

जगतिलोकेविष्टपंभुवनंजगत् लोकोऽयमित्यमरः ॥

प्रभवतिकल्पतेसमर्थोभवतीत्यर्थः ॥

सविघ्नराजः विघ्नानन्तरायान् दुर पूर्वकइणः (दुरिणौलोपश्चेत्योणादिकेनाधिकरणेरक्) धातोश्चलोपः दुर इतिरेफस्यापिरीरीति

लोपेद्लोपे इतिदीर्घः दुःखेनेयतेगम्यतेयत्रेतिदूरम् विप्रकृष्टकंस्याद्दू
रं विप्रकृष्टकमित्यमरः ॥

यत्रगत्वापुनर्नागच्छतीत्यर्थः ॥

करोतुदूरेएवस्तम्भयतु इत्यर्थः ॥

ननूक्तभाष्येणशिष्टव्यवहारेण च मङ्गलकरणेनैवास्यनिर्विघ्नसमाप्ति
फलकत्वेसिद्धेपुनर्विघ्नंदूरंकरोत्वितिप्रार्थनायाविघ्नदूरीकरणार्थम्प्रा
र्थनावाक्यंगौरवात् पिष्टपेषणवन्निष्फलमितिनशङ्कनीयम् निर्विघ्नपद
घटकविघ्नपदार्थश्चकार्य्यप्रतिबन्धक कारणसामग्रीतितस्यामन्तर्गत
त्वाच्चेतनायाश्चगुर्वादेः प्रतिबंधकसामग्र्याः परञ्चनिर्विघ्नपदेनावि
घ्नाभावस्याग्रहणेतदन्तर्गतत्वात् ध्वंसस्यापिग्रहणेगुर्वादि चेतन प्रति
बंधकसामग्र्याः ध्वंसेपापंस्यादितिध्वंसस्यग्रहणंनस्यात् किंतुकार्य्य
प्रतिबंधकसामग्रीगुर्वादि चेतनादूरएवानिवर्त्तयेदितिविशेषद्योतनार्थं
प्रार्थनयाऽपिविघ्नदूरकरणमतएवध्वंसमितिनोक्तम् ॥

ननुविघ्नपदार्थश्चप्रतिबन्धककारणसामग्रीविशेषः दूरपदार्थं
श्चोक्तव्युत्पत्याएतद्देशावच्छिन्नोद्देश्य बहुतररविपरिस्यन्दनाक्रिया
संयोगाश्रयोत्तरोत्तरदेशः एवंचैतद्देशावच्छिन्नोद्देश्यबहुतररविपरि
स्यन्दनक्रियासंयोगाश्रयोतरोत्तरदेशाश्रयाप्रतिबंधकसामग्री इतिबो
धे इप्सितग्रन्थसमाप्तिकार्य्यात् प्रतिबंधकसामग्रीदूरतराप्रतीयतेपरं
चोक्तदूरपदार्थस्वीकारे अभावीयप्रतियोगितावच्छेदकावच्छिन्न प्रति
बन्धकसामग्रीसत्वेदैववशात् प्रतिबंधकसामग्र्याः एतद्देशावच्छिन्न
संयोगाश्रयतयाविघ्नसत्वेनिर्विघ्नग्रन्थसमाप्तिरुपकार्य्यस्यहानिस्या
द्यथापूर्वोत्तर उभयदेशसंयोगाश्रयतारयंत्रं कदाचित्पूर्वदेशीयाका
र्य्यंकदाचिदुत्तरदेशीयं च करोति इत्यतः ध्वंसविनाशयोः पर्य्यायत्वे
नतदन्यतरध्वंसाभावग्रहणेध्वंसाभावीयप्रतियोगितावच्छेदकावच्छि
न्नप्रतिबंधकसामग्र्याः अभावेविघ्ननिवृत्तिस्स्यादितिध्वंसमितिवक्तुमु

चितमितिचेन्मैवम् कार्य्यप्रतिबन्धकसामग्र्याः चेतनाचेतनोभयाश्रयतयाध्वंसाभावीयप्रतियोगितावच्छेदका वच्छिन्नवृक्षपर्वतनद्यादि पतनाग्न्यादि दहनाद्यचेतनप्रतिबन्धककारणसामग्र्याः नकोऽपिदोषःपरंचध्वंसाभावीयप्रतियोगितावच्छेदेकावच्छिन्नचेतनगुर्व्वादिप्रतिबंधककारणसामग्रीविनाशेऽपिधर्म्महानिर्भविष्यतियद्यपिगुर्वादेश्चेतनस्याविघ्नरूपतानास्तिकिंतुतत्कृतशापादेरचेतनस्यैवतद्रूपतातथापिशापादेर्निवृत्तौतच्छक्तिहानंसुतरांतद्धानिरितिभावः ॥

यथासेनाहानौराजादेरेवहानिरिति अतएवदूरंगच्छतिदेवदत्तः इतिसंगच्छतेअन्यथादूरंदेवदत्तः इत्युक्तौपूर्वदेशविभागोत्तरदेशसंयोगाश्रयोदेवदत्तः इतिशाब्दबोधेगच्छतीत्यस्यवैयर्थ्यंस्यात् इतिदूरपदार्थश्चातिरिक्तएवपूर्वदेशाविभागोत्तरदेशसंयोगात् यद्यपिदुःखेनेयतेगम्यतेयत्रेतिव्युत्पत्त्यापूर्वदेशविभागोत्तरदेशसंयोगोदूरपदार्थः प्रतीयते तथापिकाशीदूरा इत्यादि प्रयोगेकाश्याः अचेतनत्वेनपूर्वदेशविभागानुकूलव्यापाराश्रयाभावादितिदूरपदार्थःउत्तरोत्तरदेशएवविघ्नपदार्थश्चप्रक्षालनाधिपङ्कस्यदूरादस्पर्शनंवरमितिन्यायेनोत्तरोत्तरदेशाश्रयैवप्रतिबंधककारणसामग्री सत्वेतद्देशावच्छिन्नदेश उक्तक्रिया संयोगस्याप्युत्तरोत्तरदेशाश्रया प्रतिबंधकसामग्री इतिकरुणानिवृत्तिपूर्वक कर्त्तव्यकार्य्यापेक्षयाकरुणाविशिष्टकृतकार्य्येधर्म्मस्यापिह्रानिर्नस्यादितिग्रंथकर्त्तामनासिनिधाय कार्य्यप्रतिबन्धक कारण सामग्रीदूरतः एवस्तम्भयतु इतिप्रार्थयति अर्थादेतद्देशावच्छेदेनैतत्कालावच्छेदनचैतत्कार्य्यप्रतिबंधक कारणसामग्र्याः सर्वथाऽत्यन्ताभावएवास्तु ॥

। इति भावः ॥

यदादिग्विजयार्थंसन्नद्धबद्धेन धनुष्मतापरीक्षितेनराज्ञा अधर्म्मरूपकालिनाशूद्ररूपेणताडितंगोमिथुनंदृष्ट्वाधर्म्मसारग्राहिणातेनतन्निगृह्ययावदहमत्रस्थास्यामितावन्मेराज्यविषयान्निवर्त्तयत्वितिप्रतिज्ञयास्वराज्यविषयान्निस्सारितोनतुहन्यते (तदुक्तम्भागवते) ॥

निशातमाददेखङ्गंकलयेऽधर्म्महेतवे तंजिघांसुमभिप्रेत्यविहायनृपलाञ्छनं तत्पादमूलंशिरसासमगाद्भयविह्वलः पतितंपादयोर्वीक्ष्य कृपयादीनवत्सलः शरण्योनावधीच्छलोक्यः आहचेदंहसन्निवेतिकिञ्चविघ्नश्चप्रतिवंधक कारणसामग्री साचद्विविधा प्रत्यक्षाऽप्रत्यक्षाचाद्यामातृपितृगुरुराजाद्याज्ञापालननिमितकदूरदेशगमनान्यकार्य्यप्रवर्त्तनादिजन्यायथासगरपुत्राणाम् यथाऽनुत्पथवर्त्तमावेनस्यब्राह्मणशापजन्यासाचक्षुरिन्द्रियज्ञान जन्यायथाघटादिः प्रत्यक्षप्रसिद्धःद्विती याचास्मिञ्जन्मनिमातृपित्राद्याज्ञापालनपूर्वकतत्कार्य्य करणप्रवृत्ता जन्मान्तरीयापूर्वपापादृष्टवशीभूतजन्यादेषग्रहादिजन्या च यथा श्रीरामचन्द्रनलादेः एवं च ध्वंसमित्युक्तौध्वंसाभावीय प्रतियोगितावच्छेदकावाच्छिन्नचक्षुरिंद्रियज्ञानजन्यघटादिवत्प्रत्यक्षकाचित्प्रतिवन्धक कारण सामग्रीस्वीक्रियते इतिध्वंसाभावीय प्रतियोगितावच्छेदकावच्छिन्नायाः प्रतिवंधक कारणसामग्र्याः ध्वंसेऽपि उक्ताऽप्रत्यक्षासिद्धायाः उत्सारणं नस्यादृश्यत्वाभावात् किंचध्वंसाभावीयप्रतियोगितावच्छेदकावच्छिन्नायाः प्रत्यक्षसिद्धायाः मात्रादिशापजन्यायाः ध्वंसेऽपिमनसः उत्सारणांनस्यात्तथाहिध्वंसश्चप्रतियोगिजन्य प्रतियोगिसमावायिकारणवृत्तिः ध्वस्तव्यवहारहेतुः कार्य्यस्योत्पत्यनन्तरंस्वप्रातियोगिसमवायिकारणवृत्तिरित्यर्थः ॥ अर्थात्कार्य्यस्य कारणेलीनेघटाभाववद्भूतलमितिवत् ॥ अभावस्यविशेष्यविशेषणभावेनप्रत्यक्षेऽपिध्वंसाभावीयप्रतियोगितावच्छेदकावच्छिन्नकार्य्यस्वसंस्कारसत्वेनस्मृतिस्स्यात्साचस्मृतिर्यावन्मनसिस्थिताभवतितावद्विघ्नो

त्साारणंनस्यात् यथाकस्मिंश्चिद्धानिकेविदेशस्थे मृतेऽपियावत्तन्मरणश्रवणात्पूर्वंतद्धद्द्रव्यदेयग्रहणादिव्यवहारान्तरस्मृत्याऽधिकारिणःकुर्वन्ति तन्मरणश्रवणानन्तरं तानपिग्राहकाःदातुंनेच्छन्ति इत्यसभ्योऽपिलोकव्यहारःतमपिकुर्वन्ति ॥

तदुक्तंरामायणेबाल्मीकिनालंकाप्राप्त्यान्वेषणसमयहनुमत्कथनम्॥

प्रनष्टा सतीयस्यमनसोनप्रणश्यति प्रनष्टाऽदर्शनं प्राप्तापियस्यरामस्यमनसस्तुनप्रणश्यतिनादृष्टाभवतिनित्यसन्निहिताभवतीत्यर्थः ॥

अतएवादर्शनंलोप इतिपाणिनिसूत्रेविद्यमानस्यलोपःसचध्वंसाभावएवनान्योऽभावःसम्भवितुमर्हति एवंचयत्रलोपस्तत्रस्थानिवत्सूत्रेणस्थानिबुद्धिरपिभवति अतआहदूरमिति कस्माद्दूरमित्याकांक्षायामस्माद्दूरमितिविशेषानुपादानादेवमनसोऽपिदूरमितिस्वीकरोति अर्थाच्चक्षुरादीन्द्रियाविषयत्वेमनसोऽपि अविषयत्वमितिभावः ॥

ननुकृतमङ्गलस्यैवसामान्यतः एतद्देशावच्छेदेनतद्देशावच्छेदेनचविघ्नाभावकारणसत्वेऽपिकृतमंगलैकदेशेतद्देशावच्छेदेनाविघ्ननिवृत्त्यर्थंकदूरमितिपदस्य तद्देशावच्छेदेनविघ्नभावेकारणत्वेपरस्परसामान्यविशेषभावेनसंकोचेएतद्देशाभिन्नैतद्देशस्थविघ्ननिवृत्तौ एतद्देशाविघ्नसत्वेकार्य्यहानिस्स्यात् किंचयथा अचोरहाभ्यामित्यत्रयरस्सामान्यतः प्राप्तद्वित्वस्यरेफहकारयोरत्रापिप्राप्तौतक्रकौंडिन्यन्यायेनयथारेफ हकारव्यतिरिक्त यरोद्वित्वमितिसंकोचःकिंचैतत्तदेशावच्छेदेनमंगलस्यविघ्नाभावेकारणत्वेचकारणसामग्रीरन्या तद्देशावच्छेदेनमंगलघटकपदार्थस्यविघ्नाभावेकारणत्वेचकारणसामग्रीभिन्ना इतिपरस्परकारणसामग्रीभेदेनाविरोधेतद्देशावच्छेदेनध्वंसाभाव इतिविघ्नाभावकारणसामग्री एतद्देशावच्छेदेनाबिघ्नाभावकारणसामग्र्याःप्रतिवन्धिकाएतद्देशावच्छेदेनविघ्नाभावकारणसामग्रीः तद्देशावच्छेदेनाविघ्नाभावकारणसामग्र्याः प्रतिवन्धकेतिप्रतिवध्यप्रतिवन्धक

भाविनतात्पार्य्यीयबोधाभावात नकस्यापिविघ्नोत्सारणेकारणमिति नाशङ्क्यम् एतद्देशावच्छेदेनमंगलस्यविघ्नाभावेकारणत्वेतद्देशावच्छेदेनचदूरपदार्थस्य कारणत्वेचविषयैक्याभावादितिमैवम्तद्देशावच्छेदेनविषयैक्येविघ्नाभावरूपविषयैक्येनचविरोधसत्वेमंगलस्यवैयर्थ्यंस्या-दितिवाच्यम तीत्यपूर्वबुद्ध्यादिप्रदर्शनपरवाक्यानांपूर्वपक्ष एवावसरो ज्ञातव्य इत्यपूर्वबुध्यादिप्रदर्शनार्थमत्यन्ताभावएवस्वीकरणीय इतिप्रार्थनावाक्यस्यापिनवैयर्थ्यमिति ॥ यथापाणिन्यादिमहर्षिकृतग्रन्थेषु प्रमादकृतवस्तुसर्वैस्स्वीकृतमस्ति प्रमादेनकृत मित्युक्त्याऽपि ॥



ननुमङ्गलस्यविघ्नध्वंसाभावे एवकारणत्वमितिसर्वैराचार्य्यैरभि मतमनेनतुविघ्नदूरङ्कुरोत्विवितिप्रार्थनाविशिष्टमङ्गलकरणस्यात्यन्ताभा वेकारणत्वमुक्तयुक्त्या इत्याचार्य्यैस्सहाविरोधानुरोधेनमङ्गलकर णस्यध्वंसाभावे एवकारणत्वम्वक्तमुचितंतथाप्याचार्य्यमतेविघ्न स्यदुरितविशेषत्वादेतन्मतेविघ्नपदस्यविशेषेणहन्यतेविनाश्यते प्रा रम्भसमाप्तिपर्य्यन्तकार्य्यमनेनेतिव्युत्पत्या ततत्प्रतिबन्धककारणसा मग्रीपरत्वात् यद्यपिदुरितविशेषेणैवेकार्य्यप्रतिबन्धकसामग्री प्राप तेत्तथाप्याचार्य्यतयोरुभयोः कार्य्यकारणविषयभेदेननविरोधः यथा लोकेरोगार्त्तमृतपुत्रकः पितामम पूर्वजन्मान्तरीयकृतपापवशात्पुत्रो मृतः इतिवदतिकश्चिदुक्तपापवशादनेकौषधदानेऽपिर्विनिवृत्तरोगो मृतः कश्चिद्दोषग्रापेक्षयारोगस्योग्रत्वेसति मृतः एवंरीत्याकश्चित्पा पस्य अन्य औषधस्यपरः उग्ररोगस्यकारणंवदतितद्वदत्रापिवस्तु तोबालत्वाद्विघ्नपदेनदुरितविशेषमज्ञात्वैवकेवलप्रतिबन्धककारणसाम ग्री परत्वविघ्नपदंज्ञात्वाविघ्नदूरंकरोत्विवितिप्रार्थनावाक्यङ्कुरोणत्वे इत्युक्तौ अभावस्वरूपश्चन्यायवेदान्तनयेनिषेधमुखप्रतीतिविषयोऽ भावः एक अथवाप्रतियोगिसापेक्षप्रतीतिविषयोऽभावोद्वितीयः प्रा- चीननवीनन्यायभेदेनाद्यलक्षणे उभयोविरोधात्परित्यक्तः आद्योवि रोधश्चाविस्तारभयान्नलिखितः तदग्रन्थेद्रष्टव्यः॥

प्रतियोगिनंत्यक्त्वाऽभावप्रतीतिर्नस्यादितिप्रतियोगिसापेक्षसलोके ऽभावः इत्यन्तमएवस्वीकृतः यद्यप्यभावइवसंबंधसादृश्याचपिप्राति योगीनिरपेक्षप्रतीतिविषयौनस्तः किन्तु प्रतियोगिसापेक्ष्यप्रतीतिविष यौतत्रलक्षणमतिव्याप्तंस्यात्तथापिसम्बंधसादृश्योः प्रतियोगितायाः अभावप्रतियोगिताविलक्षणाऽस्तीतिन्यायग्रंथे अभाव्यभावस्वरूपता अभावस्यप्रतियोगितायाः स्वरूपमाचार्य्यस्स्वीकृतमित्युक्तप्रतियोगि तासंबन्धसादृश्ययोर्नास्त्यतः संबंधसादृश्ययोः प्रतियोगितायाः वि

लक्षणप्रतियोगितावान्यस्यप्रतियोगीसअभावः स्थूलरीत्यास्येदं लक्षणं सम्बंधसादृश्याभिन्नत्वेसतिप्रतियोगिसापेक्षप्रतीतिविषयोऽभावः सचान्योन्याभावसंसर्गाभावभेदात्द्विविधः न्यायवेदांतमते संसर्गाभावश्चनवीनप्राचीननयेपंचविधः प्रागभावप्रध्वंसाभावान्योन्याभावसामयिकाभावाइतिभेदात् ॥

नवीननयेसामयिकाभावश्चखण्डितः तत्रैवद्रष्टव्यः इतिचतुर्विधोऽभावइतिसिद्धांतितम ॥

एवंचविस्तरस्यान्योन्याभावस्वीकारेकुत्रचिद्विघ्नसत्वेविघ्ननिवृतिर्नस्यादितितन्निरस्तम् ॥

विघ्नात्यन्ताभावस्वीकारेमंगलकरणात्पूर्वमेवयद्विघ्नजन्मान्तरीयंघातन्निवृतिर्नस्यादिति ध्वंसाभावएवस्वीकरणीयःसचद्विविधःभावपदार्थस्यनाशरूपः एकःद्वितीयश्चाभावस्यनाशरूपः भावपदार्थस्यनाशरूपोऽभावरूपःसएवप्रध्वंसाभावः ॥

यथाघटादेर्भावपदार्थस्यनाशरूपोऽभावरूपःसएवप्रध्वंसाभावः॥

किंचाभावपदार्थस्यनाशरूपः ध्वंसाभावरूपःतमेवध्वंसप्रध्वंसौकथ्येते नहिध्वंसाभावप्रध्वंसाभावौ किन्तुघटप्रागभावस्यनाशरूपघटस्यस्वप्रागभावस्यध्वंसप्रध्वंसौकथ्येते इतिद्विविधोध्वंसाभावः ॥

यद्यपिप्रयोजनमनुद्दिश्यमंदोऽपिनप्रवर्त्तते इतिन्यायेनप्रयोजनाभावाद्भावलक्षणविभागादिकथनमनुचितंतथापिविघ्ननिवृतौध्वंसाभावादिकारणत्वप्रकरणादभाव लक्षणादिनिरूपणमनुपयुक्तंनप्रकृतमनुसरामिमंगलदूरंकरोत्वितिप्रार्थनावाक्यार्थयोःसामान्यविशेषभावेनयद्येकत्रविशेषप्राप्तौविशेषस्यव्यर्थभियाविघ्नदूरंकरोत्वितिवाक्यार्थविषयातिरिक्तमङ्गलविषयसंकोचस्स्यात् यथा इकोयणचिअकःसवर्णेदीर्घइत्यनयोस्सामान्यविशेषभावेनश्रीशइत्याद्येकत्रविषयेप्राप्तौ यदीकोयणचीत्ययणादेशस्स्यात्तदा अकःसवर्णेदीर्घइतिव्यर्थभियासवर्णाच्यतिरिक्तत्वे

नसंकोचः किंतुमंगलादीनीत्यादि भाष्येणनिर्विघ्नपरिसमाप्तिर्मेजायता मितिशिष्टाचारानुमितिश्रुत्याचमंगलस्यैवविघ्नाभावेकारणत्वंयद्यपिमं गलघटकत्वेनास्यापिमंगलत्वंतथाऽप्येकरूपत्वेनसामान्यविशेषभावोना स्ति किन्तुमंगलसहकारेणैवविघ्नं दूरंकरोत्वितिप्रार्थनावाक्यास्यविघ्ना भावेकारणत्वं नतुस्वतः अतएवपूर्वोक्तंमंगलस्यैवविघ्नाभावेकारणत्वे प्रार्थनावाक्यकरणंचेतनगुर्वादेःप्रतिबंधकविघ्नरूपस्यध्वंसाभावोनस्या दितिविशेषद्योतनार्थम्प्रार्थनयाविघ्नदूरीकरणमितिसङ्गच्छते अतए वप्रतिबध्यप्रतिबन्धकभावो ऽपिनविषयैक्येयद्युभयोर्भिन्नरूपेणप्राप्तौका रणसामग्रीभेदेनपरस्पर प्रतिबध्यप्रतिबन्धकभावस्स्यात् यदिमङ्गलं बिनाविघ्ननिवृत्तौकारणताएवनास्तितदासामान्यतःप्रकृताप्रयोजकाता त्पर्य्यीयार्थकल्पने कारणसामग्रीभेदे ऽपिमंगलस्यप्रतिबंधकत्वन्नं स्यात॥प्रत्युतोपजीव्योपजीविकभावेनप्रार्थनावाकस्यापिसार्थक्यम् इत्य लम् ॥

यस्यगुरुगोकुलचन्द्रस्यचरणकमलयोःपादपद्मयोर्धूलिश्चरणकम लधूलिःरजः पांसुर्नान्द्वयोःरजःइत्यमरः ॥

मौलौचूडायांमौलिःकिरीटेधम्मिल्लेचूडायामनपुंसकमितिमेदिनी॥ धृताचेद्यदिप्राप्तेत्यर्थः॥ चूडायामन्तःब्रह्मरन्ध्रस्थानंतस्मिन्परब्रह्मणेध्या नामितितत्रतद्रजोधारणेनात्यंतातिशयित्वंतद्रजःअर्थाद्विष्णुपादोद्भूत श्रीभागीरथीसममितिध्वनिः ॥ अतःमौलाविस्युक्तन्नमस्तके इति अतए वाशेषंसमग्रंहृदयकलुषंचित्तमलं अपवर्गमुक्तिं मुक्तिश्च जन्ममरणा भ्यांमोचनम् ॥ प्रकृतेजन्ममोचनम् ॥ तात्पर्य्यवशात् पुनरुत्पत्तेरभावः इत्यर्थः ॥ निन्हुतेनाशंकरोतीत्यर्थः॥ हिनिश्चयेजहिपादपूरणेहेतौविशे षेऽप्यवधारणेप्रश्नेहेत्वपदेशेसम्भ्रमासूययोरपीतिमेदिनी॥ सगुरुःशंभुः इवेतिगुरुशम्भुः तेजसादययोदारत्वयाचतत्तुल्यः इत्यर्थः॥ गोकुल इति आदिः पूर्वः अन्तेचरमभागेचंद्र इति यस्येति गोकुलाद्यन्तचन्द्र

ननु यद्यपि हिरण्यपूर्वकशिपुंप्रचक्षत इत्यादिवत् गोकुलाद्यन्तचन्द्रपत द्घटकादिपदेनैवप्रकृतितात्पर्य्यबोधेऽन्तपदस्यानुपयुक्तत्वम्नुपयोगेऽव्य यादिरन्त्येनेतिवत् ॥ तत्रतुयेनविनायदनुपपन्नमितिन्यायेनाद्यन्तयोर्मध्यं विनानिष्पन्नत्वेनमध्याक्षेपतयोरुपयुक्तत्वंसमीचीनं ॥ तथाप्यत्राऽत्वा दिपदेन गोकुलचन्द्रनामग्रहेपि तदन्वर्थोत्कृष्टत्वमहासिद्धिदायकादि विशिष्टगुणगर्भितगुरूनामग्रहार्थम् तदुक्तंरामायणे राजपुत्रि ! श्रुतंत्वे तन्मुनेरस्यसमीरितं । श्रेयोर्थमात्मनःशीघ्रमभिगच्छतपस्विनीं ॥ अन सूयेतियालोकेकर्मभिः ख्यातिमागता । एवमन्यत्रापिबोधगम् अत्रय द्वक्तव्यंतदग्रेस्फूटिभविष्यतिटीकायाम् ॥ गोकुलचन्द्रनामा इत्यर्थः ॥ जयतिसर्वोत्कर्षेणवर्त्ततेतस्यगुरूगोकुलचन्द्रस्यस्वस्यभगवद्दत्तस्यमनः चित्तं चित्तंतु चेतोहृदयं स्वान्तंहृन्मानसंमनः इत्यमरः॥स्वमनःतास्मिन्नाग च्छतीतिव्युत्पत्या अन्तात्यन्ताध्वेतिसूत्रान्यत्रापिदृश्यते इतिवक्तव्यमि तिवार्त्तिकेनस्वमनःपूर्वकगमधातोःकर्त्तरिडः॥ स्वमनोगमिति गंगतंप्राप्त मितियावत् ॥ पादपद्ममिवेतिपादपद्ममिताविमितिसमासः॥चरण कमलंप्र णमति प्रकर्षेणंनमनंकरोतीत्यर्थः॥नमनेप्रकर्षत्वञ्चाष्टाङ्गदण्डवत्करणम् ॥ २ ॥ सार्द्धद्वितीयइति ॥

सकलमनुजनम्यंयस्यगङ्गा धरस्यसददतुममवाण्यै वाक्यबन्धेसुरम्याम् ॥ ३ ॥ प्रतिसमयदस्फूर्तिंस्तुते पादपद्मम् तदनुगणपतिम्मेताततातंद्वय लुं सुचरि तमिहलोकेबालपुर्वान्त्यशास्त्रीत्यनुपममापशास्त्रे सद्गुरावग्रभक्तम् ॥४॥ सार्द्धचतुर्थः ॥

टी० सकलेति ॥ गुरू प्रकरणत्वात्तात्पर्य्यत्वाच्चगुरूपदाध्याहारः

यस्यगुरोः गंगाधरस्य सकलमनुजैः सर्वमनुष्यैः मनुष्याः मानवाः मर्त्याः मनुजाः इत्यमरः ॥ नम्यंनमस्कारयोग्यंपादपद्मंचरणाब्जं सः गुरुर्वाक्यैः तिङसुवन्तचयैः तिङसुबंतचयोवाक्यमित्यमरः बध्यते इति ॥ बंधबंधनेधातोर्भावेघञ् तस्मिनु रचनायां सुरम्यां शोभनमनोरमां छन्दोऽलंकाररसानुप्रासाद्यनुगुणेनरमणीयामिदों षामितिभावः ॥ ननुरम्य मात्रविशेषणेनैवोयुक्तगुणयुक्तत्वेतस्मिन्नपि शोभनेतिविशेषणो पादानंमनस्स्थिरीकरणपूर्वकोतमयोगग्रहणार्थमि तिभावः ॥ समयंसमयं प्रतीतिप्रतिसमयंलक्षणेत्थमितिवीप्सायां द्वितीया प्रतिरचनक्रियाकालंसिद्धान्तकालंचसमयः शपथेभाषासं पदोः कालसंविदोः सिद्धान्ताचारसंकेतनियमावसरेषुचक्रियाकारे चंनिर्देशे इतिहैमः ॥ प्रवन्धसिद्धान्तकृतौप्रतिक्षणतद्वचनेचेत्यर्थः ॥ पदानांसुबन्ततिङन्तसमासतद्धितादिपारिनिष्टतानांपदंस्थानेविभक्त्य न्तेशब्देवाक्यैकवस्तुनोः त्राणेपादेपादचिन्हेव्यवसायापदेशयोरि तिहैमः ॥ स्फूर्तिमाविलम्बनोपस्थितिमित्यर्थः ॥ ममभगवद्भक्तस्यवाण्यै भारत्यैभारतीभाषागीर्वाग्वाणीसरस्वतीत्यमरः ददतुकरोत्वित्यर्थः ॥ तदितितन्नतितेस्तु ॥ ननुनमस्कारयोग्यानांसर्वेषांगुरूणामेकत्वेऽ पिस्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलोव्यापारोऽयंमत्तः उत्कृष्टः इतिनमनपदार्थः सचाशिरसादण्डवत्प्रणामः ॥ आयुषागुणेनवोत्कर्ष विशिष्टमातृपितृगुर्वादिष्वेव ॥ तदुक्तं ॥ आत्मनाचधनेनैवश्रद्धा वित्तानुसारतः तावदाराधयेच्छिष्यः प्रसन्नोऽसौभवेद्यथा प्रसन्नेतुमहा भागेसद्यः पापक्षयोभवेत् ॥ गुरुर्मान्योगुरुःपूज्योगुरुरेवसदाशिवः लिंगपुराणेगुरुशिष्यसंवादे १२६ अ० त्रिसंध्ययंगुरोः पूजाकर्तव्याहित मिच्छतायोगुरुः साशिवःप्रोक्तोयःशिवःसगुरुस्स्मृतः ॥ यथाशिवस्त थाविद्यायथाविद्यातथागुरुः शिवविद्यागुरूस्तस्माद्भक्त्याचसदृशंप्रभुः लि पु०उत्कृष्टत्वगुणप्रकारकज्ञानानुकूलोव्यापारः स्तवः सचवाङ्मा

त्रेणगुणवर्णनं अयमेतादृशगुणवान् योयस्यगुणस्तदनुवर्णनंसर्वेषुसाधा
रणम्इतिनमनस्तवनक्रियाभेदात् मात्रादेर्गुरोर्भेदस्स्यादत्तएवान्यै
स्साधारणैस्सहसाम्यंस्यादितिकथमेकस्मिन्नमनन्यस्मिन्स्तवनंचतदुक्त
म्इमंलोकंमातृभक्त्या पितृभक्त्याचमध्यमंगुरुशुश्रूषयात्वेवंब्रह्मलोकंस
मश्नुते।सर्वेतस्यादृता:धर्म्मा:यस्यैतेत्रयआदृता अनादृतास्तुयस्यैतेसर्वा
स्तस्याफला:क्रिया: यावत्त्रयस्तेजीवेषुतावन्नित्यंसमाचरेत् ॥ तेष्वेव
नित्यंशुश्रूषांकुर्य्यात्प्रियहितेरत: किंचाचार्य्यदेवोभवमातृदेवोभवपि
तृदेवोभवेतिश्रुत्यापितेषांसमान त्वमितिकथंतेषुनतिस्तुत्योर्भेद इति
वाच्यम् ॥ मैवम् ॥ नतिस्तुत्योरेककर्तृत्वादेकोद्देश्यत्वाचनतिपूर्वकंस्त
व: स्तवपूर्विकोनतिर्गुरुष्वेवेतिमातृपित्रोरपिगुरुत्वेतयोरपितादृशव्य
वहार इतिनियमायपृथक्ग्रहणम्तथाचयत्रनमनाक्रियातत्रापिस्तुतिवि
शिष्टस्यग्रहणम् ॥ यत्रस्तवनक्रियातत्रापिविशिष्टस्यस्यग्रहणस्यान्नके
वलस्येतिनकोऽपिभेदबोधकक्रियाभेदइतिभाव: ॥ तत्तस्माद्गुरो: प्र
नुपश्चान्मेभगवद्दत्तस्यतात: तनोतिविस्तारयातिपुत्रपौत्रादिद्वारावंशमि
तिव्युत्पत्या ॥ तनुविस्तारे ॥ इत्यस्मात् ॥ वुतनिश्चयांदीर्घश्च ॥ इतिक्त:
धातोर्दीर्घश्चानुनासिकस्यक्विझलो: क्ङिति ॥ इतिनकारलोप: तातो
जनकोबालानन्द: तस्यतातंजनकंपितरमितियावत् ॥ तातस्तुजनक:
पितेत्यमर: ॥ दयालुंकृपालुंदीनोपरिकृपांकुर्वाणमित्यर्थ: ॥ संभवव्य
भिचाराभ्यामितिन्यायेनगुणवर्णनार्थन्नतुव्यभिचरितदोषवारणार्थम् ॥
गणपतितन्नामानम् ॥ पितामहमित्यर्थ: ॥ तेनैतेस्तौचपुन:सत्साधु
मान्य:अभ्यर्हितोवासत्येसाधौविद्यमानेप्रशस्तेऽभ्यर्हितेचसदित्यमर:॥
सर्वावस्थास्वपिबालावस्थादारभ्यामरणान्तमान्य:पूजनीयश्चेत्यर्थ:॥कदा
पिस्वधर्म्मन्यायहितादेर्नस्खलितइतिभाव: ॥ असौगुरु:सद्गुरु: तस्मि
न्श्रीगोकुलचन्द्रेइत्यर्थ:अग्रंश्रेष्ठंप्रधानंप्रथमंवाअग्रंपुरस्तादुपरिपारिमाणो
स्यचआलम्बनेसमूहेचप्रान्तेचस्यान्नपुंसकमधिकेचप्रधानेचप्रथमे

चाभिधेयवदितिमेदिनी ॥ भक्तंभजतिसेवतिगुरूनितिव्युत्पत्या:॥मति बुद्धिपूजार्थेभ्यश्च ॥ इतिकर्त्तरिक्तः ॥ सेवकमित्यर्थः ॥ इहास्मिंल्लोकेशोभनंचरणंचर:व्यवहार:सजातोऽस्येतिचरित:तंचरित्रमित्यर्थः ॥ शास्त्रपठनपाठनदेवपूजाऽग्रगुरुभक्तिनम्रादिव्यवहारोयस्येतिसुचरितःतमुक्तव्यवहारैः प्रसिद्धमित्यर्थः ॥ शास्त्रेव्याकरणादौ अनुपमम् ॥ येनोपमीयतेतद्रहितमित्यर्थः ॥ असदृशमितिभावअतएवाजय्यंनकेनापिजेतुंशक्यममभगवद्दत्तस्यपितरमजय्यमित्यादिपितरान्तमुत्तरश्लोकस्यंयोजनीयम् ॥ बालाइति ॥ पूर्व:आदि:अन्तेप्रान्ते अन्तोनाशसमीपयोः ॥ अन्तेप्रान्तेऽन्तिकेनाशेस्वरुपेचमनोहरे इतिविश्वः ॥ दिगादित्वाद्यदन्त्यमपि शास्त्री इतिबालपूर्वान्त्यशास्त्री इतिसुचरितंप्रसिद्धंवानैतितेस्ता ॥ ४ ॥

**मू० ममपितरमजय्यंमातरंविष्णुदेवीम् जयतिनिखिललोकेपातिव्रत्त्येनयाताम ॥ नमनामिहकरोति स्वात्मजे ध्यात्मवृत्तिं अविरतपतिसक्तांजन्मदात्रीं चमेस्मिन ॥ ५ ॥**

टी० ममेति ॥ याममभगवद्दत्तस्यमाताजननीजनयित्रीप्रसुर्मातेत्यमरः ॥ पतिव्रतासुचरित्रासुच्चरित्रातुसतीसाध्वीपतिव्रतेत्यमरः ॥ पतिसेवातत्पराय:तस्या भाव:पातिव्रत्यंतेनपातिव्रतधर्म्मेणेत्यर्थः ॥ सचायान्तंसुमुखीयातिपाद्यार्घासनतत्पराव्यजनेनस्वयंकान्तंसेवतेऽञ्जलिना सदानारायणस्वयंदेवोममस्वामीतिनिश्चितादासीशतत्वेऽपिसदाचक्रेदास्यंपतिव्रताआर्त्तार्तेरुदितारुष्टेप्रोषितेमलिनाक्षुषाम्ृतेपतौविशेदग्नौ साध्वीज्ञेयापतिव्रता इतिपद्मपुराणे उक्तम् ॥ सकललोकोत्रिभुवनेजयतिसर्वोत्कर्षेणवर्त्तते तांमातरं अविरतंनिरंतरंपातिसक्तांतत्सेवा

यामव्यवहितां संसक्तेत्वव्यवहितमपदान्तरामित्यपत्यिमरः ॥ संलग्ना मित्यर्थ :॥ ननुपतिव्रताधर्म्मणैवपतिसक्तामितिगतार्थःपुनःतद्ग्रहणंके नचिदपूर्वादृष्टेनकर्म्मणापतिव्रतपरायणापि अहंभाविजन्मन्यपिपति पूजापराभवेयमितिविशेषद्योतनार्थम् ॥ अस्मिल्लोकेमेभगवद्वृत्तस्य जन्मजनिर्जनुर्जननजन्मानिजनिरित्यमरः ॥ दात्रींप्रसवित्रींस्वस्यात्मनः स्वोज्ञातावात्मनीत्यमरस्सकाशात् जःजातःस्वात्मजः आत्मापूर्वकजनेः पंचम्यामजाताविति डः पुत्रः आत्मजस्तनयस्सुनुःसुतःपुत्रः इत्यमरः तदुक्तमू ॥ पुत्रेणलोकान्यजतिसतांकामदुघाह्यियेनरकंपुदितिख्यातंदु खंचनरकंविदुः पुदस्त्रातात् तदापुत्रमिहेच्छतिपरत्रचानन्ताःपुत्रिणो लोकाः पुरुषस्यप्रियेक्षुभाः ॥ हरिवंशे प ०३ अ० ७२ ॥ तस्मिन्नात्मजे उत्पन्नेमयत्यिर्थः ॥ अतधातोः ॥ सातिभ्यांमनिन्मनिणावित्यौणा दिकेनमानिन् ॥ अततिनिरन्तरंव्याप्नोतिसर्वेस्मिन्निति आत्मा इत्यात्म शब्देनयद्यप्यात्मनः परमात्मनोग्रहणंतथापिकोशप्रामाण्यादात्मशब्द स्यदेहादिपरत्वात् आत्मशब्देनात्रेदेहस्यापिग्रहणंतथाचात्मनिशरीरेऽ धिकृतं इत्यध्यात्ममित्यत्रविभक्त्यर्थेऽव्ययम्विभक्तीत्यादिनाऽव्ययीभा वसमासे ॥

(अनश्च) इतिटच्। (नस्तद्धित) इतिटेर्लोपः ॥ अध्यात्ममितितच्चसु क्ष्मदेहः सुक्ष्मंस्यात्कैतवेऽध्यात्मेपुंस्यणौत्रिषुचाल्पके इतिमेदिनी ॥ अध्यात्मेवृत्तिरध्यासोयस्याःसाऽध्यात्मावृत्तिःतां ननुपितृमातृरजःवी र्यादि जातस्थूलपंचभूताद्यवच्छिन्नेदेहेव्यावहारिके इत्यर्थः ॥ पृथि वीवायुराकाशमापोज्योतिश्चपंचमंतेसमेतासहात्मानः शरीरमितिसं ज्ञितम् ॥ अत्रोच्यते आकाशंमरुतोज्योतिरापः पृथ्वीचपंचमीभावाभा वौचकालश्चसर्वभूतेषुपंचसु २ भूतेषुजरायुजादिषुपंचसुपंचात्मकेषुए तेनभावाभावकालानामपिभौतिकत्वमुक्तम् ॥ ननुपंचभ्योभूतेभ्योऽ धिकानिकालदिगात्ममनांसिचत्वारिद्रव्याणिगुणश्चतुर्विंशतिः कर्म्म

सामान्यविशेषसमवायश्चभावपदार्थः सप्तमोऽभावपदार्थश्चेतिकणा
दाःमन्यन्तेतत्कथम् ॥ शरीरस्यैपांचभौतिकत्वंज्ञायतेकिंचसर्वस्यज
गतोऽपिपंचात्मकत्वमितिचेत् ॥ अत्रोच्यते नतावत्कालोनामपदार्था
न्तरमतीतानागतत्वादिव्यवहारहेतुः किंचिदस्ति नूतनत्वपुराणत्वा
दिवत् द्रव्यगताभिरेवातीतत्वादिव्यवस्थाभिः साद्दश्यव्यवहारोपप
त्तेः नापिदिक् आकाशएवसुर्य्योपाधिकी प्राच्यादिकल्पनेत्युपग
मात् ॥ नापिमनस्तस्यैंद्रियत्वेनश्रोत्रादिवद्ग्राह्यसजातीयगुणाश्रयत्व
स्यावश्यंवक्तव्यत्वेनपांचभौतिकत्वात् ॥ पराभिमतमनसस्तुग्राह्यस
जातीयगुणाश्रयत्वदिक्कालवत्नइन्द्रियत्वंयुज्यतेगुणःअपिनाश्रयान्नाति
रिच्यते इतिनपृथक् पदार्थःतथाद्रव्यस्यैवस्वास्थ्यप्रच्युतिःपरिस्पन्दश
त्माऽवस्थाविशेषः कर्म्मेतिनपृथक्पदार्थः तथासत्सादितिव्यवहारवि
षयत्वस्यस्वकल्पस्य सामान्यादिषू सद्भावेप्यनवस्थादिदोषभयात्ते
भ्योव्यावृतं द्रव्यगुणकर्म्मस्वेवानुगतंसामान्यमित्यप्यसत् अधि
सत्वेनैवासत्सादितिव्यवहारोपपत्तौसत्यां अननुगतस्यतस्यकल्पना
याः अनौचित्यात् ॥ नित्यद्रव्यवृतयोऽनन्तविशेषा इत्यभ्युपगम
स्तु एकात्म्ये नित्यद्रव्याणामेवाभावान्निरालम्बनः मानान्तरासिद्धि
श्चसमवायवत् रूपादिकमपिसमवायं विनैवद्रव्येस्थास्यतीतिसमवा
यकल्पनापि अपार्थिका यथाघटःपटान्योन्याभावः ॥ एवंभूतत्वंघटं
संसर्गाभावोऽपिभविष्यति तथाचोक्तम् ॥ भावान्तरमभावोहिकया
चित्तुव्यपेक्षयेति ॥ प्रागभावप्रध्वंसाभावयोस्त्वसत्प्रातियोगिकत्वादेव
सिद्धिः ॥ सद्भ्यामभावोनिरुप्यते इतिन्यायेनतन्निरूपकाभावात् ॥
तस्मादभौतिकः पदार्थ एवनास्ति ॥ इतियुक्तमुक्तम् भावाभावका
लानामपिपंचात्मकत्वम् ॥ यद्यपिशरीरस्यसर्वजगद्वत् भावाभाव
कालाद्यात्मकत्वन्नास्ति तथापिपृथिव्यादिपंचभूतातिरिक्तगुणात्ममन
आद्यात्मकत्वेनयथासंभवमूह्यम ॥ तिस्रः कोट्यर्द्धकोटीचरोमाणिव्य

वहारिके सप्तलक्षाणिकेशा स्युर्नखा प्रोक्तास्तुविंशति द्वाविंशद्दशनाप्रो
क्ता सामान्याद्विनतासुत मांसंपलसहस्रंतुरक्तंपलशतंस्मृतमित्यादि
गरूडपुराणोक्तमनुसंधेयम् लिंगदहेश्चपंचप्राणमनोबुद्धिदशेन्द्रियस
मन्वितम् ॥ अपंचीकृतभूतोत्थंसूक्ष्माङ्गभोगसाधनमिति यद्यपिसू
क्ष्मशरीरंस्थूलशरीरस्यकारणंप्राणाद्यवयवोऽपिस्थूलशरीरस्य( तदुक्तं
व्यासमहर्षिणावेदान्तसुत्रे) (सुक्ष्मंतुतदर्हत्वात्) अनेनसांख्याचर्य्यमत
म्प्रदर्शितम् ॥ सूक्ष्ममिति ॥ सूक्ष्मशरीरमेवतदर्हत्वात् स्थूलशरीरयो
ग्यत्वात् इत्यर्थः ॥ अयमाशयः ॥ शरीरादिसृष्टेःपूर्वंशरीराजीवात्माअ
व्याकृतनामरूपरहित इन्द्रियातीतभूतसूक्ष्मरुपंशरीरमभूदितिक्रियास्थू
लशरीरापेक्षया ॥ तदेवाव्यक्तनाम्नाप्रसिद्धः तदेवविकृतिम्प्राप्यकार्य्य
शरीरंअर्थात्स्थूलशरीरंभवति यस्मिन्शरीरे आत्मापुरुषार्थसाधनेस
मर्थोभवति इत्यव्यक्तप्रधानस्यैवनित्यत्वात्तदध्यासेस्थूलशरीरस्यापि
नित्यत्वमस्तीतिवाच्यम् ॥ अर्थादव्यक्तएवजगतः कारणमित्युक्तम्
नचतदधीनत्वादर्थवदितिसूत्रम ॥ तत्परमकारणब्रह्मणोऽधीनत्वात् ॥
अर्थवत्प्रयोजनवान्यद्यपिनामरूपरहितजीवात्माभूत सूक्ष्माव्यक्तशब्द
वाच्यः प्रधानएवकारणमित्युक्तसूत्रेणसिध्यति तथापितदधीनत्वात् ॥
परमकारणपरब्रह्मणोऽधीनत्वात् सूक्ष्मस्येतिनतस्मिन्नध्यासोयुक्तः ॥
मैवम ॥ तदधिनत्वेननतस्मिन्नित्यत्वंविहन्यते इतितस्मिन्नध्यासोव
स्योयुक्तः ॥ ननुभेदेऽध्यासोऽस्तिशुक्तिरजतवत्कथमत्रभेद सूक्ष्मस्थूल
शरीरयो सूक्ष्मस्योक्तरीत्यास्थूलकारणत्वात् ॥ सूक्ष्मस्यतत्कारणत्वेऽ
पितद्भेदप्रकारमाह ॥ यद्यपिप्राणाद्यवयवस्स्थूलशरीरस्यापितथाप्यपं
चीकृतस्थूलभूतेभ्य मातृपितृरजवीर्य्योत्तिसः कोट्यर्द्धकोटीत्याद्युक्तप्र
कारेणोत्पन्नानिसूक्ष्माणिसूक्ष्मभूतेभ्य उत्पन्नानिनतुव्यावहारिकवत्ति
स्रः कोट्यर्द्धकोटीत्याद्युक्तप्रकारेणोत्पन्नानि इतिपरस्परकाणसामग्रीभे
[illegible]तसूक्ष्मस्थूलशरीरयो शुक्तिरजतवत् भेदात्स्थूलदेहेलिंगशरीराध्या

सः ॥ अध्यासश्चाधिष्ठानेविषमसत्ताकोऽवभासोऽध्यासःयत्रशुक्तौरजत
भ्रम तत्रशुक्तिदेशेरजतस्योत्पत्ति तस्यरजतस्यज्ञानंतथातात्कालिकर
जतत्वंचैतदुभयंसिद्धांतेऽवभासशब्देनोच्यतेसएवाध्यासःव्याकरणरी
त्याचाध्यासपदस्यतथा बभासपदस्यविषयः तथाज्ञानमितिद्वौवाच्यौ
अर्थाध्यासज्ञानाध्यासभेदात् ॥ अध्यासोद्विविध ॥ अतएवार्थाध्या
सो नेकप्रकारकुत्राचित्सम्बन्धस्यैवकुत्राचित्संबन्धविशिष्टसम्बन्धिनः
कुत्रचित्केवलधर्म्मस्यकुत्रचिद्धर्म्मविशिष्टधर्म्मिणः कुत्राचिदन्योन्या
ध्यासः कुत्रचिदन्यतराध्यासः॥अन्यतराध्यासस्तुद्विविधसः॥एकःआ
त्मन्यनात्माध्यासः ॥ द्वितीयोऽनात्मन्यात्माध्यासः ॥ एतद्रीत्याध्याऽ
सोऽनेकविधः॥यत्ररज्जौसर्पप्रतीतिःतत्रापिदमाकारबृत्यवच्छिन्नचेतना
भिन्नरज्ज्ववच्छिन्नचेतनसर्पस्याधिष्ठानंरज्जुः तच्चेतनस्यपरमार्थसत्ता
स्ति अथवापरमार्थसत्तायाः उपाधिरज्जुरितिव्यवहारात् रज्ज्वाच्छिन्न
चैतन्यव्यध्यावहारिकसत्तास्त्युभयथासर्पस्यतज्ज्ञानस्याचप्रातिभासि
कसत्तासत्वात् अधिष्ठानसत्तायाः विषमसत्तावान्अवभासः सर्पस्त
थातज्ज्ञानमस्ति अतएवोभावध्यासावभासशब्देनोच्येते ॥ ज्ञानंज्ञान
विषयश्चापि अवभासशब्देनोच्यते एतद्रीत्यासर्वत्राध्यासस्याधि
ष्ठानंचेतनंतदाधिष्ठानस्यपरमसत्ता तथाऽध्यस्तस्यप्रातिभासिकसत्ता
इत्यधिष्ठानाद्विषमसत्तावानवभासः ॥ ज्ञानंतद्विषयश्चसएषएव ॥ ननु
शुक्तिरजसोःप्रतीतरूपस्यारूप्यात् शुक्तौरजतभ्रमेणरजताध्यासःसू
क्ष्मस्थूलशरीरयोः सूक्ष्मस्थूलकारणमात्रभेदेऽप्यन्यकारणैकत्वेसारू
प्याभावात्कथमध्यासः स्थूलशरीरेसूक्ष्मस्येतिवाच्यम् ॥ नचभ्रमेण
सारूप्याच्चेतिकारणेनाध्यासोभवतिकिन्तुयथामूर्त्तौदेवताध्यासेनस्वा
भीष्टकार्य्याणिसंपादयन्तिभक्ताः (तदुक्तंश्रीकृष्णपर्वतसंवादेहरिवंशे
२ प० ७ अ०) त्वत्तोऽश्मभिश्चप्रतिमांकारयित्वाहिभक्तितः सुश्रूष
न्तियेनित्यंममयास्यन्तितेगतिम् ॥ १२ ॥

इतितंपर्वतंकृष्णोवरदोऽनुग्रहीतवान् तदाप्रवृतिदेवेशस्तत्रसन्निहितोऽच्युतः ॥ ५३ ॥ पाषाणैःप्रतिमांतातकारयित्वाचकौरव शुश्रूषन्तिकृतात्मानोविष्णुलोकाभिकाङ्क्षिणः ॥ ५४ ॥ ननुपाषाणादिनिर्मितजडमूर्त्तौदेवताध्यासस्त्वेऽपि जडचैतन्ययोरत्यन्तभेदात् कथंचेतनायाः आविर्भावः इति चेच्छृणु, सच्चिदानन्दरूपंसत्तादिशक्तिमद्वाब्रह्मइत्युभयमतेऽपिब्रह्मणः सर्वस्यजगतोनैयायिकनयेनिमित्तकारणत्वेऽपिवेदान्तनये उपादानकारणत्वेन सर्वत्रानुस्यूतत्वात् घटेकपाल इवसर्वत्रविद्यमानत्वाज्जडेऽपि आविर्भावो भवति अन्यथासत्त्वांशेनसर्वत्रव्यापकत्वेचिदंशेनजीवेचिदानन्दांशेनपरमयोगिज्ञानिनोश्चेतिरीत्यासर्वत्रव्यापकत्वाभावाज्जीववत् ॥ ब्रह्मत्वव्याघातस्यादतः सर्वांशेनसर्वत्रजडचेतनवस्तुषुव्यापकत्वमस्ति, नहिकस्यां चिच्छुतावपि एकैकांशेनैकैकस्मिन्वस्तुनिव्यापकत्वमित्युक्तंकिन्तुसर्वांशेन तच्चसर्वङ्खल्विदंब्रह्मपुरुषएवेदँ सर्वंयद्भूतंयच्चभाव्यामित्यादिश्रुतिभिर्बहुधागीतंपरंचचेतनानन्दांशस्यजीवोयत्राध्यस्यतितत्रैवतयोराविर्भावः ॥ यथाकाष्ठादिषुसर्वत्राग्निसत्त्वेऽपिमन्थनंविनानाविर्भावः ॥ सचापियोग मार्गेणज्ञानेनवेत्यन्यत् उभयत्रब्रह्मचर्य्यादिना ( तदुक्तम् ) मुक्तोपनिषदि 'सत्येनलभ्यस्तपसाह्येष आत्मासम्यक्ज्ञानेनब्रह्मचर्य्येणनित्यमन्तः शरीरे ज्योतिर्मयोहिशुभ्रोयंपश्यन्तियतयःक्षीणदोषाः' किंचकठोपनिषदि 'एषुसर्वेषुभूतेषुगूढात्मानप्रकाशतेदृश्यतेत्वग्रयाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः' एतेन मूर्तौकथंनवस्त्रादीन् चौरादिभ्योरक्षतीतिप्रवादोनिरस्तः नहितेतत्रचेतनांशमध्यस्यन्तीतिभावः ॥ ईश्वरस्याद्वितीयस्यशुद्धस्यच ममममेदमितिममत्वांशस्यवासनायाभावाद्धोरञ्जौयाश्चज्ञात्वाऽपिनपरिहर्तृत्वम् यथाऽऽधुनिकोऽपीश्वरात्यन्तासक्तनिरन्तरभक्तिमान्सात्त्विकीशुद्धान्तःकरणःयोगेन ज्ञानेनचममतांपरित्यज्यवस्तुहर्तारंदृष्ट्वाऽपिनपरिहरति अयम्भावःअग्न्यर्कतोयशालिग्रामप्रतिमादिषुस्थूलालम्बनेष्वैकाग्र्येणाऽऽदरनैरन्तर्य्यदीर्घ

कालोपोद्बलितांदृष्टिंदत्वोपासकस्याग्न्यादीनांचेतनं दृष्टिगोचरं भवातितत्र जडमध्यस्तंरज्वामिवसर्पःसः यथाचिरंनिरीक्षमाणोलीयतेरज्जुश्चप्रकाशते तद्वदिहाप्यग्न्यादीनांतीव्राभिनिवेशेननिरीक्ष्यमाणानांजाड्यंलीयते चैतन्यंचप्रकाशते किंचप्रथमंसमाधानास्यप्रागनुष्ठितयोगिनः आदौविचाराख्यंध्यानंविवेकाख्यंवितर्काख्यंवोपजायते अधिकारीभेदेन तथाहि मध्यमानांसूक्ष्मेमनःकल्पितेपीताम्बरादिविग्रहंचेतसः प्रणिधानंविचारः ॥ सोऽपिद्विविधः ॥ सविचारानिर्विचारभेदात् ॥ तत्रयथाशब्दतदर्थोल्लेखकभावनाप्रवर्त्ततेसआद्यः अथमेवस्थूलालम्बनस्यवितर्कस्यसवितर्कस्यनिर्वितर्काख्यस्यद्वैविधेप्रकारभेदोऽधमाधिकारियोग्यः ॥ ननुवितर्कोविचारोवामानसिकीभौतिकीवामूर्त्तिरेवावलम्बनंतस्याश्चध्यानेनकीटभृंगवत् सारूप्यमेवप्राप्यं नतुकैवल्यमिति ॥ तावनुपायावितिचेत् सत्यं द्विविधंध्यानं भावना प्रणिधानं तत्राद्यं सिद्धं कल्पितंवा विषयमधिकृत्यप्रवर्त्तते नवस्तुतत्वमवश्यमपेक्षते ॥ द्वितीयंतु यथागृह्यमाणेमणौपरोपदिष्टस्वाज्ञाततद्गतविशेषावगतये तदेवचक्षुर्यत्नेनप्रणिधीयते इतिप्रणिधानंवस्तुतत्वविषयं तत्रतथास्फटिकस्स्वतःशुद्धोजपाकुसुमसान्निध्यात् ॥ मध्यमस्यतत्रैवरक्तस्स्फटिकः इत्यध्यासः ॥ अधमस्यस्फटिकांशस्यप्रमोषेणतत्रैवपद्मरागत्वाध्यासः ॥ तत्रैवमूढस्यचन्द्रिकायां इन्द्रनीलत्वाध्यासः ॥ एवं चिदात्मास्वतःशुद्ध :मायासान्निध्यादीशःतत्रैवब्रह्मप्रमोषेसतिअविद्ययासूत्रात्माध्यासः ॥ तत्राप्यविद्याप्राबल्येसतिविराडध्यासः ॥ तत्रवस्तुनिचित्तंप्रणिधित्सतःक्रमेणोत्तरोत्तराध्यासनिवृत्तौपूर्वपूर्वाध्यासोऽवतिष्ठते॥सर्वानात्मज्ञाननिवृतौस्फटिकमणिवत् ॥ अनुपाधि आत्मातत्वंप्रकाशते ॥ तत्रविचारमूर्त्याकारतांनीतेचित्तेमूर्त्तेरेकैकावयवत्यागेनस्मितमात्रम् ॥ पदनखमात्रंवाभावयेत् ॥ ततस्तदपित्यक्तागुरूक्तयुक्त्याविराजिमनोधारयेत् ॥ तत उक्तक्रमेणनिर्गुणप्रतिपत्तिः ॥ तथावितर्कालम्बने स्थूलप्रतिमायां

प्रणिधीयमानंचित्तंतत्वोपगमम्भवातितथाहिप्रतिमायांविराड्रूपेचेतनेपुंसि स्थाण्डवदध्यस्तत्वेचेतनेग्रहत्तांगतायांन्तत्वंचैतन्यमेव तद्यथा तीव्राभिनिवेशेननिरीक्ष्यमाणं शुक्तिरजतंतिरोधीयते शुक्तिश्चप्रकाशते एवमीश्वरत्वेनचिंतमानायाःमूर्त्तेर्जडत्वं तिरोधीयतेचैतन्यमाविर्भवति अतएववाणादयःस्वाराध्यैः शिवादिभिः सहव्यवहरन्तीतिबहुलमुपाख्यायते तथाच मूर्त्तेरपितत्वंविश्वरूपमेव तन्निरीक्षणेतदेवविश्वरूपमाविर्भवति यदपश्यद्यशोदाकृष्णमुखे (तदुक्तं श्रीमद्भागवते) खंरोदसीज्योतिरनीकमाशाःसूर्य्येन्दुवन्हिश्वसनांबुधींश्च द्वीपान्नगास्तद्दुहितृर्वनानिभूतानियानिस्थिरजंगमानि ॥१॥ सावीक्ष्यविश्वंसहसाराजन्संजातवेपथुः सम्मील्य मृगशावाक्षीनेत्रेआसीत्सुविस्मितायच्चार्जुनः॥कृष्णशरीरेतदुक्तंगीतायाम्॥ एवमुक्त्वाततोराजन्महायोगेश्वरोहरिः ॥ दर्शयामासपार्थायपरमंरूपमैश्वरम् ॥ १ ॥ अनेकवक्त्रनयनमनेकाद्भुतदर्शनः ॥ अनेकदिव्याभरणंदिव्यानेकोद्युतायुधम् ॥ दिव्यमाल्याम्बरधरंदिव्यगन्धानुलेपनं सर्वाश्चर्य्यमयंदेवमनन्तंविश्वतोमुखमित्यादि ॥ तदिदंवितर्कजंप्रत्यक्षं तच्चश्रुतानुमानयोर्बीजमिति तथानिर्विचारपरिपाके सार्वज्ञंसूत्रितम् ॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ऋतम्भराइति तत्र प्रज्ञेत्यादिना ततः पुनरुक्तक्रमेणनिर्गुणप्रतिपत्तिः यत्र यदादेहाविस्मरणेन बाह्यमूर्त्याकारं चेतः सर्वात्मनाभवतितदा भृंगीभूतस्यकीटस्य कीटभावइवास्य जीवभावोनिवर्त्तते केवलमूर्त्याकारोभवति सेयंमहाविदेहानामधारणा ॥ यांप्रकृत्यसूत्रितम् ॥ बहिरकल्पितावृत्तिर्महाविदेहा ॥ तत्संयमात्प्रकाशावरणक्षयः इतियोगदर्शनम् ॥ उक्तौविचारविवेकौ व्यक्तालम्बनौ मध्यमाधमयोग्यौ अव्यक्तालम्बनावपिद्वौसानन्दसस्मितौ उत्तमात्युत्तमयोग्यौ तत्रगुरूक्तयुक्त्या व्यक्तेचित्तं धास्यतोऽत्यन्तंदेहविस्मरणेसति अहमेवेदं सर्वोऽस्मि इतिश्रुतिप्रसिद्धाः सर्वात्म्यसर्वकाम्यादयः ईश्वरगुणाः प्रतिष्ठन्ति उत्तम-

स्यसोऽयंसानन्दः तेषां प्रविलापनेनास्मिता मात्रावशिष्यतेसोऽयंसास्मि-
तः सत्वपुरुषान्यताख्यातिसंज्ञोहृदयग्रन्थिभेदोऽत्रविवेकशब्देनोच्यते स-
चात्युत्तमवैराग्यवतोनष्टाशेष भोगवासनस्यैश्वर्य्याविर्भवतीतिमुख्यसान-
न्दस्याप्यत्रैवान्तर्भावंविवक्षता त्रितयमेवोक्तम् ॥ तदुक्तंभारते ॥ विचार-
श्चविवेकश्चवितर्कश्चोपजायते मुनेःसमादधानस्य प्रथमं ध्यानमादितः ॥
तदेतदव्यक्तमालम्बनंनिद्रादौजागरस्यान्ते योभाव उपजायते तम्भाव-
म्भावयेत्प्राज्ञः सुखमक्षय्यमश्नुते इतिशास्त्रेस्पष्टमुक्तमपिगुरूपदेशंविना-
दुर्गमक्लेशसाध्यंचदेहाभिमानवतां यथोक्तम् ॥ क्लेशोऽधिकतरन्तेषामव्य-
क्ताव्यक्तचेतसामिति ॥ एतेनप्राणालंबनाव्यक्ताव्यक्तोभयालम्बनाज्ञेया
एतासु चतसृष्वपियोगविधासु वितर्कस्थूलसूक्ष्म कारणचैतन्यैरनुगतो-
विचारः ॥ सूक्ष्मकारणचैतन्यैस्त्रिभिरेवविवेकः ॥ कारणचैतन्याभ्यामेव
निर्बीजस्तुकैवल्यरूपः फलभूतइतिसाधनरूपेष्वेषुनगणितः जडेचैतन्या-
विर्भावेदृष्टान्तमिति यथासक्तानिर्णेजकः सुवर्णपर्य्यालोचनयाखारिपरि-
माणं सक्तामादायशनैः शनैः तांनिर्णिज्यसक्तानिष्ठां तत्सुवर्णसूक्ष्मकणिकां
चक्षुषानिर्वच्छिन्नविषयीकृत्यप्रथमतः तन्निष्ठतेजविशेषं ज्ञात्वैवतांसूक्ष्म-
कणिकांनिस्सरति एवमेवस्थूलाकारपाषाणादिनिर्मितविष्णवादिमूर्तिमी-
श्वरत्वेनचिन्त्यमानांशनेः शनैः क्रमेणमनसाऽनवच्छिन्नविषयीकृत्यतन्निष्ठं
जडत्वंतिरोधीयते चैतन्यमाविर्भवति इतिसंभावनयाचिन्त्यमानस्य हृद्या
श्रिततज्जडत्वंतिरोधीयते चैतन्यमाविर्भवति ब्रह्मसत्तादेस्सर्वत्रविद्यमान-
त्वात् ॥ अतएवगीतायामुक्तम् ॥ ओमित्येकाक्षरंब्रह्मव्याहरन्मामनुस्स-
रन् यःप्रयातित्यजंदेहंसयाति परमांगतिमिति ॥ सर्वत्रसक्तायांसुवर्णक-
णिकायाः विद्यमानत्वेऽपियत्सक्तायाः निर्णेजनंकरोतिसातितत्रैवकणिका-
लाभोभवतिसोऽपिनिर्णेजकस्यैवमेवेश्वरचैतन्यस्यसर्वत्रविद्यमानत्वे ऽपि
यस्यांमूर्त्तौचिन्तकः चैतन्यंचिंततितत्रैवतदाविर्भावः सोऽपिचिंतक-

स्यैवयत्रभ्रमः तत्रैवनिश्चयः ॥ यथाशुक्तौरजतत्वप्रकाशत्वयोर्भ्रमः तत्रैव-
निश्चयः किंच यथातक्षकः चित्रलेखकश्चप्रथमस्थूलकाष्ठेस्थूलाचित्राकारेण-
स्थूलांमूर्तिचित्राकारंवानिर्मिमीते एवं क्रमशः बहुकालाभ्यासेनलघुकाष्ठे-
ऽपिसूक्ष्माकारेणाति सूक्ष्मांपूर्वापेक्षयाऽनुपमामतिविचित्रां मूर्तिचित्राका-
रंवालिखते नतुपाषाणादिषुचित्रनिर्माणेवारंवारचिरकालाभ्यासेनपाषा
णादिवज्जडत्वंप्राप्यजडएवस्यात् एवंचपाषाणादिमूर्त्तिषु इश्वरसम्भाव-
नयाद्दढीभूतमनसिचैतन्यमाविर्भवतिनतद्गतजडत्वंयन्निष्ठासम्भावनातदे-
वप्रकाशते यथा प्रल्हादस्यस्तम्भेतदुक्तम् ॥ यस्त्वयामन्दभाग्योक्तो
मदन्योजगदीश्वरः ॥ क्वासौयदिससर्वत्रकस्मात्स्तम्भेनदृश्यते ॥ १३ ॥
सोहंविकत्थमानस्यशिरः कायाद्धरामिते ॥ गोपायेत हरिस्त्वाऽद्यस्ते-
शरणमीप्सितम् ॥ १४ ॥ एवंदुरुक्तैर्मुहुरर्दयन्रुषासुतंमहाभागवतं-
महासुरः खड्गम्प्रगृह्योत्पतितोवरासनात्स्तम्भंतताडातिवलः स्वमु-
ष्टिना ॥ १५ ॥ तदैवतस्मिन्निनयोऽतिभीषणोबभूवयेनाण्डकटाहमस्फु-
टत् यंवैस्वधिष्णोपगतंत्वजादयः श्रुत्वास्वधामाप्ययमंगमेनिरे ॥ १६ ॥
सविक्रमन्पुत्रवधेप्सुरोजसानिशम्यनिह्रादमपूर्वमद्भुतम् अन्तः सभा-
यांनददर्शतत्पदं वितत्रसुर्येनसुरारियूथपाः ॥ १७ ॥ सत्यंविधातुंनिजभृ-
त्यभाषितं व्याप्तिंचभूतेष्वखिलेषुचात्मनः अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भेसभायांनमृगंनमानुषम् ॥ १८ ॥ तदुक्तं योगदर्शने ॥ यथाभिम-
तध्यानाद्वा ॥ यमिच्छतिचित्तंयस्मिन्प्रीतिरस्तितत् ध्यानङ्कुर्वीदित्यर्थः॥
यथाविद्याभ्यासकारीछात्रः ज्ञानसंभावनया जडाक्षरनिर्मितज्ञा
नशास्त्रेष्वभ्यस्यज्ञानमेवाप्नोतिलेखनसौंदर्य्यसम्भावनयातमेवाप्नोतिन -
तुज्ञानं उभयसंभावनयाचोभयमेव यदिजडपाषाणादिष्वासक्तं मनोज-
डमेव स्यात्तदातन्मूर्त्तिस्मरणावरेज्ञानाकारेणपरिणतायाः मूर्त्तेर्मोनस प्रत्य
क्षनस्यात् तद्विषयकमनसोजडत्वात् किंच पुरुषः वटस्थभूतमजानन्

तदधोगच्छन्नस्मान्नबिभेति एवंपरैरस्मिन्वटेभूतोऽस्तित्रासयतिपीडयति चलोकान्नित्युपदिष्टस्तस्मादेवबिभ्यन्तदधोनगच्छति भूतस्तुतस्मिनपि-कालेतम्पश्यत्येवास्ति चतथापितन्मनसितत्स्थभूतस्यसम्भावनायाःअभा-वादेवनबिभेति किंचायसिचैतन्यं यतोऽस्यतोक्रियावदपि चंपकाख्य-पाषाणसन्निधिमन्तरानविचलतितत्सन्निधावेवचलनात्मकंकर्म्मायसिजडे ऽभूतपूर्वात्मकमस्त्येवैवमेव पाषाणादिमूर्त्तौयच्चैतन्यंतदपिनान्यपाषाणस-न्निधौतत्रचमत्कृतेरभावोयथाचमत्कृत्याऽन्वर्थितं चंपकाख्यपाषाणं तच्च-नैर्मल्यगुणन्नोमृदोपलिप्तं मृदोपलिप्तस्यताद्दशचमत्कृतेरभावान्नतत्स-न्निधावेवायसिचैतन्यं प्रादुर्भावः ॥ एवंसदाचारेणश्रद्धयाचतीर्थस्ना-नजपतपआदिनाविष्णुपूजादौद्दढभक्त्याशुद्धान्तःकरणेन चंपकवच्चम-त्कृत्याविष्टस्यमूर्त्तौजडत्वंनपश्यति चैतन्यस्यैवप्रादुर्भावः नान्यस्योक्तध-र्म्महीनस्येत्यलम् ॥ किंचायसिअग्निवायुजलचलनात्मकपदार्थम्विनापि-तस्यकेनचित्संस्कारेणसूक्ष्मतांकृत्वा चक्राकारेतस्मिश्चलनात्मकशक्त्या घटीयन्त्रप्रसिद्धिः तत्रापिस्थूलवर्त्तुलाकाराश्रयं विना चलनात्मिकाश-क्तिर्नोत्पद्यते एवंमूर्त्याकाराश्रयंविनाजडेचेतनाद्यंशस्याविर्भावोनभवति यथाऽतिशयसंस्कारंविनास्थूलाकारे आयसिचलनात्मिकाशक्तिर्नोत्पद्यते॥ सूक्ष्मे उत्पद्यतेसोऽपिसंभावनया ॥ एतेनोक्तप्रकारेण आधुनिकानांजड मूर्त्तौपूजनादिनाजडएवस्यादित्यपवादोऽपिनिरस्तो यदीश्वरत्वेनचिंतित मूर्त्तौ ईश्वरचेतनस्याविर्भावोभवति तदातेनरूपेणोक्त प्रतिमादौपुष्पादिना पूजनेऽपिकाहानिः अत्र मंत्रभागवेदस्यैवप्रामाणिकत्वमतेऽपितदतिरिक्त ब्राह्मणेतिहासपुराणादीनामपिवेदमूलकत्वाद्वेदत्वेतेषामप्यत्रप्रामाण्यम् ब्रा-ह्मणादीनांवेदमूलकत्वेप्रामाण्यम् ॥ यानीहागमशास्त्राणियाश्चकाश्चित्प्र-वृतयः तानिवेदंपुरस्कृत्यप्रवृत्तानियथाक्रमम् ॥ महाभा० आनु० प० १२२ अ० ॥ किंचन्यायभाष्यकारवात्स्यायनेनसमारोपादात्मन्यप्रतिषेधः ॥

अध्याय ४ आ० १ सू० ६२ ॥ इतिसूत्रेप्रमाणेनखलुब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते इत्यादिनाब्राह्मणभागवचने इतिहासपुराणं पंचमोवेदानांवेदं इतिहासपुराणाभ्यांवेदार्थसमुपबृंहयेत् बिभेत्यल्पश्रुताद्वेदोमामयम्प्रहरिष्यतीतिकिंचवेदार्थश्रवणेबुद्धिः पुराणश्रवणेतथा सत्संगेऽपिहियस्यास्तिसबंद्योऽस्माभिरुत्तमः ॥ भागव० ५ स्कन्धे ॥ किंचमहाभाष्ये १ अ० १ आ० ॥ सप्तद्वीपावसुमतीत्याद्यारभ्यवाक्येवाक्यमिति हासः पुराणवैद्यकमित्येतावाच्छब्दप्रयोगविषयइत्यादिवचनैरपि-तथाचव्यासंप्रतिभगवतःकथनं भारतेमोक्षप० २० अ० २ ॥ जन्मकर्मतपोयोगास्तयोस्तवचपुष्कलाः ताभ्यांलिंगेऽर्चितोदेवः प्रतिमायांयुगेयुगे ९३ सभगवान्देववत्प्राज्ञोज्ञात्वाभवमयंजगत् अवाकर्षत्वमात्मानंनियमैस्तत्प्रियेच्छया ईजवास्त्वंजपैर्होमैरुपहारैश्चमानद सतथापूज्यमानस्तेपूर्वदेहेष्वतूतुषत् ॥ पुष्कलांश्चवरान्प्रादात्तवविद्वन्हृदिस्थितान् ( लिङ्ग ) सूक्ष्मशरीरे ( अर्चायां ) प्रतिमायां ॥ अयंभावः चतुर्णासन्निधानेनयत्फलंतदशाश्वतं द्वयोस्तुसन्निधानेनशाश्वतंप्राप्यतेपदमितिदक्षस्मृतिः प्रतिमायांशिवार्चकस्यात्ममनइन्द्रियविषयाणांसानिध्यमस्ति ॥ लिंगेतदर्चकस्यतु आत्ममनसोर्द्वयोरेवसान्निध्यमस्तीतितयोरर्चकत्वसाम्येऽपिप्रकारभेदात्फलभेदभागिति किंच सर्वरूपंभवंज्ञात्वालिंगेयोऽर्चयतिप्रभुम् ॥ आत्मयोगाश्चतस्मिन्वैशास्त्रयोगाश्चशाश्वताः ॥ ९४ ॥ एवंदेवाःयजन्तोहि सिद्धाश्चपरमर्षयः प्रार्थयंतेपरेलोकेस्थाणुमेकंससर्वकृत् कृष्णएवहियष्टव्योयज्ञैश्चैवसनातनः ॥ ९६ ॥ सर्वभूतभवंज्ञात्वालिङ्गमर्चतियःप्रभोः तस्मिन्नभ्यधिकांप्रीतिं करोतिवृषभध्वजइति ॥ किंचमहाभारते अरण्यप०अ० ६५ ॥ अर्चितानिचसर्वाणिदेवतायतनानिच नूनंनपूजितोऽस्मा-

१ नरनारायणयोः

भिर्मणिभद्रोमहायशाः तथायक्षाधिपः श्रीमान्नवैवैश्रवणःप्रभुः नपूजा विघ्नकर्तृणामथवाप्रथमंकृताइति ॥ किंचवाल्मीकीरामायणेउत्तरकाण्डे यत्रयत्रप्रयातिस्मरावणोराक्षसेश्वरः जाम्बूनदमयंलिङ्गंतत्रतत्रस्मनीयते वालुकावेदिमध्येतुतल्लिङ्गंस्थाप्यरावणः अर्चयामासगन्धैश्चपुष्पैश्चामृतग-न्धिभिरिति किंचभगवद्गीतायां ९ अ० ॥ पत्रंपुष्पंफलंतोयंयोमेभक्त्या प्रयच्छति तदहंभक्त्युपहृतमश्नामि प्रयतात्मनः ॥ अत्रेतिहासपुराणस्मृतीनांमूलसत्वेऽपिसंशयाभावस्तथापियेषांमंत्रब्राह्मणयोरेव प्रामाणिकत्वमितितेषांदृढनिश्चयार्थंमंत्रब्राह्मणावपि प्रतिपादितौस्तः ॥ तदुक्तंवेदे । अथाकारचिंन्तनन्देवानांपुरुषविधाःस्युरितिनिरुक्तम् तंयथायथोपासतेतदेव भवतीति । शारीरकस्थाश्रुतिः पाषाणमयविग्रहे पूजापुनर्भोगकरीमुमुक्षोरिति सामवेदमैत्रायणीयशाखास्था योदूर्वाङ्कुरैर्यजतिसवैश्रवणोपमोभवति महानद्यांप्रतिमासन्निधौजप्त्वासिद्ध मन्त्रोभवतीति अथर्वशीर्षणश्रुतिः एतत्सोमस्य सूर्य्यस्य वाप्रतिमालिङ्गंस्थापयतिपाणिमन्त्रंपवित्रमितितैतरीयोपानिषदि लिङ्गस्थापनप्रतिपादिकाश्रुतिः तत्रार्चितोऽहंसाक्षात्त्रिशाखैर्विल्वदलैर्द्भिस्त्रैवायोभिषिच्यपूजयेदितिवृहज्जाबालोपनिषत्स्थादिश्रुतिभिर्यन्त्रमूर्त्यर्चनमवरुद्धम् ॥ एह्यश्मानमातिष्ठाऽश्माभवतुतेतनुःकृण्वंतुविश्वेदेवाः आयुष्टेशरदःशतम् अथर्वकार ॥ अनु १३ ॥ मंत्र ४ ॥ हेदेवत्वंएहिआगच्छ अश्मानंपाषाणंमूर्त्तिमातिष्ठ अश्मापाषाणमूर्त्तिस्तेतनुर्भवतुविश्वेदेवास्ते आयुः शरदः शतम् । कृण्वन्तु । कुर्वन्तु ॥ नन्वीश्वरस्य सर्वथासर्वत्रसर्वकालेऽपिविद्यमानत्वात् पिष्टपेषणवत् पूर्वोक्तमंत्रार्थप्रतिपादनप्रयोजनस्यायुक्तत्वंस्यादितिचेन्न सर्वंखल्विदंब्रह्म पुरुषएवेदं सर्वं यद्भूतंयच्चभाव्यम् इतिश्रुत्यासर्वस्यजगतः तद्रूपत्वेऽपिपुनः यस्यापः शरीरंयस्यपृथिवीशरीरामितिविशेषप्रतिपादनंतदुक्तेऽपि अश्माचमेमृत्तिकाचमेगिरियश्चमेपर्वताश्चमेसिक्ताश्चमे इत्यादिकथनमुक्तश्रुत्यासर्वस्यत

द्रूपत्वेऽपि एकदेशपृथिव्यादीनां तद्रूपत्वंनस्यात् इतिशंकानिरासार्थं यथा वृक्षसमुदायोवनमित्युक्तेऽपिवृक्षस्य वनत्वंनस्यात् यथावाअंगुल्याद्यवय वविशिष्टस्यशरीरत्वेऽपितदवयवाङ्गुल्यादिषु शरीरत्वंनकिन्तुतदेकदेशत्वं एवमत्रसर्वत्रसर्वरूपेणव्यापकत्वेऽपिएकदेशपाषाणादौसर्वरूपेणव्यापक त्वंनेतिशंकानिरासार्थमित्युक्तम् ॥ ननुसर्वत्रैकदेशेवासर्वरूपेणसत्वेऽपि विश्वेदेवाः कृण्वन्तुशरदः शतमित्युक्तेविधिवाक्यस्यासंगतिस्स्यादितिवा च्यम् नैवम् ॥ तस्यतत्रसत्वेऽपिभैरवहनुमानादीनामावाहनार्थं विधिवा क्यस्यप्रयोजनेऽपि मेघोजलेऽपिवर्षतिस्थलेऽपिवर्षतीतिपर्ज्जन्यवन्मंत्रप्रवृ त्त्यातत्रापिप्रयोजनमस्ति यथापाणिनिसूत्राणाम्प्रवृत्तिः किंचमंत्राणांसर्वा र्थत्वे एकनिमित्तकसर्वकार्य्यप्रवृत्तौवेदत्वहानिस्यात् ॥ किंचेश्वरबुद्ध्या प्रतिमादिपूजनेऽऽवाहनंविनापि अन्योपचारेणपूजनेकृतेऽपिषोडशोपचारे त्यादि अङ्गविकलेनास्माकमपूर्वादृष्टहानिस्स्यात् ॥ यथाघट्यादियन्त्राणां कस्यचिदङ्गविकलेऽपिपूर्णकार्य्यंनस्यात् ॥ यथाचन्द्रमसः कलान्यूनतया पूर्णचन्द्रिकानस्यात् ॥ मूर्तिनिर्माणाय तां वल्मीकीयांपरिगृह्णाति । कां० १४ । अ० १ । ब्रा० २ । कं० १० । मूर्तिनिर्माणाय वराहविहतांमृदपरि गृह्णाति श० १४ । १ । २ । ११ ॥ प्राणान्नेवास्मिन्नेतद्दधाति इतिशत पथब्राह्मणंमधुमधुमधु ॥ इत्यादि यजुर्वेदमंत्राणि प्राणप्रतिष्ठाप्रकरणेच किंचऋग्वेदउत्क्रमप्रकरणे यत्रदेवोजगन्नाथोदक्षिणस्थमहोदधे बलभद्रः सुभद्राचतत्रमाममृतंकृधि इतिनित्यंस्नात्वाशुचिः कुर्य्याद्देवतार्षिपितृतर्प णम् ॥ देवताभ्यर्चनंचैवसमिधाधानमेवच मनुः । अ० २ ॥ श्लो १७६ ॥ येकेचिदेवंप्रवदन्ति जैनावसरेप्रवृत्तेयम्पूजातत्संदेहनिवृत्तिपूर्वकसन्तोषा र्थमहाभारतशान्तिपर्वणीयः वैशंपायनजनमेजयपूर्वपक्षोत्तररूपः इति हासः ॥ जनमेजयउवाच ॥ अहोह्येकांतिनः सर्वान्प्रीणातिभगवान्हरिः विधिप्रयुक्तांपूजांचगृह्णातिभगवान्स्वयम् ॥ १ ॥ येतुदग्धेन्दनालो

केपुण्यपापविवर्जिताः तेषांत्वयाभिनिर्दिष्टाः पारंपर्य्यागताःगतिः ॥ २ ॥
षतुर्थ्याचैवतेगत्यांगच्छन्तिपुरुषोत्तमम् एकांतिनस्तुपुरुषाः गच्छन्ति
पुरुषोत्तमम् ॥ ३ ॥ नूनमेकांतधर्म्मोऽयंश्रेष्ठोनारायणः प्रियः
अगत्वागतयस्तिस्रोनियच्छंत्यव्ययंहरिम् ॥ ४ ॥ सहोपनिषदान्वे
दान्येविप्राः सम्यगाश्रिताः पठन्तिविधिमास्थाययेचापियतिधर्म्मिणः
॥ ५ ॥ तेभ्योविशिष्टंजानामिगतिमेकांतिनांनृणाम् । केनैषधर्म्मः
कथितोदेवेन ऋषिणापिवा ॥ ६ ॥ एकांतिनांचकाचर्य्याकदाचो
त्पादिताविभो एतन्मेसंशयंछिन्धिपरंकौतूहलंहिमे ॥ ७ ॥ वैशंपायन
उवाच ॥ कुरुपांडवयोर्मृधे अर्जुनं प्रतिद्वैगती उक्तेतन्मध्येगह्नः एषः
मार्गः सामवेदसम्मतः पुरैवादियुगेकृतः भगवतास्वयमेवमहादेवेनधा
र्य्यते एतदर्थम्पार्थेनपृष्टोनारदः ऋषिमध्येयदाहतच्छृणु जनमेजयम्प्रति
सामवेदोक्तंतत्वमसीतियथाधिकारिणः सद्यः ज्ञानजनकः ॥ एवंवैवैष्णव
धर्म्मोपिशमादिमतांसद्यः कैवल्यहेतुरित्यर्थः ॥ तथाचयोगशास्त्रेतीव्रवै
राग्यवतामासन्नसमाधिलाभंप्रसुत्यमृदुमध्याधिमात्रत्वंततोऽपिविशेष इति
मृदुतीव्रातितीव्रवैराग्यवतामासन्न आसन्नतरः आसन्नतमःसमाधिलाभः
ईश्वरप्रणिधानाद्वा इतीश्वरप्रणिधानस्यसर्वाधिष्ठितत्वमुच्यते महादेवेन य
दासीन्मानसंजन्मनारायणमुखोद्गते ब्रह्मणः पृथिवीपालतदा नारायणः
स्वयम् ॥ १२ ॥ तेनधर्म्मेणकृतवान्दैवंपित्र्यंच भारत फेनपाः ऋषयश्चैव
तंधर्मप्रतिपेदिरे ॥ १३ ॥ वैखानसाः फेनपाधर्म्ममेतं प्रपेदिरे वैखानसे
भ्यः सोमस्तुततःसोऽन्तर्दधेपुनः इत्यादिग्रंथेननारदः पार्थम्प्रति यदासी
दिति अत्रमानसादीनांपूर्वपूर्वस्मिन्नुत्तरेषांसर्वेषामनुगमोऽस्ति नतूत्तर
स्मिन्नुत्तरस्मिन्पूर्वपूर्वस्यकारणंहिकार्य्येऽनुगतं नतुकार्य्यस्यकारणेऽनुग
मोऽस्ति इतिप्रसिद्धम् ॥ तत्रमानसंनामस्थूलंसमित्कुशाज्यगंधपुष्पधूप
दीपाद्युपकरणं शालिग्रामब्राह्मणादि प्रतिमालम्बनंदैवं पित्र्यंचधर्म्मेना

रायणोपदिष्टंफेनपादयोऽनुवर्त्तन्ते इति अयंभाव: ॥ अग्न्यर्कतोयशा लिग्रामादिपूर्वोक्तमनुसंधेयम् ॥ ननुमूलग्रन्थेनसह प्रतिमापूजादिप्रकरणस्यसम्बन्धाभावादपि अध्यासप्रकरणदृष्टान्तेमूर्त्तौदेवतावदितिप्रकरणस्यसत्वात् परस्पर सम्बन्धेनोत्थाप्याऽऽकांक्षयामूर्तिप्रकरणसम्बन्धस्य सत्वेनाप्रकृतंमूर्त्तिसिद्धि: प्रतिमापूजनादिकं च ॥ तथाचमातास्थूल शरीरेसूक्ष्मशरीराध्यासेनतदपायनिमित्तकांसामग्रीन्निवर्त्तयतु ननूपादान कारणस्यनित्यत्वेऽपिकार्यघटादेरनित्यत्वंसर्वत्रप्रसिद्धम् ॥ यत्रतु उपादानस्यापिसूक्ष्मशरीरस्यापिनित्यत्वंतत्रतस्याध्यासेनकथं स्थूलशरीरस्यानपायत्वंस्यादितिमैवम् ॥ अदृश्यत्वात्सूक्ष्मशरीरस्य यथादर्शचन्द्रस्यादृश्यत्वेऽपि अपायोऽनास्ति एवंसूक्ष्मशरीरस्येन्द्रियाविषयत्वस्यापायोनास्तीतिकल्पते यथावानौक:स्थ: तीरतरौचांचल्यमारोपयति तथाचस्थूल शरीराधिष्ठानेऽनपायत्वधर्म्मविशिष्टसूक्ष्मशरीरस्यार्थाध्यासेनस्थूलशरीरस्यानपायत्वंज्ञातवतीतिभाव: ॥ ननुभक्षतेऽपिलशुनेनशान्तोव्याधिरितिन्यायेनानुमानात्सूक्ष्मशरीरेऽनपायत्वंविज्ञाय तंस्थूलशरीरेऽध्यस्यापि नस्थूलशरीरानपायोऽध्यस्यमानसूक्ष्मशरीरस्यापायात् ॥ नरकादिदु:खसाधनत्वाद्यदेहेमृतेलिंगशरीरएव धर्म्मराजादिलोकेषु तत्तद्यातनामनुभवतिकर्म्मवशात् ॥ तदपाये एवजीव: परमात्मनंप्राप्यननिवर्तते इत्यपायधर्म्मविशिष्टस्यारोपेऽधिष्ठानस्यापिकर्म्मवशादपायेतल्लोकयातनापि स्यात् ॥ तदुक्तम् ॥ अनाद्यविद्योपहतायथाग्नौविस्फुलिङ्गका: देहाद्युपाधिसंभिन्नास्तेकर्म्मभिरनादिभि: ॥ १ ॥ सुखदु:खप्रदै: पुण्यपापरूपैर्नियंत्रिता: तत्तज्जातियुतंदेहमायुर्भोगंचकर्म्मच ॥ २ ॥ प्रतिजन्मप्रपद्यन्तेतेषामपिपरंपुन: ससूक्ष्मलिंगशारीरं मामोक्षादक्षरंखग ॥ ३ ॥ इति लिंगशरीरस्यानित्यत्वेतदध्यासेनमुख्यकार्य्याभावात्तदध्यासोनवक्तुंयुक्त: अतोऽध्यात्मशब्देन यद्यक्षरंपरमं ब्रह्मस्वभावोऽध्यात्ममुच्यते इतिगीता

वचनेनब्रह्मण एवांशताजीवरूपेणभवनंस्वभावः एवात्मानंदेहमधिकृत्यभो क्तृत्वेनवर्त्तमानोऽध्यात्मशब्देनोच्यते इतितस्यनित्यत्वेतस्यैवाध्यासोवक्तुं युक्तः जीवस्यनित्यत्वे श्रुतिस्मृतयः नजायतेम्रियतेवाविपश्चित् अजो नित्यः शाश्वतोऽयम्पुराणः अछेद्योयमदाह्योऽयमितिचेत्यादिप्रमाण्या ज्जीवस्यानित्यत्वे तदारोपेणैवनित्यत्वंशरीरस्यस्यात् इतितस्याध्यासोभवे दितिवाच्यम् ॥ नचस्थूलशरीरे जीवाध्यासोनैरूप्यात् कारणाभावाच्च यद्प्युक्तंसारूप्यादेरध्यासस्यकारणत्वन्नास्तितत्रतुसूक्ष्मस्थूलशरीरयोः परस्परंकारणकार्य्यभावसत्वेऽपिसूक्ष्मस्यकारणताजीवे ऽस्तीत्येतयोरपि परस्परकार्य्यकारणभावसत्वेजीवस्यकारणतानास्ति तस्यनित्यत्वादतिसू क्ष्मत्वादशरीरत्वाच्च प्रकृतेतुस्थूलशरीरेसुक्ष्मशरीरेऽध्यास इतिशरीरत्वेन सारूप्यात् ॥ इदमुक्तमत्रतुकेनापिकारणेनाध्यासोनास्ति मूर्त्तौतु वेदवि हिततत्तद्देवताविधानद्विभुजादिपंचमुखादितत्तच्चेतनाविशिष्टाध्यासः जीव स्याजत्वादशरीरत्वाच्चनाध्यासोवक्तुंयुक्तः ॥ नच अविद्यायांजीवस्यकारण तास्तीतिवाच्यम् ॥ नहिशरीरवत्कार्य्यकारण भावः ॥ अविद्याजीवयोः द्वयः किंत्वलौकिकोऽत्रद्वयकार्य्यकारणभावस्य प्रयोजकत्वात् किंच देहेमृतेजीवगमनसमयेसूक्ष्मभूतानिसहैवगच्छन्ति इतितदेवस्थूलदेहस्या प्युपादानकारणत्वेतद्गतेस्थूलस्याप्यपाये उक्तमूलकोऽध्यासोनिष्फल इति वाच्यम् ॥ मैवं जीवसत्वे एवायमध्यासः नतुजीवेमृतेयदिमृतेजीवे ऽयमध्यासस्स्यात् ॥ तदानिश्चेष्टत्वात्शरीरस्य कस्यचित्कार्य्यासक्तौ निष्प्रयोजनंस्यात् ॥ सूक्ष्मभूतानिसहैवगच्छन्तीत्यत्रप्रमाणंव्याससूत्रम् ॥ सूक्ष्मतदन्तर प्रतिपत्तौरंहतिसम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ तत्र शङ्करभाष्यम् ॥ तथाहिप्रश्नः वेत्थयथापंचम्यामाहुतावापः पुरुष वचसोभवंति इतिनिरूपणंचप्रतिवचनं ॥ द्युपर्य्यन्यपृथिवीपुरुषयोषि त्सुपंचसु ॥ अग्निषुश्रद्धासोमवृष्टयन्नरेतोरूपा पञ्चाहुतीर्दर्शयित्वा इति

तुपंचम्यामाहुतावापः पुरुषवचसोभवन्ति इतिछांदो० ॥ तस्माददद्भिः परिवेष्ठितोजीवः रंहतिव्रजतीति ॥ संज्ञामूर्तिक्लृप्तोसूत्रात् मूर्त्तिपद स्यात्रानुवृतिः ॥ मूर्तिशब्देनदेहोगृह्यते तदनन्तरं पूर्वदेहत्यागानन्तरंप्रति पत्तौदेहान्तरप्राप्तौसम्परिष्वक्तः भूतसूक्ष्मैः संमिलितः रंहतिगच्छति जीवः केनप्रमाणेनप्रश्ननिरूपणाभ्यांछान्दोग्योपनिषदीत्युक्तम् ॥ श्वेत केतुः पंचालसभायां प्रवाहणेनत्युक्तः तवपित्राशिक्षितोभवान्मम प्र श्नोत्तरंदेहि अस्माल्लोकाज्जीवापरलोकेगत्वापुनःयेनमार्गेणगच्छति यथा ऽऽगच्छति देवयानेनपितृयानेन अस्मिंल्लोकेयस्मिन्प्राप्यपुनः परिवर्त्य याति ॥ यदिजानास्युत्तरंदेहि पंचम्याश्चापःवेत्थ ॥ यथापंचम्यामा हुताचापः पुरुषवचसोभवंति ॥ यथापंचम्यां आहुतौ आपः जला निपुरुषस्यवचसः पुरुषनामधेयानिभवंतिवेत्थजानासि इतिश्रुत्वाश्वेतके तुरित्याह नहितवपित्राकिमुपदिष्टोभवानित्युक्तः श्वेतकेतुस्वपितरंगतः तेनापीत्युक्तं नहिजानामीतिश्रुत्वाप्रवाहणंप्रत्यागत्यप्रश्नजिज्ञासानन्तरं प्रवाहणेनापिबहुकालंसंस्थाप्य जीवस्य गमनागमनविषयंस्वप्रश्नोत्तरंस्व यमेवकथनेद्युलोकस्याग्निवर्णनङ्कृत्वाद्युलोकाग्नाविति ॥ प्रकारेणाहु तिवर्णनंकृतम् ॥ तस्मिन्नेतस्मिन्नग्नौदेवाः श्रद्धांजुव्हति तस्याः आहुतेः सोमोराजाभवति ॥ तदग्नौ एतदग्नौद्युलोकाग्नौदेवाः देवताः प्राणः श्रद्धां अर्थाज्जीवेनसहगतः भूतसूक्ष्मविशेषस्यजुव्हतिहवनंकुर्वन्ति तस्याः आहुतेः हवनस्यसोमः चन्द्रोराजाभवतिसोमराजाइति नाम्नोवाच्य अमृततपदिव्यदेहहुत् परिणामोऽस्ति ॥ नतुजीवेनसहकेवलंजलमात्रस्यैव गमनं प्रतीयतेनान्यभूतसूक्ष्मानाम् ॥ अस्योत्तरम् । त्र्यात्मकस्तुभूयस्त्वात् । इतिव्याससूत्रम् ॥ तेजाजलपृथिवीभिर्युक्तत्वात् ॥ उक्तसूत्रेयद्यपिज- लानामाहुत्याजलानामेवगमनं तथापितेजपृथिव्यपेक्षया जलानां रसा नांशुक्रशोणितरूपाणांमातृपित्रोरुभयोर्बहुत्वामित्यत आपहुतिः क-

थिता ॥ नतुतेजंपृथिव्योरभावः उक्तः ॥ अत्रशङ्करभाष्यम् ॥ त्र्यात्मकश्चदेहः त्रयाणामपि तेजोऽवन्नानां तस्मिन्कार्य्योपलब्धेः ॥ पुनः त्रात्मकः त्रिधातुकत्वात् ॥ वातपित्त श्लेष्मकत्वात् ॥ न भूतान्तराणिप्रत्याख्याय केवलाभिरद्भिशरब्धुंशक्यते॥ तस्माद्भूयस्त्वापेक्षोऽयंपक्षः पुरुषवचनः इतिप्रश्नप्रतिवचनयोरपशब्दो न केवलत्वापेक्षः सर्वदेहेषुरसलोहितादिद्रवभूयस्त्वंदृश्यते ॥ दृश्यतेचशुक्रशोणित लक्षणेऽपिदेहबीजद्रवबाहुल्यं कर्म्मचनिमित्तकारणं देहान्तरारम्भे कर्मणिचाग्निहोत्रादीनि सोमाज्यपयः प्रभृतिद्रवद्रव्यव्यपाश्रयाणि कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सहकर्मभिर्द्युलोकाख्येऽग्नौहूयन्ते इतिवक्ष्यति ॥ तस्मादपांबाहुल्यप्रसिद्धिः बाहुल्याच्चाप् शब्देनसर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानामिति ॥ प्रकृतमनुसरामः उक्तयुक्त्याजीवाध्यासो न किंतुपरमात्मनएवाध्यासः तस्यनित्यत्वात्सर्वस्यजगतः कारणत्वात् जगद्रूपत्वाच्चतस्याध्यासेशरीरस्यापिनित्यत्वम् । तदुक्तम् ॥ सत्यरूपंसत्यसधंसत्यनारायणंहरिम् ॥ यत्सत्यत्वेजगतः सत्यत्वंत्वांनमाम्यहम् ॥ इतिहास० ॥ तदुक्तंगीतायामर्ज्जुनंप्रति भगवताश्रीकृष्णेन पश्यमेपार्थरूपाणीशतशोऽथसहस्रशः ॥ नानाविधानिदिव्यानिनानावर्णाकृतीनिचत्यादि ॥ किंनारदंप्रतिभगवतः उक्तिः अहंहिजीवसंज्ञातोमयिजीवः समाहितः नैवंतबुद्धिरत्राभूदृष्टोजीवोमयेतिवै अहंसर्वत्रगोब्रह्मन् भूत ग्रामान्तरात्मकः भूतग्रामशरीरेषुनश्यत्सुननशाम्यहमिति महाभा० शां० प० मो० ध० ॥ किंचैकएवभूतात्मा भूते भूतेप्रकाशते एकधा बहुधा चैवंदृश्यतेजलचन्द्रवदिति ॥ म० भा० उद्यो० प० ॥ नारायणोजगन्मूर्तिरनन्तात्मासनातनः यतः सर्वंखल्विदंब्रह्मनेहनानास्तिकिंचन ॥ ब्रह्मैवेदं सर्वं ॥ आत्मैवेदंसर्वं ॥ यः पृथिव्यांतिष्ठन्पृथिव्याः अन्तरोऽयंपृ

थिवीनवेद यस्यपृथिवीशरीरं यःपृथिवीमन्तरोऽयमयत्येष त आत्मा न्तर्य्याम्यमृतः ॥ यस्यापः शरीरं यस्याग्निशरीरं यस्यान्तरिक्षं शरीरं यस्यवायुशरीरमिति भारतस्मृ श्रुतिवचनैः तदध्यासोवक्तुंयुक्तः ॥ पांचभौतिकस्यतद्रूपत्वात् ॥ तथाचनित्यस्यतस्यानित्यऽपि शरीरेऽध्यारोपात् नित्यत्वंसंपद्यते ॥ ननुसर्वंखल्विदंब्रह्मत्यादि श्रुतिभिरन्योक्तवचनैश्चपृथिव्यादिसर्वमात्मैवेत्युक्त्यापृथिव्यादिनातस्याभेदप्रतिपादनादध्यारोपएवनास्ति भेदे अध्यारोपः इतिनियमाद्रज्जुसर्पवत् इतिकथमध्यास इतिनाशङ्कनीयम् ॥ उक्तश्रुत्यादिभिः ॥ यदि सर्वं मात्मैवतथापिभगवद्दत्तशरीरस्य पृथिव्याद्यन्तर्गतत्वे तदेकदेशत्वात्सर्वमितिवाक्यार्थेनगृहीतं स्यात् तस्यपांचभौतिकत्वात् ॥ ननुसर्वम्पृथिव्यादितस्यशरीरंनतुभगवद्दत्तस्येत्यपिनशंक्यम् ॥ यथापुरुषशरीरंतदेकदेशस्यापिशरीरत्वविशेषतया अङ्गुल्याद्यवयवोऽपिगृह्यते एवंभगवद्दत्तस्यपृथिव्याद्यवयवत्वात् ॥ उक्तश्रुत्यादिभिर्नकेवलं पृथिव्यादेरेवग्रहणंकिंतुपृथिव्याद्यवयवतच्छरीरस्यापि अतः तस्यात्मत्वात् ॥ तस्मिन्नात्मताऽध्यासोवक्तुंयुक्तः ॥ ननु अनात्मशब्देन जीवस्यग्रहणंनतुपांचभौतिकस्यसाजात्याद्यथा अब्राह्मणमानयेत्युक्तेक्षत्रियाद्यानयनंमनुष्यत्वेनसाजात्यात्नतुलोष्ठस्यानयनम् ॥ तद्वदत्रापि आत्मत्वेनसाजात्याज्जीवस्यैवग्रहणं जीवात्मनोःसाजात्यप्रमाणभूताः श्रुतयश्चेति॥ गुहांप्रविष्टावात्मानौहितद्दर्शनादितिव्याससूत्रम् ॥ ऋतम्पिबन्तौसुकृतस्यलोके गुहां प्रविष्टौपरमेपरार्द्धेछायातपौब्रह्मविदोवदन्ति पंचाग्नयोयेचत्रिनाचकेताः ॥ द्वासुपर्णासयुजासखायासमानं वृक्षंपरिषस्वजाति तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ ज्ञाज्ञौद्वावजावीशानीशावितीत्युक्तसूत्रश्रुतिभिर्जीवात्मनोः साजात्येन जीवस्यैवग्रहणं प्राप्तमनात्मशब्देनतच्चव्याकरणरीत्यातस्योत्तरमग्रेभविष्यतिवदिष्यतिटीकाकारः ॥ अनात्मशब्देनात्मव्यतिरिक्तसर्वस्यैवग्रहण

मितिश्रुतिद्वारास्पष्टंभविष्यति परचात्राध्यस्तकर्त्र्याः भगवद्दत्तमातुर्व्या करणाद्यपठितायाः द्युभ्वाद्यायतनाधिकरणेदेहाद्यनात्सु अहमस्मीत्यात्म बुद्धिरविद्याइति भाष्योक्तिः ॥ अदृष्टवशात् श्रुतायाः देहस्यापि अ नात्मत्वेनग्रहणेकिमपिदूषणंनपरं च वस्तुतः ज्वरपीडितभगवद्दत्तनिरा शया भाविविरहेणात्मानात्मसु प्रकृतिकृपणा आत्मानात्माभक्षेपिदेहादौ आत्मानमध्यस्यति ॥ तथाहि अनात्मन्यात्माध्यासाऽप्यत्रतत्राध्यस्त स्यपरमार्थसत्तासत्वात् ॥ विषमसत्ताभवतिब्रह्मविद्याभरणग्रन्थे उक्त स्थले अध्यस्तस्यपरमार्थसत्तास्तीतिकथितम् ॥ तत्रेदंतात्पर्यम् ॥ शुद्धपदार्थाद्विशिष्ठोभिन्नोऽस्ति अतोऽनात्मनि आत्मसम्बन्धस्याध्यासः इतिकथितम् ॥ तत्रसंबंधविशिष्टस्यात्मनोऽध्यासः परंचस्वरूपादात्मा सत्वमस्ति ॥ अतोऽध्यस्तस्यपरमार्थसत्तास्वरूपदृष्ट्याकथितं परंचा ध्यस्तस्यकल्पितत्वम् ॥ यद्यप्यनात्मसंवन्धविशिष्ठकल्पितसत्वेतथापि शुद्धस्यकल्पितत्वेन्नास्तिशुद्धाद्विशिष्ठस्याभिन्नत्वात् विशिष्ठस्यकल्पितत्वं शुद्धेनास्ति परंचकेवलात्मसम्बंधस्यैवाध्यासोक्त्यासंबन्धविशिष्ठस्यात्म नोऽध्यास इत्युचितम् ॥ परंचाध्यस्तस्यपरमार्थसत्ता इतिकथनस्यश्रे ष्ठत्वात् केवलसन्बंधस्यैवाध्यास उत्युक्त्याअधिष्ठानस्यारोपिताद्विषम सत्ताइतिसंभवएवनास्ति आत्मसंबन्धस्यांतः करणेऽध्यस्तत्वात् परंच स्फुरणरूपचेतनस्यतादात्म्यसम्बंधोघटादौ अध्यस्तः यतोघटस्स्फुरती तिव्यवहारोघटे स्फुरणसम्बंधेनप्रतीयतचेतनाधिष्ठानमन्तःकरणंतथा घटादिरितिव्यावहारिकंतयोश्चेतनसंबंधोऽपि व्यवहारिकोनतु प्रातिभा सिकः चेतनसंबन्धस्यप्रातिभासिकसत्वेब्रह्मज्ञानंविनापिबाधस्स्यात् परं चब्रह्मज्ञानंविनाबाधोनसंभवति यतः आत्मसंबंधस्यतथाऽधिष्ठानात्म नोव्यावहारिकसत्तासत्वेविषमसत्तायाःअत्रभावात् ॥ अध्यास लक्षण समन्वयोनस्यात् ॥ अतस्संबन्धविशिष्ठस्यात्मनोऽनात्मन्यध्यासः

परंचविशेष्यभागस्य परमार्थसत्वात् ॥ विशिष्टस्यापिरमार्थसत्ता स्तिअधिष्टानस्य व्यावहारिकसत्ताचास्ति अतउभयोर्विषमसत्तायाः सत्वात् ॥ अध्यासलक्षणसमन्वयोऽस्ति ॥ यथारजतस्याधिष्टानं शुक्तिरितिलोकेव्यवहारादवच्छेदकतासंबंधेनशुक्तिः रजतस्याश्रया ॥ चेतनेरजतस्याधिष्टानतायाः अवच्छेदिकाशुक्तिरितितस्यांरजतस्याव च्छेदकतासंबंधोऽस्ति अर्थादवच्छेदकतासंबंधेन शुक्तेः रजतस्याधिष्टा नत्वेशुक्तौव्यावहारिकसत्तारजतस्य प्रातिभासिकसत्ताचातोऽधिष्टानाद्वि षमसत्ताइतिरीत्यासर्वाध्यासेषु आरोपिताद्विषमसत्तावदधिष्टानम् ॥ यस्मिन्पदार्थे आधारताप्रतीतिः तदधिष्टानंसाचाधारतापरमार्थताआरो पितावा परमार्थतएवाधारः इत्याग्रहोनास्ति यथानात्मन्यात्माध्यासो ऽऽत्मन्यनात्मनोऽध्यासः परंचानात्मनिपरमार्थतः आत्मनः आधार तोनास्तिकिन्त्वारोपिता आधारता अतआधारतामात्रस्यैवाधिष्टानंस्वी क्रियताम् ॥ यत्रानात्मन्यात्माध्यासः तत्राधिष्टानमनात्मातस्यव्या वहारिकसत्ता परंचात्मनः पारमार्थिकसत्ता अतोऽधिष्टानाद्विषमसत्ता वानवभासोऽस्ति यद्यप्यात्मनोऽधिष्टानमनात्मा इत्युक्तौ आत्मनःआ रोपितत्वंनस्यात् ॥ यश्चारोपितः तस्यकल्पितत्वं इत्यतः आत्म नोऽपिकल्पितत्वंस्यात् ॥ अतोऽनात्मन्यात्माध्यासोवक्तुंनशक्यतेतथापि भाष्यकारेणशारीरके आत्मनात्मनोऽध्यासः स्वीकृतोऽस्तितथाहिद्युभ्वा द्यायतनाधिकरणेचदेहादिष्वनात्मसु अहमस्मीत्यात्मबुद्धिरविद्येतिभाष्ये उक्तम् ॥ ननुसौगतमतेचैतन्यविशिष्टभौतिकदेहस्यैवात्मत्वम् ॥ तथा हि सौगतमतानुयायिनां चतुर्भेदाः तेषुकेचनपार्थिवाप्यतैजसवायवीय परमाणुसंघातरूपावयविरहितभूतभौतिकसर्वबाह्यपदार्थान् तथाज्ञान सन्तानरागादींश्चान्तरीयपदार्थान् मन्यन्ते तथाएषांपंचभेदान्प्रकल्प्य पंचस्कंधान्कथयन्ति अर्थात् भूतवा इन्द्रियविषयः रूपस्कंधः ॥ प्रत्येक

विषयग्राहकत्वादहंजानामिपश्यामीत्यभिमानरूढज्ञानंविज्ञानस्कंधः ॥ मित्रशत्र्वादेरनुभवादुत्पन्नसुखदुःखचित्तावस्थाविशेषोवेदनास्कंधः ॥ नामविशिष्टविकल्पसंयुक्तज्ञानंसंज्ञास्कधः ॥ तथारागद्वेषमोहसंस्कारधर्म्मा-धर्म्मसंस्कारस्कंधः ॥ अन्येपृथिव्यादिसर्वबाह्यविज्ञानादनुमानयोग्यः इतिमन्यन्तेपरेसर्वबाह्यार्थान्स्वप्नपदार्थवत्कल्पितमिथ्यामत्वाविज्ञानमात्र मेवपरमार्थसत् इति एतेत्रयः स्वस्वीकृतवस्तूनांक्षणिकत्वंतथामन्तव्य भूतभौतिकचित्तचैत्तोभ्योभिन्नआत्माआकाशादिःस्वरूपान्नसातीति ॥ चतुर्थाश्चसर्वंशून्यमेवेति॥ एतेषुप्रथमाः बाह्यपदार्थाः स्पर्शरूपरसगन्धाः स्वभावादाप्याः ॥ रूपस्पर्शस्वभावात्तैजसः तथाकेवलस्पर्शस्वभावाद्वा यवीयाः परमाणवोमिलित्वापृथिव्यादिरूपेणप्रकाशंते अर्थात्पृथिव्यादि परमाणुसमुदायः एव नकिंचिदप्यवयविवस्तु एवंहिपृथिव्यादिभूतेभ्यःश रीरेन्द्रियविषयरूपसंधानमस्ति तथातेषुशरीरान्तवर्त्तीग्राहकाभिमाना दारूढोविज्ञानसंतानः आत्मातिष्ठति सएवात्मशब्देनोच्यते तस्मादेवसर्व लोकव्यवहाराः प्रवर्तन्ते इतिदेहस्यैवात्मत्वेतदतिरिक्तात्मनोऽभावात्क थमध्यासइतिचेन्नपरमाणुकारणजन्यपृथिव्यादिसमुदायस्तज्जन्यकार्य्यश रीरेनित्यसमुदायेजगत्समुदायस्यप्रतीतिर्नास्ति॥ परमाणूनांतत्कार्य्यपृथि व्यादिभूतानांक्षणिकत्वात्॥ अर्थाद्वितीयक्षणेनष्टत्वात्॥ एकस्मिन्क्षणेका र्य्यसंघातार्थमुद्युक्तपरमाणोर्वाभूतसमुदायस्यकार्य्यप्रतीतिक्षणेनश्वरत्वा त्कस्यचिदपिकार्य्यस्यविज्ञानाविषयत्वात् ॥ त्यागग्रहणव्यहारयोग्याः नभवंति विज्ञानात्माकिंचिदपिकार्य्यंज्ञात्वाद्वितीयक्षणेतमेवकार्य्यंजाना तिस्मरतीतिव्यवहारोपपत्तिर्नस्यात् ॥ ज्ञाताज्ञेयमित्युभयपदार्थस्यनष्ट त्वात्॥ अन्यद्दृश्यज्ञेयौनान्यस्सरति नह्यन्यद्दृष्ट्वा अन्यस्यज्ञानंचस्मरणं भवति इत्यादिहेतोः तथाऽचेतनपरमाणुभ्यः पृथिव्यादिभूतानांस्थिरचेत नकर्त्तारंविनाविशेषाकारसम्भावनापिनस्यात् तथायद्विज्ञानंशरीरेन्द्रिया

काररूपसंघातेप्रतीयतेतस्यापिप्रथमसमुदायेहेतुत्वाभावान्नजगतः सिद्धिः ( तदुक्तंवेदांतदर्शने ) समुदाय उभयकेऽपितदप्राप्तिः ॥ परमाणुपृथिव्यादिभूतत्युभयकारणंयस्मिन्समुदायेशरीरेन्द्रियसंघातेतत्तस्यजगतोऽप्राप्तिरसिद्धिरित्यर्थः ॥ नन्वविद्यादेः परस्परकारणत्वेनकार्य्यसंघातात्तस्यसिद्धिरस्तु अयमाशयः ॥ यद्यपिसर्वपदार्थस्यक्षणिकत्वंतथापि अविद्यातस्यस्थिरत्वसंभावनाप्रतीयतेक्षणिकादौस्थिरत्यादि विपरीतबुद्धिरेवाविद्यातस्याः संस्कारराग‌द्वेषादिः चित्तप्रकाशरूपविज्ञानादिश्चोत्पद्यते विशेषस्तुविस्तरभयान्नलिखितः ॥ इत्यनाद्यविद्यादेः परस्परकारणत्वंतद्विनानहिभूतभौतिक संघातोऽस्तीतितयैवसंघातोऽस्तीतिचेन्न अविद्यादेः पृथिव्यादिसंघातस्यनिमित्तकारणतायाः अभावात् ॥ येचस्वयमेवस्थिराः नतेषामविद्यादौपृथिव्यादिसंघातेनिमित्तकारणत्वाभावात् ॥ येपरमाणवः स्वयमेवास्थिराः नतेषांस्थिरीकरणरूपाऽविद्यातथाअविद्यादेरुत्पन्नरागादेः क्षणिकाभिन्नपदार्थस्तस्यसंघातेतेषांनिमित्तकारणत्वन्न यथाशुक्तौरजत्वबुद्धिः शुक्तिसमूहस्यकारणंनतथायस्मिन्क्षणिकपदार्थेस्थिरबुद्धिः क्रियते सचद्वितीयक्षणेनष्टः ॥ अतः कस्यरागादिरुत्पद्यतेतथासंस्कारस्यास्थिरैकद्रव्याश्रयंविनासंस्कारस्यकल्पनानसंभवतीतिरीत्याभौतिकपदार्थसंघातदेहादतिरिक्तएवात्माइतिसिद्धम् ॥ इतितस्याध्यासोयुक्तएव किंचसौगतमतप्रसङ्गादवसरप्राप्तजैनमतोपपत्तिपूर्वकखंडनप्रकारोपपादनमिति आर्हतमतानुयायिनइतिमन्यंते ॥ इदंसर्वजगत् जीवाजीवात्मकंचनास्तीश्वरेजगत्कर्तृत्वंतथा धर्म्माधर्मपुद्गलकाल तथाऽऽकाशइतिषट्द्रव्यमयंजगत् ॥ एतेषुजीवस्त्रिविधिः ॥ बद्धोयोगवद्धोमुक्तः ॥ गतिमतांगतेः कारणरूपव्यापीद्रव्यविशेषोधर्मः ॥ स्थितेर्हेतुरूपव्यापिवस्त्वधर्म्मः ॥ नामवर्ण(रूप)गंधरसस्पर्शवत्द्रव्यंपुद्गलः ॥ तथापुद्गलोद्विविधः ॥ परमाणुरूपः संघातरूपोवा ॥ तत्रसंघातरूपोवायुतेजज

१ आर्हत।

लपृथिवीतनुभवनादिकालव्यवहारस्यहेत्वणुरूपद्रव्यंभूतवर्त्तमानभविष्यत् भेदेनत्रिविधः ॥ आकाशएकोऽनंतप्रदेशयुक्तोद्रव्यम् ॥ एतेषु अणु भिन्नद्रव्यान् पंचास्तिकायसंज्ञकान् ॥ जीवास्तिकाय ॥ धर्मास्तिकाय ॥ अधर्म्मास्तिकाय ॥ पुद्गलास्तिकाय ॥ आकाशास्तिकायेतिसंज्ञकान्गृह्णन्ति ॥ अनेकदेवर्त्तिद्रव्येऽऽस्तिकायशब्दप्रयोगः ॥ जीवमोक्षोपयोगी अन्यस्संग्रहः इतिजीव अजीव आसृव बंध निर्जर सम्बर मोक्ष एतेसप्त पदार्थाः ॥ यथार्थज्ञानंमोक्षोपायः । ज्ञानदर्शनसुखानिवावीर्य्यगुणवान्पदार्थोजीवः । जीवभोग्यवस्तुअजीवः । जीवस्योपभोगार्थः उपकरण (कारणसामग्री)इन्द्रियादिः आसृवम् ॥ बंधोऽष्ठविधः ॥ घातिकर्म्मचतुष्ठयः अघातिकर्म्मचतुष्ठयः ॥ आद्यःतत्वज्ञानात् मोक्षे आर्हततंत्रेवामोक्षोपायेवाविश्वासाभावः ॥ मोक्षसाधनेविघ्नः इति अन्त्यः स्वज्ञातवस्तुनिसत्यत्वप्रतीतिः नामगोत्रयोरभिमानंशरीरस्थित्यर्थकर्म्मइति ॥ ज्ञानावरणीय दर्शनावरणीय मोहनीय अन्त्ययवेदनीय नामिकगोत्रिक अयठकइतिक्रमान्नामानि मोक्षसाधन पापनाशक जपादिरितिनिर्जरः ज्ञानेन्द्रियरोधिकासमाधिःसंवरः॥रागादिक्लेशरहितजीवस्यस्वाभाविकरूपप्रकाशीमोक्षः॥ पृथिव्यादिकार्य्यस्याणौकारणता परन्तुयथावैशेषिकःपृथिव्यादिवाय्वन्तः भूतानांपरमाणूनांचतुर्भेदोमन्यतेतथानकिन्तुसर्वपरमाणूनामेकएवस्वभावः परिणामविशेषात्पृथिव्यादेर्भेदइति ॥ जीवास्तिकायेत्यादौ अर्थात्सर्ववस्तुषु अवान्तरभेदवर्णनम् ॥ सएवसप्तभङ्गीनयः ॥ तस्यायंभेदः अस्तित्ववांछायांकिंचिदस्तीतिप्रथमभङ्गः नास्तित्ववांछायामर्थात्प्रवर्त्योनास्तीतिवांछायांकिंचिदपिनास्तीतिद्वितीयः ॥ क्रमादुभयवांछायांकिंचिद्प्यस्ति किंचिदपिनास्तीतितृतीयः ॥ एकेनसहोभयोर्वांछायामस्तिनास्तिवेत्युभयोरेकस्मिन्समये एकस्मिन्वस्तुनिकिंचिदपिकथनासम्भवः इतिचतुर्थः । प्रथमचतुर्थवांछायांकिंचिद्प्यस्तिपरंचावक्तव्यमपीतिपंचमः द्वितीयवाच

तुर्थवांछायांकिंचिदपिनास्तिपरन्तुकथनयोग्योऽपिनास्तीतिषष्ठः ॥ तृतीय वाचतुर्थवांछायांकिंचिदपिनावक्तव्यमपिनेतिसप्तमः। एवंह्येकोऽस्त्यनेको वाऽस्तीतिगृहीत्वाकिंचिदेकमप्यनेकमप्यस्ति किंचिदेकमप्यनेकमपिवाकिं चिदेकमप्यवक्तव्यमस्तिकिंचिदेकमपिवक्तव्यन्नास्ति किंचिदेकमनेकमव क्तव्यंचैवंहिकिंचिन्नित्यंकिंचिदनित्यमित्यादि नित्यत्वानित्यत्वभिन्नत्वा भिन्नत्वेत्यादि सप्तभङ्गीनयंयोजयंति उक्तप्रकारेणनित्यत्वादिषुसप्तभङ्गीन योज्ञातव्यः परंचैकस्मिन्नेकानेकनित्यत्वानित्यत्वादिविरुद्धधर्म्माणामसं भवान्नायंयुक्तोजैननयः। ईश्वरानधिष्टितपरमाणूनांकारणंमन्यते इत्यस्या प्रतिषेधः॥ पूर्वोक्तसौगतमतवद्ज्ञातव्यः। तदुक्तंवेदान्तदर्शने॥ नैकस्मि न्नसंभवात्॥ विरुद्धधर्म्माणांनित्यत्यानित्यत्वैकत्वानेकत्वादीनामेकस्मि- न्नाश्रयेधर्म्मिणिवाअसम्भवादयुक्तत्वात्॥ प्रसंगतोभूतोत्पत्तिश्चेति॥ अनिमित्ततःकारणहीनात्॥ एकादद्वितीयादित्यालोचय साचश्रुतियुक्ति भ्यांश्रुतिस्तावत्सदेवसौम्येदमग्रे आसीदेकमेवाद्वितीयम्॥ यदैक्षतवहुः स्यांप्रजायेयेति सजातीयविजातीयस्वगतभेदशून्यादेकरसाद्वस्तुनः जगदु त्पत्तौयुक्तिस्तुशून्याज्जगदुत्पत्ययोगात्॥ अचेतनानांचपरमाण्वादीनाम धिष्ठातारमन्तरेणसंघातकर्तृत्वायोगात् विकारणस्येश्वरस्याधिष्टातृत्वायो गात् संसारस्यस्वाभाविकत्वेमुक्त्ययोगात्॥ स्वप्नमायाइन्द्रजालवत्। अविद्याकल्पितत्वमवश्यंवाच्यम्॥ अविद्यानाशस्यचसर्वतन्त्रासिद्ध त्वात्॥ अविद्यामिथ्याऽनादिभावत्वेसति अनित्यत्वाद्व्यतिरेकेणकार्य्य वदित्यविद्यामिथ्यात्वसिद्धेरेकाद्वितीयादेवजगदुत्पत्तिरिति ततश्चयन्मदन्यं नास्तिकस्मान्नुविभेमीति श्रुतेरात्मज्ञस्यममद्वितीयाभावात् नहर्षव्यथे भवतः बाह्यदृष्ट्यालोकस्यानित्यत्वात्तदुपपादनम्॥ तस्मादहंमनोनक्वचि द्विषयेविदधेधारयामीत्यर्थः॥ तर्हिनाशेशोकोत्पत्तिंजानन् यद्वाऽश्रौतयो रारम्भसंघातवादयोरपिजगदनित्यत्वमस्तीतिस्वास्थ्यमेवोचितमित्येवनतु

पांचभौतिकचैतन्य विशिष्टदेहस्यैवात्मत्वेतर्हिकथमात्मान्यात्माध्यासोव क्तुंयुक्तः तथाहियथादेहस्यैवात्मत्वम् ॥ ननुकथंपरमेश्वरस्यनिःश्रेयस प्रदत्वमभिधीयते वृहस्पतिमतानुसारिणाचार्वाकेणदूरोत्सारितत्वात् ॥ दुरुच्छेदंहिचार्वाकस्यचेष्टितम् ॥ प्रायेणप्राणिनंतावद्यावज्जीवंसुखंजीवे न्नास्तिमृत्योरगोचरः ॥ भस्मीभूतस्यदेहस्यपुनरागमनंकुतः इतिलोकगा थामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेवपुरुषार्थौमन्यमानाः पारलौकिकमर्थमपन्हुवानाश्चार्वाकमतानुवर्त्तमानाएवानुभूयन्ते ॥ अत एवतस्यचार्वाकमतस्यलोकायतमित्यन्वर्थमपरंनामधेयम् ॥ तत्रपृथि व्यादिभूतानि चत्वारितत्वानि तेभ्यएव देहाकारपरिणातिभ्यः किए वादिभ्योमदशक्तिवच्चैतन्यमुपजायतेतेषुविनष्टेषुसत्सुस्वयंविनश्यति ॥ त दिहविज्ञानघनएवैतेभ्योभूतेभ्यः समुत्थायतान्येवानुविनश्यति सनप्रेत्य संज्ञास्तीति ॥ तच्चैतन्यविशिष्टदेहएवात्मादेहातिरिक्त आत्मनिप्रमाणा भावात् ॥ प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेणप्रामाण्या भावात् ॥ एवंचतन्मतेमोक्षोनामशरीरनाशादन्योनास्ति ॥ अशरीरं वावसंतंनप्रियाप्रियेस्पृशत इतिश्रुतेश्चसचस्वयमेवोपनमतीतिकिं तदर्थंशा स्त्रेणेतिचेन्न ॥ कर्तव्यमेवकर्मेहजानतामित्रकर्शन अकर्माणोहिजीवंतिस्था वराः नेतरेजनाः १ यावद्गोस्तनपानाच्चयावच्छायोपसेवनात् प्राणिनःक र्म्मणावृत्तिमाप्नुवन्तिनरर्षभ ॥ इति आरण्यके ॥ प्राक्कर्म्मसद्भावसाधनात् स्थूलदेहनाशेऽपिकर्म्माश्रयलिंगदेहनाशायोगात् ॥ तत्रश्लोकार्थोनजीवंती तिसम्बन्धः इतरेजनाः इतिदृष्टांतः तथाचायंप्रयोगः स्थावरजीविका प्राक्कर्मपूर्विका जीविकत्वात् ॥ पाकादिक्रियापूर्वकास्यादादिजीविकावदि तियावदितिकार्त्स्न्ये ल्यब्लोपेपंचम्यौ गोस्तनपानमारभ्यछायोपसेवन प्रतिमाद्वारकंभोगंचारभ्यसर्वावृत्तिंजीविकांकर्म्मणैवाप्नुवन्तीतियोजनास द्योजातस्यहिगोवत्सस्यगोस्तनपानेप्रवृतिः प्राग्भवीयेष्टसाधनताज्ञानजन्प

संस्कारपूर्विका अस्मदादिप्रवृत्तिवदृश्यते एवंमरणत्रासोऽपि प्राचीनमरण जदुःखानुभवसंस्कारात्प्राणिमात्रस्य सिद्ध्यत्यतोऽस्ति प्राचीनंकर्म्म ॥ किंचलौकिकशास्त्रप्रसिद्ध्यायथाचैत्रः स्वदेहेकंटकेननुन्नेसतिव्यथते ॥ एवं शत्रुकृतायांस्वदेहप्रतिमायामपिकंटकेननुन्नायांव्यथते तत्रव्यथाहेतुर्नांतरं धातुवैषम्यंदृश्यते बाह्यंवाकंटकवेधादिदृष्टंद्वारमस्ति किंतुकेवलमदृष्टमेव॥ एवंप्राकर्म्मसद्भावसिद्धेः तत्तत्पूर्वजन्मकल्पयाऽनादिस्संसारः ॥ एवम नादित्वादानंत्यंचास्यसिद्धम् ॥ तद्ध्यनादिभावस्यध्वंसायोगात् ॥ पुनरन र्थकंशास्त्रमितिचेत्सत्यंनवयमात्मानिकर्तृत्वभोक्तृत्वादः संसारस्यसंबंधंवदा मः॥यज्ञस्यपरशरीरादवचित्तलिंगशरीरेऽभिमानिकतादात्म्यादपित्तद्धर्मभा क्त्कोपपद्यते अभिमंत्रित्वमपिनवास्तवं अनुपदोक्तछायोपसेवनन्यायेनपरिक ल्पितसंबंधेनापिव्यवहारनिर्वाहेसतितत्सत्यत्वकल्पनाऽनौचित्यात् संसार स्यसुषुप्तिमूर्धादावदर्शनेनकादाचित्कप्रतीतिविषयतया रज्जूरगवत्कल्पितत्वे नात्मनितत्सम्बंधस्यसत्यत्वायोगाच्च यथानौकस्थस्तीरतरौ चांचल्यमारो पयति यथावाप्रत्यग्भूतमपिमुखंमुकुरः परागिवदर्शयति यथावासूक्ष्ममपि पुस्तकाक्षरं उपनेत्रमहिम्नास्थूलमिवभातितद्वत्कूटस्थेदृङ्मात्रेसूक्ष्मे प्रतीति द्वितीयेन्दुतुल्येश्वरेदृष्टेदेहप्रतिमाद्वाराचंचलत्वदृश्यत्वस्थूलत्वाद्यारोपोयु ज्यते एवेतिनास्माकंकिंचिदवद्यम् ॥ यस्यानादिः सत्यस्संसारः तस्यैवपू र्ववाद्युक्तोदोषोऽपरिहार्य्यः तस्मात्संसारकल्पिकायाः अविद्यायाः आत्म विद्ययानिवृत्तौसमूलस्य संसारस्योच्छेदावश्यंभावीतिविद्योत्पत्तयेशास्त्रमार म्भणीयमितिसिद्धम् ॥ अध्यासभाष्येऽपिविषयविषयिणोस्तमः प्रकाशव द्विरुद्धस्वभावयोरितरेतराभावानुपपत्तौसिद्धायांतद्धर्म्माणामपिसुतरामितरे तरभावानुपपत्तिरित्यतस्तयोरध्यासोमिथ्येतिभवितुँ य्युक्तामित्यनेनमि थ्याभूतेनालीकेनाध्यासेनसकललोकशास्त्रव्यहारानुपत्तिरितिपूर्वपक्षङ्कृ त्वातथान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाध्यस्येतरेतराविवेके

नात्यन्तविविक्तयोः धर्म्मधर्म्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृतेमिथुनीकृत्याहमिदंममेद मितिनैसर्गिकोयंलोकव्यवहारइतिसिद्धान्तितम्॥ तस्यैवाध्यासस्य प्रहाणायाध्यात्मशास्त्रमितितदर्थः॥एतच्चाग्रेभाष्ये एवोपपादितम्॥ अध्यस्येत्यस्यैवविवरणंसत्यानृतेमिथुनीकृत्येतिसत्यंब्रह्मनऋतमनृतंअसत् एतत्पदार्थमात्रेतत्रसत्यंविशेष्यं अनृतमुपाधयोविशेषणम् ऐतरेयोपनिषदि सर्वाण्येवैतानिप्रज्ञानस्यनामाधेयानिभवंति एषब्रह्मएषइंद्र एषः प्रजापतिरेतेसर्वेदेवाः इमानिचेत्यादिनायच्चस्थावरीमत्यन्तनस्पष्टमेवोक्तम् ॥ एषः प्रज्ञानात्मेतिव्याख्यातम् ॥ विशेषांशस्यैवनामधेयानिभवन्ति नहिघट इतिघटत्वस्यनामेतिकश्चिदभ्युपैति श्रुत्यन्तरेऽपिभोक्ताभोग्यंप्रेरितारंचमत्वासर्वंप्रोक्तंत्रिविधं ब्रह्मचैतदित्यत्रभोग्यजडवर्गस्यब्रह्मत्वमुक्तम् ॥ तच्चोक्तरीत्यैवतदनन्यत्वमितिसूत्रेभाष्येऽप्युक्तम् ॥ प्राक्चात्मावगतेरव्याहतः सर्वोलोकव्यवहारः सत्यानृतविषयइति ॥ इदंचमिथ्याज्ञाननिमित्तइति प्रतीकेमिथ्याज्ञानमध्यास इतिव्याचक्षाणैर्वाचस्पतिमिश्रैःस्पष्टीकृतंसर्वानर्थमूलत्वादिदंममाहमिदामित्यवव्यवहारःसाक्षादुक्तःसचव्यवहारमात्रोपलक्षणम् ॥ नैसर्गिकइत्यनेनपूर्वपूर्वभ्रमजन्योत्तरोत्तरसंस्कारस्ततश्चोत्तरोत्तरभ्रमइतिसूचितम् ॥ तत्रदेहादौ अहमित्याध्यासः शुद्धविषयः एव जडचेतनयोर्विषयविषयिणोरन्योन्यस्मिन्नन्योन्यात्मतामध्यस्येतिभाष्योक्तेः एवंचभगवद्दत्तस्यचैतन्यविशिष्टत्वेऽपिनकाऽपिहानिः परंचतन्निवृत्तौसुतरांहानिस्स्यादितिचेतननिवृत्तिः पूर्वमेव । चैतन्यविशिष्टत्वपांचभौतिके भगवद्दत्तदेहेऽपिमाताऽन्योन्यात्मकतामध्यस्यतन्निमित्तापायाभावमभिमन्वानास्वात्मजेभगवद्दते अध्यात्मवृत्तिमभिमनुते इतितात्पर्य्यम्॥ ननुसर्वम्वाक्यसावधारणमितिन्यायेनानात्मशब्देनात्मभिन्नोजीवएवगृह्यते अब्राह्मणमानयेतिवत् ॥ यथातत्प्रकारमाह नञर्थोभेदइतिपक्षे अघटस्य दर्शनमित्यसमस्तत्वेतत्पुरुषसमासाभावात् ॥ उत्तरपदार्थप्राधान्याभावेन

नञर्थभेदस्यविशेष्यतासम्बन्धेनघटे अन्वयः । घटप्रतियोगिकभेदवतः पटस्यैवदर्शनाभाव । इति बोधस्तथाप्युक्तवाक्यस्यतत्पुरुषपरत्वात् ॥ उत्तरपदार्थप्राधानत्वे नार्थाद्घटस्यदर्शनाभावोऽपि आर्थः प्रतीयते अघटस्यदर्शनमित्युक्तेतु तत्पुरुषसमासाश्रयीभूतोत्तरपदार्थप्रधानेन नञ र्थाभाववद्दर्शनक्रियायामन्वये घटप्रकारकदर्शनाभाव इति बोधस्त्वार्थो नकिन्तुशाब्दबोधएव घटभिन्नदर्शनेऽपिघटदर्शनाभावाभावस्य घटस्व रूपत्वे घटस्यदर्शनाभावइतिबोधः ॥ एतच्चतस्यभावोनञोगुणप्रति षेध इत्यादिसूत्रे आकरेस्पष्टम् ॥ नञ्द्योत्योभेदोविशेषण मित्युक्त्या भेदप्रकारक प्रतियोगितानिरूपकोघटइतिशाब्दबोधस्तुनयुक्तः अघटमा नयत्युक्ते यत्किंचिन्निष्ठभेदप्रतियोगिनो यत्किंचिन्निष्ठप्रतियोगिभेदवतो वाघटस्यैवानयनापत्तेः ॥ अतएवोत्तरपदार्थप्रधानत्वेननञ्तत्पुरुषस्या ब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनंप्राप्तात्याशंक्यनञः प्रयोगान्नञ र्थविशिष्टस्यानयनं भविष्यतीत्युक्त्वाकः पुनरसौनञर्थः इतिप्रश्नेनेनिवृ त्तपदार्थकः ( इतिभाष्येउक्तम् ) ॥ निवृत्तःपदार्थोमुख्यंब्राह्मण्यंयस्मिन्क्ष त्रियादिरित्यर्थः ॥ सादृश्यादिनाऽध्यारोपितब्राह्मण्योनञ्द्योतितत्तद्वस्थ इत्यर्थ इतिकैयटः ॥ एवमनात्मेत्यत्र न आत्मा अनात्माइतिनञ्तत्पुरुषे ऽपियत्किंचिन्निष्ठभेदप्रतियोगिनोत्तरपदार्थ प्राधान्येनभेदप्रकारक प्रति योगितानिरूपकस्यात्मनोग्रहणंप्राप्तंतथापि अब्राह्मणमानयेतिवदत्रापिनञ र्थविशिष्टस्यानयनेनञर्थोनिवृत्तपदार्थः इतिस्वीकारेनिवृत्तः पदार्थः ॥ मुख्यात्मत्वंब्रह्मत्व मित्यर्थः ॥ यस्मिन्सआत्माजीवइत्यर्थः ॥ इतिजीव स्यैवग्रहणेदेहस्यग्रहणंनस्यादितिकिमर्थमध्यारोपः इतिचेन्नैवम् ॥ नञ्स मभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तक बोधकत्वेतात्पर्य्यग्रा हकः यथासिंहोमाणवकइत्यादौमाणवकादिपदानिसिंहादिपदस्यारोपित सिंहत्ववद्बोधकत्वेतात्पर्य्यग्राहकानि अद्विजइत्यादौचाद्विजभेदमूलकमारो

पितप्रवृत्तिनिमित्तकत्वमितिभेदेविश्रांतिः ॥ एवंचद्विजनिष्ठप्रतियोगिताक निरूपकोभेदाभेदवानित्यर्थः ॥ द्विजातिरिक्तसर्वेग्राह्याः ॥ एवमनात्मइ त्यत्रात्मनिष्ठ प्रतियोगितानिरूपकभेदवान् सर्वमनात्ममात्रमेवगृहीतंनतुसा दृश्याज्जीवइतितात्पर्य्यम् ॥ अब्राह्मणमानयत्यत्रोत्तरपदार्थप्रधानत्वब्राह्म णभिन्नमात्रस्यानयनापत्तौनञर्थोनिवृत्तपदार्थकः इत्युत्तरमतएवसंगच्छत अन्यथाब्राह्मणभिन्नमात्रस्यानयनाप्राप्तौकथमुक्तोत्तरम्॥इतिमंजूषाकारः॥ तदुक्तंनामधात्वर्थयोगेतुनैवनञ्प्रतिषेधकः वदत्यब्राह्मणाधर्म्मावन्यमात्रवि रोधिनाविति वृद्धप्रयोगगम्याः हि शब्दार्थाः सएवनः तेनयत्रप्रयुक्तोयोनत स्मादपनीयते इतिचवाचस्पति मिश्रैरप्युक्तम् ॥ लोकाधीनावधारणोहिश ब्दार्थयोस्सम्बन्धः लोकेचोत्तरपदार्थप्रधानस्यापिनञुत्तरपदाभिधेयोपमर्द कस्यतद्विरुद्धतयातत्रतत्रोपलब्धेरिहापितद्विरुद्धप्रवृत्तिरितितद्यथा अनित्य घटादौनित्यत्वाभिमानः अशुचौकाय्यादौशुचित्वप्रत्ययः (तदुक्तमनात्म निवदेहादौ) आत्मबुद्धिस्तुदेहिनाम् ॥ अविद्यातत्कृतोबन्धस्तन्नाशेमोक्ष उच्यते इति ॥ ननु भगवद्दत्तादेश्यपितृनिरूपितजन्यत्वेऽपिकेवलस्वमा तृनिरूपित जन्यत्वमित्युक्तावपिव्यवहारादिदोषोनयथाभिन्नयोर्मातृपित्रोः कस्यायंपुत्रः इतिपृथक्पृथक्प्रश्नेममनत्वत्रकालेमातृपित्रोरित्युत्तरम् ॥ किं तुममेत्युत्तरम् ॥ परंचमातृकथनेपितुरपिग्रहणंपितुरितिकथनेमातुरपिग्रह णमितिदोषोनयथारामायणादौकुत्रचिद्दाशरथिः रामः कुत्रचित्कौशल्यान न्दनः इति ॥ तथैवात्रापिस्वमातृजे इत्युक्त्यापितुरपिग्रहणंभवतितथाप्य स्यपितृनिरूपितजन्यत्वबोधविषयत्वेऽपिस्वमातृनिरूपितजन्यत्वमित्युक्तिः पित्रपेक्षयामातृनिष्ठरतिविषयतायाःपुत्रेऽधिकसत्वात् ॥ अतएवालौकिकगु णवतोऽपि श्रीरामचंद्रस्यपितुर्विवासनंसंगच्छते ॥ यदिसुतनिरूपितो भयनिष्ठजनकतायाः साधारणत्वम् ॥ तदपिपितुः केवलंवीर्य्याधानेका रणत्वम् ॥ मातुस्तुलालनपोषणदेहसंस्कारालंकारादिसर्वव्यवहारस्यका

रणत्वात्पुत्रप्रीतावधिकत्वम् ॥ सुरुच्यास्वध्रुवपुत्रोविवासितस्तपाऽर्थंतद पिसपत्नीपुत्रवद्यमपि राज्यासनमधिरूढोभवदितिमनसिनिधायतस्माद पिपुत्रस्याधिकंसुखंस्यादितिप्रयोजनेऽधिकैवप्रीतिर्मातरिसंघटतेइति ॥ तदु क्तंमहाभारतेशांतिपर्वणि ) ॥ नास्तिमातृसमाछायानास्तिमातृसमागतिः नास्तिमातृसमंत्राणंनास्तिमातृसमाप्रिया ॥ कुक्षिसंधारणाद्धात्रीजननाज्ज ननीस्मृता अङ्गानांवर्धनादम्बावीरसूत्वेनवीरसूः ॥ शिशोःशुश्रूषणाच्छु श्रूर्मातादेहादनन्तरम् ॥ स्तन्यंप्रपाययतिशाययतेनिजाङ्कमोहाद्विलोकय तिपालयतिस्वजीवात् सत्कर्म्मकारयतिवारयतेतदन्यत् कावापरोवदजने षुविनासचित्रीम् ॥ श्रीशङ्कराचार्य्याः ॥ कुपुत्रोजायेतक्वचिदपिकुमातान भवतीत्याहुः ॥ अतएवधर्म्मप्रवरोमनुः श्रीमातृदेव्याः सर्वसहास्वरूपं प्राह यथामातापृथिव्याःमूर्त्तिस्तु तथाश्रीमहाभागवतेसातासाक्षात्क्षिते स्तनुरितिकिंचसहस्रेणपितुर्मातागौरवेणगरीयसी गर्भधारणपोषाभ्यांतन मातागरीयसीतिस्मृतिः ॥ मातरंमानपूजायामित्यस्यनप्तृनेष्टृत्वष्ट्रीत्या दिनातृजन्तोमातृशब्दोनिपात्यतेनकारलोपश्चमीमांसते अत्ररोगादिकंश रीरपुष्ट्यादिकं शरीरंचेतिमातातदुक्तंपूर्वमेवसहस्रेणेत्यादिः ॥ जननीजन यित्रीप्रसूर्माताजननीत्यमरः ॥ ननुजन्मदात्रीमित्युक्त्यैवमातृत्वमुपपद्यते पुनः पृथक्मातरमितिविशेषणमतिगरीयसीत्वद्योतनार्थंनकेवलंगर्भधारणं कृत्वात्यक्तस्यममान्यदुग्धनान्ययाकयाचित् पोषणंकृतम् ॥ किन्तुपोषणा दिकंसर्वंतयैवकृतंयतस्तस्मिन्समयेप्रतिगर्भमृतपुत्रायाः मममातुर्मयिजीव नाशया अन्ययांपोषणेदृष्टान्तम् ॥ यथादेवक्याः गर्भधारणं यशोदायाः पालनंश्रीकृष्णस्य ॥ विष्णोर्दीव्यतिप्रकाशतेदिव्यकेवलज्ञानश्रियावादी व्यतेप्रकाश्यतइतिविष्णुर्देवो ॥ विष्णुपूर्वकादिवः ॥ पचाद्यचिगौरादि त्वान्ङीप् ॥ यथाक्षेमपूर्वकक्षत्रः क्षेमप्रियमद्रेणचतिणः प्रत्ययऽणन्तत्वा भावाट्टिड्ढेतिङीपप्राप्तौ गौरादित्वान्ङीप् ॥ सर्वलोकप्रकाशनामन्तरमेवा

ध्यक्षेवस्तुप्रकाशते इतिविष्णौप्रकाशते इत्युक्ताविष्णुलोकेऽपिप्रकाशते इतितात्पर्य्यम् ॥ नतुकेवलंविष्णावेवतस्यसर्वान्तर्य्यामित्वात्सर्ववस्तुतत्र प्रकाशतेकिमाश्चर्य्यमिति ॥ नमनंनमस्कारंकरोति नमस्यतिभगवद्भक्त इतिकर्त्तुरध्याहारः ॥ ननुसहस्रेणपितुर्मातेत्यादिस्मृत्यागर्भधारणपो षणादि कर्त्तृत्वेनैवगरीयस्त्वविशिष्टमातृत्वमित्युक्त्यामातरामितिग्रहणेनैव गर्भधारणवत्याः ग्रहणेजन्मदात्रीमितिगर्भस्थस्यममेहजन्मनिजन्मा न्तरेवासर्वलालनपोषणादिकमम्बिकायाएवभवति ॥ अन्यथासप्तदश वयस्कस्यममरणसमयेमातरिगौर्य्यांरतिर्विज्ञानंचकथंस्यादिति तन्मा तुरपिग्रहणंस्यादितितन्निरासार्थंपूर्वकेहजन्मदात्र्याः मातुर्ग्रहणंस्यादिति जन्मदात्रीमित्युक्तम् ॥ अन्यथापूर्वश्लोकोक्तेरेवतस्याः ग्रहणेपुनरुक्ति स्स्यादिति ॥ ५ ॥ अभिमतवस्तुपुरस्कारेणैवगुडजिह्वकयारसास्वादमुख कटुकौषधपानादाविवप्रवर्त्तयितव्याः यदाहस्वादुकाव्यरसोन्मिश्रंशास्त्रम प्युपयुञ्जते प्रथमंलीढमधवः पिबंतिकटुकौषधम् ॥ इहसकलपदार्थजाते षुस्वेष्टसाधनताज्ञानादेवप्रेक्षावतांप्रवृत्तिर्दृश्यते ॥ तदुक्तंन्यायकुसुमाञ्ज लौ ॥ आचार्य्यचरणैस्तदज्ञानविषयस्तस्यविधिः ॥ अत्रप्रयोजनाकांक्षा यांनिर्दोषंगुणवत्काव्यमलङ्कारैरलङ्कृतम् ॥ रसान्वितंकविः कुर्वीत्कीर्त्ति म्प्रीतिंचविन्दति इतिसरस्वतीकण्ठाभरणेभोजराजेनधर्म्मार्थकाममोक्षेषु वैलक्षण्यंकलासुचकरोतिकीर्त्तिम्प्रीतिंचसाधुकाव्य निषेवणमितिरसप्रका शिकाकारणकाव्यंयसेऽर्थकृतेव्यवहारविदेशिवेतरक्षतयेसद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजेकाव्यप्रकाशिकाकारेणच विशिष्टकाव्यकरणे प्रयोजनाभिधानात्प्रेक्षावन्तः प्रवर्त्तन्ते इतिपदपदार्थमात्रपरिचयचतुराः तद्रसप्रधानाभिः कविताभिः श्रीमहाकविकालीदासवाग्भट्टमाघादिना माङ्किताभिः चमत्कारिणीभिर्गाथाभिर्गोष्ठींवंधमनुबध्नन्ति इत्युक्तमहा कविभिर्विरचितात्कानुगुण्यफलकातिरघुवंशनैषधादीन्युत्तमानि काव्यानि

वहूनिसन्तिकिंचतदपेक्षयैतत्कालीनसप्तदशवयस्कस्यात्यल्पबुद्धेः काव्यक
र्त्तुर्महत्वस्यप्रतिभायास्स्फूर्त्तेश्चात्यल्पतयातस्यैवमहीयसोविषयस्य प्रतिपा
दननामसुचक्षुष्कैरप्यप्रत्यक्षीक्रियमाणवस्तुनिविलोकनायासो नयनविधु
रस्यैतिकथमधिकारः वासवेशास्त्रपठितकतत्कृतकाव्यस्योक्तकाव्यफला
नुगुण्यफलकताकथमस्तीत्यनुमिन्वन्तः कथंप्रवर्त्तन्तांकिंपुनरस्यग्रन्थस्यार
म्भेनिमित्तंनखलुनिर्निमित्ताप्रेक्षावत्प्रवृत्तिरितिचत् नभः पतन्त्यात्मसमं
पतत्रिणइत्यस्तितदधिकारः तत्प्रतिपादनतद्वैलक्षण्यबोधनायकाव्यानुव
न्धचतष्टयसत्वेऽपितदतिरिक्तानुबंधचतुष्टयनग्रंथारम्भनिमित्तमपिबोधय
न्नुपश्लोकते ॥ ननुग्रन्थकृतामेघदूतप्रसरणीमजयमित्युक्त्याकविकालि
दासकृतमेघदूतानुकरणमिदङ्काव्यमितितदीयैरेवानुबन्धैस्तद्वृत्तासिद्धेर्नतपृ
थगालोचनीयाः ॥ यद्यपितदीयानुबन्धाभावेऽपितस्यकाव्यप्रकरणत्वा
दवान्तरानुबन्धचतुष्टयमायाद्यानिर्दिष्टम् ॥ ननुमहाविषयादेरिहशास्त्री
यत्वेऽप्यवान्तरविषयादेः पृथगालोचनमुचितमितरथाशास्त्रंपरित्यज्यप्रे
क्षावतोऽत्रप्रवृत्त्ययोगात् वाढंप्रकरणत्वेनैवावान्तरसंगतेः॥ सुलभालोचन
त्वात्पृथगिहानिर्देशानपेक्षणात् ॥ अस्योत्तरमग्रेभविष्यति ( ततोऽप्यपूर्वं
संदर्भमित्यादिग्रन्थेन ॥ तथापितदीयानुबन्धचतुष्टयंद्विविधम् ॥ का
व्यविषयप्रबंधविषयंचकाव्येसगुणशब्दार्थौकिंचिदनलङ्कृतीत्यत्रेदंमत्कृति
साध्यमितिप्रवृत्तिप्रयोजकीभूतकृतिसाध्यत्वप्रकारकज्ञानविषयतयेदंमदि
ष्टसाधनमिति इष्टसाधनत्वप्रकारकज्ञानविषयतयाचकाव्यंविषयः यश
सेऽर्थकृतेइत्यादिप्रवृत्तिप्रयोजकीभूतेष्टसाधनत्वप्रकारकज्ञानविषयतयातदे
वप्रयोजनम् ॥ तत्कामोऽधिकारीत्येकम् ॥ द्वितीयंचप्रबन्धविषयम् ॥
तत्त्वविंयोगीपक्षस्यमेघद्वारासंदेशप्रायेणविषयः तत्स्त्रियोजीवधारणप्रयो
जनम् ॥ जीवितयास्त्रियासर्वसाधनीभूतगृहस्थधर्म्माधिकारीयक्षः
इति ॥ प्रकरणत्वंचशास्त्रैकदेशसंबद्धंशास्त्रकार्य्यान्तरेस्थितं ॥ आहुः

प्रकरणन्नामग्रन्थभेदांविपाश्रित इति प्रकरणलक्षणम् ॥ तथाचयच्छास्त्रैक दशसंबद्धंयत्प्रकरणंतत्तच्छास्त्रीयैरेवानुबंधवस्तुवद्युक्तम् ॥ अन्यथाशास्त्र प्रकरणयोर्भिन्नविषयादिमत्वेनशास्त्रासंबद्धत्वप्रसंगादसंबद्ध प्रलपितमिद मापद्येततातोऽस्यकाव्यग्रन्थस्यप्रकरणत्वादपिनतदीयैरेवानुबन्धैः केवलम नुबन्धत्वंकिंतुयागाविषयत्वात्तदीयैरेवानुबन्धैरप्यनुबन्धत्वमिति परस्परभि न्नकारणसामग्र्याः प्रतिबध्यप्रतिबन्धकभावननिश्चयाभावान्नोक्तानुबन्धै स्तद्वृत्तासिद्धिः प्रबंधाविषयानुबंधचतुष्टयेननापि यद्यपि संदेशप्रापणवि षयस्यैक्येऽपप्रयोजनाधिकारिणांभेदाद्विषयभेदः सचभेदप्रकारः इत्थंमेघ दूतंत्रियाजीवधारणम् ॥ मनोदूतमातुरम्बिकायाः भगवद्दत्तारिक्त प्रीत्य भावः प्रयोजनम् ॥ मेघदूतेजीवतयात्रियागृहस्थसुखाधिकारीयक्षः मनो दूतसंसारसुखं परित्यज्यमृत्युरधिकारी भगवद्दत्तः ॥ ननुयक्षात्रयो गौरीभगवद्दत्तयोश्च संदेश्यसंदेशकभावनतयोरेवोक्तफलकत्वान्नान्यथा

प्रबन्धविषयानुबन्धचतुष्टयेनेदंमादिष्टसाधनमितीष्टसाधनत्व प्रकारकज्ञा नविषयतायाः अभावान्नप्रवृत्तिरिति तदनुबन्धचतुष्टयप्रदर्शनफलमिति तुनाशङ्कनीयम् ॥ अथदूतानुकरणभिदङ्काव्यमित्युक्तयाकाव्यत्वेनैकत्वेऽपि ततोऽस्य पूर्वसंदर्भविषय भेदात्सादरेण प्रेक्षावतांप्रवृत्तिस्स्यादिति प्रेक्षा वतां प्रवृत्तिर्हि अनुबन्धचतुष्टयज्ञानम्विनानसम्भवतीत्यनुबंधचतुष्टयमा वश्यमेवकर्तव्यमनुबन्धचतुष्टयश्चप्रयोजकज्ञानविषयत्वं तत्रविषयप्रयोज न सम्बन्धाधिकारीति तत्रप्रथमंविषयज्ञानस्यावश्यकतयाप्रेक्षावान्स्वाधि कारं जानातिपदादिविषयज्ञातेहि तत्रेदंमदिष्टसाधनमिति इष्टसाधन त्वप्रकारकज्ञानविषयतया इदंमत्कृतिसाध्यमिति प्रवृत्तिप्रयोजकीभूतकृ तिसाध्यत्वप्रकारकज्ञान विषयतयाचप्रेक्षावताब्राह्मणादेर्नप्रवृत्तिरनधिका रात् ॥ एवंच प्रवृत्तावधिकारिज्ञानमप्यावश्यकम् ॥ अधिकारिणां विषयज्ञानेऽपिकृतिसाध्यत्वेष्टसाधनत्वेत्युभयप्रकारकज्ञानस्यकारणत्वमा वश्यकम् ॥ अतएवाधिकारिणामेवस्थ सुवर्णेइदंमदिष्टसाधनमितिज्ञानेपि

मर्वाराहणनप्रवृत्तिः कृतिसाध्यत्वा भावात् ॥ तथेदंसर्पग्रहणंमत्कृति साध्यमितिज्ञानापितद्ग्रहणेनप्रवृत्तिरिष्टसाधनत्वाभावात् ॥ एवंचाधिकारिणः प्रवृत्तिः प्रयाजकी भूतकृतिसाध्यत्वप्रकारकज्ञानविषयतयाप्रयाजन विषययोश्चतादृशेष्टसाधनत्वप्रकारकज्ञानविषयीभूततयाचलक्षणसमन्वयः संबंधश्चग्रंथविषययोः प्रतिपाद्य प्रतिपादकाभावः ॥ अधिकारिविषययो र्वश्यवशीकरणभावः ॥ अधिकारिप्रयोजनयोर्ध्यातृध्ययभावः ॥ तदुक्तम्। मंगलंचाभिधयंच संबन्धश्चप्रयाजनम् ॥ चत्वारिकथनीयानिशास्त्र स्यधुरिकीर्त्तिता ॥ तत्रमंगलमभिहितंजयतातागीरिसुतत्यादिनानमस्कारव चनेनाधुनाप्रेक्षावत्प्रवृत्युपयोग्यनुबंधचतुष्टयं बोधयन्नुपश्लोकतकरोतीति ॥ ५ ॥

मू० करोतिभगवद्दत्तोमनोदूतन्मनोहरम् ॥
भवानीभगवत्प्रीत्यै बालानांकृपयागुरोः ॥६॥

टी० करोतीतिभगवद्दत्तः ॥

अस्यान्वर्थोऽग्रेवक्ष्यतिटीकाकारः ॥ आत्मनामगुरोर्नामनामातिकृपण स्यचश्रयस्कामोनगृण्हीयाज्ज्यष्टापत्यकलत्रयोरितिस्मृत्यानिषेधात् ॥ स्व-नामाल्लखाऽत्रायुक्तःइतितुनशङ्क्यम् ॥ तन्निषधउच्चारणार्थकग्रहरुपादानेन तस्याच्चारणविशयकत्वऽपिलखनदाषप्रतिपादकत्वाभावात् ॥ अतएव गानंदीप आह ॥ भट्टोजिदीक्षितकृतिरित्यादितत्रतत्रग्रंथकृतांलखनंपरिशीलितं लक्ष्यते बालानामितिबलतिस्वीकरोतिहृदये स्थापयति पितृमात्राद्युक्तकर्त्तव्यवहान्नितिव्युत्पत्त्या ॥ ( बलसंवरण ) इत्यस्माज्ज्वलितिकसन्तेभ्यांणः ॥ इतिकर्त्तरिणः बालः तेषांअपरिपक्वयोगक्रियावतामित्यर्थः ॥ नत्वज्ञातयोगविषयाणां यैश्शास्त्रविषयएवाज्ञतस्तेषांमनास्थितिकरण अष्ट सिद्धिपूर्वकपरमात्मसाक्षात्कारोभवतीतिज्ञानाभावात्कथमत्रप्रवृत्तिः यद्य पिग्रंथकर्त्तीव्याकरणादिन्यायकाव्यादीनिपठन्मृतः नतुयोगविषयं तत्कि

यांचज्ञातवानितिप्रत्यक्षसिद्धम् ॥ ज्ञातवद्भिः किंबाल्यवयस्केनाल्पका
लेनकथंसर्वंज्ञातमित्यज्ञातयोगशास्त्रविषयएव मृतइत्यप्यनुमिन्वन्त्यन्ये
इत्यज्ञातयोगशास्त्रस्यबालत्वस्वीकारादपारिपक्वयोगक्रियाकत्वेसति ज्ञात
योगशास्त्रविषयत्वंबालत्वमितिपर्य्यवसितलक्षणस्य ज्ञातयोगशास्त्रविषय
त्वात् ॥ अज्ञात योगविषयत्वेनपदनुभूतंबालोयथाऽहंमनः स्थितिकरणेस
मर्थः तथैवान्येऽपि एवं चाज्ञातयोगविषयस्यबालत्वे उक्तलक्षणमतिव्या
प्तंस्यात्तथापि निगूढयोगशास्त्रविषयज्ञानेऽप्यष्टसिद्ध्यादिफलम्भवतीति
सामान्यज्ञानेनापूर्वादृष्टपुण्यवशान्मातुःकृपयाच स्वयमेव निगूढयोगज्ञा
नेनचमनस्स्थितिकरणत्वस्यसत्वादनुमन्तृणामुक्तानुमानं नयुक्तिसहम् ॥
यथाशमादिषट्कसंपत्तिंविनापिवामदेवविदुरादीनांपूर्वजन्मकृताभ्यासेन
ज्ञानंमन्यन्ते ॥ व्याकरणादीन्पठित्वामृतइतिहेतोः ॥ योगशास्त्रादिन
ज्ञातवानित्यत्रकेनसहविचार्य्यस्वकृतग्रन्थेयोगशास्त्रविषयस्संपादितः ॥
इत्यस्मिन्ग्रन्थेयोगशास्त्रविषयसंपादनादेव प्रत्यक्षसिद्धमितिकथनंदत्तति
लाञ्जलितम् ॥ यदितत्स्वकृतग्रंथेयोगशास्त्रविषयस्तत्कृतसंपादनमस्तीत्य
तोनज्ञातवानिति ॥ यथार्थानुभवोपिनिरसाः एवंचज्ञातयोगशास्त्रेणैवा
नुभूतं मनस्स्थितिकरणमात्मनि अन्यत्रोक्तबालेष्वपिस्यादित्यनुमन्ये इति
मन्यतांवा इति ज्ञातयोगशास्त्रविषयलक्षणस्यसत्वात् नाज्ञातयोगविष
येलक्षणमतिव्याप्तंस्यात् ॥ ननुज्ञातयोगविषयस्यलक्षणघटकत्वेऽपि आक
रादिक्लिष्टग्रन्थेभ्यःक्लेशेनविषयज्ञानसत्वे तेभ्यःएवमनास्थितिकरणरूपफ
लस्यसत्वात् ॥ तदर्थमात्रंपुनरत्रप्रवृत्तिरस्वीकारात् ॥ प्रयासोविफल
स्स्यादितिनशङ्कयम् ॥ उक्तग्रंथेभ्यो विषयज्ञानसत्वेऽपिपरिपक्वयोगंवि
नाभगवति परमप्रीतिर्नस्यात् अत्रतु परिपक्वयोगंविनापितत्रप्रीतिरस्तु
इत्याकरग्रंथवदस्मिन्नपिप्रवृतिरस्तु नप्रयासोविफलोनास्त्यनेन तेषांग
तार्थता इति ग्रन्थकृदाशयः किंचबालशब्देन केवलस्तनंधयस्यैव

नग्रहणंकिंतु बालस्स्यादर्भकेमूर्खेइति कोशप्रामाण्यादाषोडशाद्बालः इति स्मृतिप्रामाण्याच्च कोशेचबालः माणवक इति प्रतिपादनाच्चाधुनिकरा जनियमप्रबन्धानुसारेणचाष्टादशवर्षीयोबालः ॥ अतएवचकौमुद्यां दीक्षितप्रयोगोमाणवकंपन्थानपृच्छति माणवकंधर्म्मम्ब्रूते इतिसंगच्छते ॥ अन्यथाकथंधर्म्मधारणेशक्तोमार्गबोधने चातः कश्चित् ज्ञानवान्बालशब्देनगृह्यते एवंचसामान्यज्ञानवतामप्यधिकारः ॥ अर्थात्सामान्यज्ञानवतामप्यत्रप्रवृत्तावुक्तप्रीतिः प्रयोजनंस्यात् ॥ किंचव्याकरणादिष्वनधिकारित्वेनबालत्वमित्युक्तबाललक्षणेऽपि छन्दोऽलङ्काररसानुगुण्येनात्रप्रवृत्तावप्यानुषंगिकमनस्स्थित्यायोगिवत्फलंस्यात् ॥ नह्यत्रकाव्यग्रंथेमनस्स्थितिरानुषंगिकफलंनह्यन्यत्रयोगग्रंथेछन्दोऽलङ्काररसानुगुण्यंचानुषंगिकफलम्॥ एवंचोभयफलकत्वाद्बालानामत्यादरेणाधिकारः ॥ अतएवरसानुगुण्येन बालाः व्याकरणादीन्परित्यज्यापि तत्पठन्नपिकाव्यग्रंथानत्यादरेणपठन्तीतिसाक्षात्प्रसिद्धम् ॥ मनोहरंयद्यपि सुदरंरुचिरंचारुसुषमंसाधुसुन्दरंसाधुशोभनं कान्तंमनोरमंमनोहरमित्यपि इतिकोषप्रामाण्यात् ॥ मनोहरं सुन्दरेरूढित्वात् ॥ सुंदरमित्यर्थस्तथापि अनुबन्धचतुष्टयप्रतिपादन प्रकरणात् ॥ मनोहरपदेनप्रयोजनमुक्तम् ॥ तच्चयौगिकंविनाऽसम्भवीति व्युत्पन्नमेवगृह्यते तच्चाधस्तात्स्फुटीभविष्यति ॥ हारयतिगमयतीतिव्युत्पत्या ॥ ण्यन्तात्पचाद्यच् )॥ हरंमन्यतेज्ञायतेविषयाविषयान् चलाचलोपाधिभ्यामनेनेतिव्युत्पत्या ॥ सर्वधातुभ्योऽसुन् ॥ इतिकरणेऽसुन् ॥ इतिमनः तस्यमनसोहरंमनांसि हारयति प्रापयतीत्यर्थकम् ॥ प्रौढमनोरमामितिवत् ॥ भवानीचभवाँश्चतौभवानीभगवन्तौ तयोःप्रीतिर्भवानीभगवत्प्रीतिस्तस्यैमनोदूतम् ॥ दुगतावित्यस्मात् ( दुतनिभ्यांदीर्घश्च ) इतिक्तः धातोर्दीर्घश्च ॥ ) दवति अधिककार्य्यार्थंशीघ्रंगच्छति दूतःप्रेष्यः स्यात्संदेशहरोदूतइत्यमरः ॥ करोत्यभ्यधिकंकार्य्यंतमाहुर्दूतमुत्तमम् ॥

इतिभट्टिः ॥ मनश्चित्तंदूतत्वेनसंदेशहारित्वेनवर्णितंयत्रेतिमनोदूतंग्रन्थम् ॥ अत्रबालानामित्युक्त्यानिरुक्तपरिष्कृतविशिष्टानामाधिकारत्वम् ॥ मनोहरंभवानीभगवत्प्रीत्यावित्युक्त्यातच्चरणारविन्देमनःप्राप्तिरूपप्रयोजनम् ॥ मनोदूतमित्युक्त्या मनोवशीकरणरूपंविषयइत्यनुवन्धत्रितयंसूचितम् ॥ सम्बन्धश्चोक्तएव ननुयद्यपिमनोवशीकरणंविषयइत्युक्तंनतुमनोदूतं ग्रंथेतुमनोदूतमित्युक्तम् ॥ तथापिमनोवशीकरणंविनासस्मिन्दूतत्वमसंभवीतिमनोवशीकरणमेवविषयइत्युक्तम् ॥ यथामनुष्यपृथिवीधनादिवेतनाद्यनेकोपायेनवशीकृत्यदूतत्वंकल्पन्तेराजानस्तद्वत् ॥ ननुमनोवशीकरणस्यान्याष्टाङ्गविशेषयोगप्रतिपादकग्रंथेभ्योजायमानस्यसत्वात् ॥ कथमस्यात्यादरः इतिप्रश्नासोविफलस्स्यादितितन्न केचनक्षित्यादीन्नवद्रव्यान्वशीकरणंचचक्रुः ॥ श्रीरामचन्द्रपृथुरावणप्रभृतयः केचनकुर्वन्तिगौरमुखप्रभृतयः तथाहिपृथुराज्ञापृथिवीवशीकृत्यदुग्धातदुक्तंभागवते च स्कं प्रवेपमानाधरणीनिशाम्योदायुधंचतम् ॥ गौःसत्यपाद्भवद्भीत्यामृगीवमृगयुद्रुता ॥ श्रीरामचंद्रेणसमुद्रंवशीकृत्य सेतुंबध्वातत्पारम्बलमुतार्थसीताऽऽनीता ॥ तदुक्तंबाल्मीकीरामायणेयुद्धकांडे ॥ अथोवाचरघुश्रेष्ठः सागरंदारुणंवचः अद्याहंशोषयिष्यामिसपातालंमहार्णवम् ॥ सहसाभूत्ततोवेगाद्भीमवेगोमहोदधिः ॥ योजनंव्यतिचक्रामवेलामन्यत्रसंप्लवात् ॥ तंतथासमतिक्रान्तंनातिचक्रामराघवः तमुद्धतममित्रघ्नोरामोनदनदीपतिम् ॥ ततोमध्यात्समुद्रस्यसागरः स्वयमुत्थितः ॥ तेजः सूर्य्यादिः रावणस्यवशीभूत्वैवतद्भयात्तदुपयोगीयावदातपादिकंचकार ( तदुक्तम् ) माघकविनामाघे स्पृशन्सशङ्कःसमयेशुचावपिस्थितस्कराग्रैरसमग्रपातिभिः अघर्म्मघर्म्मोदकबिंदुमौक्तिकैरलंचकारास्यवधूरहस्करः ॥ निशान्तनारीपरिधानधूननस्फुटागसाप्यूरूषुलोलचक्षुषः प्रियेणतस्थाननराधबाधिताः प्रकम्पनेनानुचकम्पिरेसुराः ॥ किंचश्रीकृष्णेनमुञ्जाटव्यामग्निदाहसमयेतमग्निं

योगबलेनपीत्वा गोपालादीन्ररक्ष ॥ तदुक्तंश्रीभागवतेद० । स्कं० ॥
तथेतिमीलिताक्षेषुभगवानग्निमुल्बणम् पीत्वामुखेनतान्कृच्छ्राद्योगाधीशो
व्यमोचयत् ॥ आकाशश्चघटादिषुयोदृश्यतेसवशीभूतइवेत्याकाशोपिवशी
भूतः योगबलेनकालमपियोगिनोवशीकुर्वंति अतएवमार्कण्डेयादिः चि
रंजीविरस्तिदिक्चेश्वरनियमानुसारेणप्राचीपश्चिमानभवतिपश्चिमावपू
र्वानभवतीतीयमपिवशीभूतेववर्त्तमानायेकुर्वंति विस्तारभयान्नोल्लिखि
ताः ॥ परश्चक्षित्यादिषु आत्ममनसोर्वशीकरणंदुर्घटम् ॥ तत्रापिमनोव
शीकरणे आत्मवशीकरणंसुलभतरं तस्यद्वारभूतत्वादात्मनः मनोवशीक
रणमष्टाङ्गयोगसाधनंविनाप्यत्रापाततोभवतिभवानीभगवद्प्रीत्यैवकेवल
म् ॥ तदुक्तम् ॥ भक्त्याहमेकयाग्राह्यः श्रद्धयात्माप्रियस्सताम् ॥ भक्तिः
पुनातिमन्निष्ठाश्वपाकानपिसंभवात् ॥ धर्म्मःसत्यदयोपेतोविद्यावातप
सान्विता विमानन्दाश्रुकलयाशुद्ध्येद्भक्त्याविनाशयः वाग्गदगदाद्र
वतेयस्यचित्तंरुदत्यभीक्ष्णंहसतिक्वचिच्च विलज्जउद्गायतिनृत्यतेचमद्भ
क्तियुक्तोभुवनं पुनाति ॥ यद्यपिभगवताश्रीकृष्णेनोद्धवंप्रतिभक्त्यर्थ
मेवोक्तंनतुभगवत्यैव तथापिसौराः शैवाश्चगाणेशावैष्णवाः शक्तिपूज
काः मामेवमाप्नुवन्त्येतेवर्षाम्भःसागरंयथा इत्युक्त्वाभगवद्भगवत्योरै
क्यात्तद्ग्रहणे तस्याअपिग्रहणंस्यात् ॥ अतस्तेभ्योऽप्यत्यादरणीयमेव
मनोदूतम् ॥ ननूक्तविषयपरिज्ञातेऽपि प्रक्षालनाद्धिपङ्कस्यदूरादस्पर्शनम्व
रं स्वाधिकारमबुध्वाकैकःप्रवर्त्तेत् बुद्धिमान्नितिन्यायेनापरिपक्वयोगक्रिय
स्यमनस्थितावनधिकारात्कथम्प्रवृत्तिः तत्रतुपरिपक्वयोगक्रियस्यैवाधिकारः
( तदुक्तं योग भाष्ये ) । योगश्चित्तवृत्तिनिरोधः ॥ वृत्तिनिरोधश्चपरि
पक्वक्रियांविनानसंभवति । तदुक्तमभ्यासवैराग्यान्तन्निरोधः ॥ तत्रस्थि
तौयत्नोऽभ्यासः ॥ सतुदीर्घनैरन्तर्य्यसत्कारसेवितोदृढभूमिः ॥ सएव
परिपक्वयोगः यथाशमादिषट्कसंपत्तिम्विनावेदान्तेऽनधिकारः यथावा

घटादौजलाद्याहरणादीष्टसाधनत्वकृतिसाध्यत्व प्रकारकज्ञानविषय तया पित्राह्मणस्यनप्रवृत्तिरनधिकारत्वादेवंमनस्थितौ प्रवृत्तिप्रयोजकीभूतकृति साध्यत्वेष्ठसाधनत्वप्रकारकज्ञानविषयतयापि न प्रवृत्तिस्स्यान्नचाभिमत वस्तुनि प्रवृत्तिप्रयोजकीभूतकृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञानविषयत याऽनधिकारिणः प्रवृत्तिरस्तु यथाराक्षसस्यबलेः राज्ञोवेदानधिकारिणो ऽपिप्रवृत्तिर्यज्ञेयज्ञभागेचदीर्घकालनैरन्तर्य्याभ्यासवैराग्याभ्यां विनाऽप रिपक्वयोगक्रियस्यतत्रप्रवृत्तिसत्वात् किंबाधकमितिवाच्यम् ।। चित्तंनाम उभयतोनदीवाहिनीभवति कल्याणायवहति पापायचपातुकैवल्य प्राग्भा राविवेकविषयनिम्नासाकल्याणवहा संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा तत्रवैराग्येणविषयस्रोतःखिल्लीक्रियते विवेकदर्शनाभ्यासेनविवेक श्रोतः उद्घाट्यते इत्युभयाधीनाचित्तवृत्तिनिरोधः इत्युक्तं पातंजलयोगे पापवहा संसारप्राग्भाराऽविवेकविषयनिम्ना उक्ताभ्यासवैराग्याभ्यांचि त्तवृत्तिनिरोधेन चित्तस्थितौयत्फलं तस्मान्निवृत्तासंसारायैवभवति ननू क्ताभ्यासवैराग्येण चित्तस्थितौयत्फलं तस्मैभवति ।। तच्चद्रष्टुस्स्वरूपेऽन वस्थानम् ।। अयमाशयः ।। यदाचित्तस्यशान्तघोरमूढसर्ववृत्तीनां निरो धः तदाचिदात्मनः स्वाभाविकरूपेस्थितिर्भवति जपाकुसुमस्य स्फटिका द्दूरीनवृत्तौस्फटिकस्ययथा एवंप्रकृतेअपरिपक्वयोगक्रियस्यानधिकारिणो मनास्थितौ प्रवृत्तिर्भवानीभगवत्प्रीत्यैनस्यात् ।। मनश्चंचलत्वात्तस्यवशी करणंदुर्घटम् ।। तदुक्तंश्रीमद्भगवतगीतायाम् ।। चंचलंहिमनः कृष्ण प्रमा थीबलवद्दढम् ।। तदुक्तंकठोपनिषदि ।। विज्ञानवान्भवति युक्तेनमनसा सदा तस्येन्द्रियाणिवश्यानिदुष्टाश्वाइवसारथेः मनएवमनुष्याणां कारणं बन्धमोक्षयोरिति ।। तदुक्तंकठोपनिषदि ।। यच्छेद्वाङ्मनसी प्राज्ञस्तद्य च्छेज्ज्ञानमात्मनि ।। श्रीभग० गी० ।। असंशयंमहाबाहोमनोदुर्निग्रहंच्च लमिति ।। तदुक्तंवेदान्तदर्शने ।। ध्यानाच्च अस्यार्थः एकस्मिन्वस्तुनिचि

त्तसंलग्नेन अथवा उपास्यमात्रेचित्तैकाग्र्येणेत्यर्थः ॥ अचलत्वञ्चापेक्ष्य ॥ यत्रैकाग्रतातत्राविशेषादिति ॥ पातञ्जलसूत्रेप्युक्तम् ॥ तत्रप्रत्ययैकतानताध्यानम् ॥ तत्रभाष्यम् ॥ तस्मिन्देशेध्येयावलम्बनस्यैकप्रत्ययतासदृशः प्रवाहः प्रत्ययापरासृष्टोध्यानम् ॥ मनोवृत्तयश्चटीकायामग्रेस्पष्टीभविष्यंति ।' नन्वपरिपक्वयोगक्रियस्यानधिकारत्वादत्रकथंप्रवृत्तिः पुनःस्यादत आह ॥ कृपयागुरोः गुरोः कृपया इत्यस्यबालानामित्यत्रान्वयः ॥ निगरणार्थ ( गृधातोः ) कृग्रोरुच्चेत्यौणादिकेनकुः प्रत्ययः उश्चान्तादेशः गिरतिवेदादिशास्त्रानध्ययनद्वाराऽन्तःप्रवेशयति सदुपदेशार्थमितिगुरुः ॥ गुरोर्लक्षणंयाज्ञवल्क्येसागुरुर्यः क्रियाःकृत्वाचेदमस्मैनियच्छति किंचपद्मपुराणेऽपि देवपूजार्हकर्म्माणि देवतापूजनेफलम् ॥ गोप्यंवदतियोमंत्रं स गुरुः परमस्मृतः इति गुरुस्तातबृहस्पत्योर्गुरुर्निषेकाधिकारे पित्रादौसुरमन्त्रिणीतिविश्वः ॥ गुरौयतः एतादृशाशक्तिस्तत्रप्रमाणमाह ॥ योगुरुः सशिवः प्रोक्तोयः शिवः सगुरुस्स्मृतः ॥ यथाशिवस्तथाविद्या यथाविद्यातथागुरुः शिवविद्या गुरुस्तस्माद्भक्त्याच सदृशंप्रभुः सर्वदेवमयोदेवः सर्वशक्तिमयोहिसः सगुणोनिर्गुणोवापि तस्याज्ञांशिरसावहेत् ॥ लिङ्गपुराणीयवचनानि ॥ तैतरीयोपनिषदि ॥ आचार्य्यायप्रियंधनमाहृत्य प्रजातन्तुमाव्यवछेत्सीरिति ॥ आचिनोतिचशास्त्रार्थमाचारे स्थापयत्यपिस्वयमाचरते यस्मादाचार्य्यस्तेनचोच्यते ॥ इत्याचार्य्यलक्षणम्वायुपुराणे उक्तम् । अत्र पद्मपुराणीयमितिहासं प्रमाणयति कल्मषपादराजा केनचित्कारणेन गुरोर्वसिष्ठस्य शापात् राक्षसीदेहम्प्राप्य वनेभ्रमन् तत्र राक्षसीकाचिद्दृष्टातया राक्षस्यासहगुरोः शपितवटस्थ राक्षसेनसहेतिसम्वादे कथमेतादृशीदशागुरोः शापेनेत्युक्तौकेतेगुरवः तेषुपूज्यतमाःश्चके इति परिप्रश्ने मातृ पितृ श्वशुरमातुलान्नदातादयः तेषुपूज्यतमाः शास्त्राध्यापकवेदार्थरहस्य गूढमन्त्रोपदेशकाः इतिगुरोः प्रस्तावेत्रयस्तेराक्षसीदे

हान्मुक्ताः किंचटीकाकारस्स्वानुभूतं गुरोर्माहात्म्यमपिप्रमाणयति कदाचिन्ममकनिष्ठभ्रातुः रामचन्द्रनाम्नः उपनयनकर्म्मणि गायत्र्युपदेशार्थम्प्रार्थनयाऽऽहूतागतेन श्रीसद्गुरु श्रीगोकुलचन्द्रेणतदर्थञ्जलानयनायहेबाला इत्याव्हतंममगणपतिनामानंपितरंप्रति अद्यारभ्यपण्डितबालानन्द आह्वाने इत्याह्वातव्यमधुनायंपण्डित इत्युक्तम् ॥ तदनन्तरंकतिचित्कालंपश्चात्खर्जूररोगपीडितेनमया पंचवर्षावधिकालं पठनादि सर्वव्यवहारंपरित्यज्य शरीरस्यानवस्थित्या कदाचित्संगीत कदाचिद्वाद्यादि कदाचिद्वीणा कदाचिदिङ्लिशेत्यादि सर्वेष्वभ्यस्यनाकिमपिसकलंजातं दैववशादुक्तकालादनन्तरं औषधादिनाकिंचित्खर्जूरदोषोनिवृत्तः ॥ मनसिविचारोप्येवंजातः श्रीसद्गुरुचरणैरेवमुक्तमयं पण्डितः श्रीगुरोर्वाणीतुकदापिनिष्फलानभवतिमयातुसर्वं पठनादि परित्यक्तमित्यकस्मादेव श्रीसद्गुरुमातृपितृनपृष्ट्वैवालक्ष्यच संगोप्यैववाराणस्यां गतस्तत्रकतिचिद्दिनानन्तरंनतुमासानन्तरं श्रीसद्गुरुचरण निजपठित कौमुदीग्रंथेमांपरीक्ष्यपण्डितबालानन्द इत्याह श्रीमत्सद्गुरुतात्याशास्त्रिचरणः ॥ तत्र श्रीगुरुतात्याशास्त्रिचरणनिकटेत्रिवर्षान्न्यूनकालंव्याकरणन्यायसांख्ययोगमीमांसासाहित्य चिकित्सादिग्रंथान्पठित्वैतेषुदत्तपरिक्षिकेनमयां ऽशीतीसर्तार्थेषुश्रीबालशास्त्रिश्रीतात्याशास्त्रिश्रीदामोदरशास्त्रिश्रीगंगाधरशास्त्रि श्रीपंडितविभवरामाश्चैतैर्दत्तप्रतिष्ठाप्रत्रमेकंसंपादितं द्वितीयंच श्रीमहाराजजम्बूकाश्मीरातिब्यतादिपतेः श्रीरणवीरसिंहस्यकाशीस्थपाठशालामुख्याध्यापकटोपलेइत्युपाधि श्रीराजारामशास्त्रि श्री श्री अमृतशास्त्रि श्री रामशास्त्रि श्री मोरभट्ट श्री कविकालिदास श्री रणवीरसिंह महाराज प्रतिष्ठित मुख्यतमवर श्री पंडित सद्गुरु श्री गोकुलचन्द्र श्री पंडित गंगाधर श्री पंडितगणेश श्री पंडित दैवज्ञविश्वेश्वर श्री पंडित गोविंदाचारी श्री पंडित गंगाराम श्री वेदपाठीजनार्दन प्रभृतिभिर्दत्तप्रातिष्ठापत्रमेतत्सर्वं श्रीगुरुकृपयैवन्नाह्मिमदी

यः पुरुषार्थः तदन्तरं जम्बूनगरमागत्य श्री महाराज श्री रणवीरसिंहा ज्ञया उत्तरवाहिनी पाठशालायां यथोचितवेतनेनप्रविष्टः तत्र भगवद्दत्त उत्पन्न तत्रदशवर्षावधिकालं विप्रानध्यापयामास पश्चाद्रावलपिंड्यांसमा गतः तत्रद्वौपुत्रौ उमादत्तगणेशदत्तनामानावुत्पन्नौ तेषुभगवद्दत्तश्चव्याक रणन्यायसांख्यसाहित्यनाटकछन्दोधर्म्मशास्त्रादीन्पठित्वा दत्तपरीक्षको ऽभूत्पंचनदमहाविश्वविद्यालये येनचाष्टादशवर्षायुर्यावत्कालात्पूर्वमेवमनो दूतङ्काव्यन्निर्मायि द्वितीयश्चोमादत्तः संस्कृतविद्यायांमुनीमिङ्गलिशविद्या श्चपठन्प्रतिवर्षन्परीक्षान्दत्वा सतीर्थ्यैपुमेनेजरसंज्ञकामुपाधिसम्पादयन् त्रिवर्षात्पूर्वपंचमीकक्षाम्प्राप्तोऽभूत् ।। तृतीयश्चेदानीम्बालः एतदपिसर्वं गुरुकृपयैवभवतीतिमन्ये कृपयादयया कृपादयाऽनुकम्पास्यादित्यमरः ।। कृपाचपरदुःखासहिष्णुत्वेसति सतिसम्भवेतद्दुःखनिवर्त्तनं ।। साचगुण विशेषः मनसाध्यानेनधनेनशरीरेणविद्ययावासाचकृपागुरोरसेवयासेवया चेति तदधीनायथावृहस्पतिनादेवानामसुराणांचशुक्रेण ।। यथाकाश्चित्सम र्थोगुरुः स्वशिष्यव्यथयाव्यथितः स्वकृततपसातस्यतांनिवर्तयति ।। एव मत्रापरिपक्वयोगक्रियस्यानधिकारिणोऽपि श्रद्धावतः शिष्यस्य समर्थगुरु णासम्पादिताधिकारस्यधिकारः ।। यथानधिकारिणोऽपिसूताय ऋषिभिः प्रसन्नैर्ब्रह्मासनंदत्तम् ।। ( तदुक्तंश्रीभागवतेद० । स्कं० । ) ।। अस्यब्रह्मा सनंदत्तमस्माभिर्यदुनन्दनआयुश्चात्माक्लमंतावद्यावत्सत्रंसमाप्यते अजान तैवाचरितस्त्वयाब्रह्मवधोयथा योगेश्वरस्यभवतोनाम्नाऽपिनियामकः ।। ननुब्रह्मर्षित्वानधिकारिणोपि विश्वामित्रायब्रह्मर्षित्वं ब्रह्मादिदेवाऽपितप साप्रसन्नाः कथन्नाददुः ऋषयश्चसूतायाददुः इतिपरस्परविरोधान्नानधि कारिणोऽधिकारत्वमित्यत्रनाशङ्कनीयम् ।। यत्फलंसात्विकतपसाप्राप्यंत तत्कथंराजसेन विश्वामित्रेणतुवसिष्ठऋषिणासहविरुद्धयतपस्तप्तंराजसमि ति तत्सात्विकफलंदातुनशक्यन्ते सूतस्यविनयेनात्यन्तभक्ताय तस्मैपर

मेश्वरस्याददुरितिनविरोधः तदपिऋषित्वस्यानधिकारिणेऽपिराजर्षित्वं ( तदुक्तंरामायणे ) जिताराजर्षिलोकास्ततपसाकुशिकात्मजा अनेनतप सात्वांहिराजर्षिरितिविद्महेबालकांडे) ॥ तदुक्तंगीतायाम् ॥ अ० १४। रजोरागात्मकंविद्धितृष्णासंगसमुद्भवम् ॥ तत्रसत्वंनिर्मलत्वात्प्रकाशकम नामयं ॥ ऊर्द्ध्वंगच्छान्तिसत्वस्थाः मध्येतिष्ठंतिराजसाः इति ॥ कृपयेति तृतीयायाः विशिष्टत्वमर्थः तस्यविशेषणत्वेनबालपदार्थेऽन्वयस्तथाचगु रुकृपाविशिष्टाः येबालास्तेषां कार्य्यस्यकारणसामग्रींविनापितत्कार्य्यसि द्धिरितिभावः ॥ करोतिस्वस्यविद्याविरहेणस्वमनस्स्थिरीकृत्यभवानीभग वच्चरणारविन्दरतिर्मेतद्ग्रन्थकर्म्मणा प्रकटयतीत्यर्थः ॥ एतदर्थश्चकृधा तोः ॥ धातूनामनेकार्थत्वात्सेधतेर्गतावित्यत्रगत्यर्थकरणात् किंचकृञः सामान्यक्रियावाचकत्वाच्च प्रकटार्थश्चतात्पर्य्यात् तात्पर्य्यंश्चयथामेप्रीति र्बालानामपिस्यादित्युक्तमेवपूर्वं ॥ ननुस्वमनस्स्थिरीकरणपूर्वक भवानीभग वच्चरणारविंदरतेस्त्रात्मसमवेतफलकत्वादात्मनेपदप्रयोगो वक्तुमुचितस्त थापिग्रंथकर्त्रामरणसमयेएवकृतमितिनिश्चयस्यसत्वात् ॥ तस्यमनसाव शीभूतत्व मितिग्रंथकरणात्पूर्वमेवान्यथाष्टादशवयस्कस्यमरणसमयेकथमे तादृशाबुद्धिर्ग्रंथरचनेप्रसक्तायदिग्रंथानन्तरं कतिचित्कालमस्यग्रन्थस्यपठ नपाठनेकालोव्यतीतोऽभूत्तदापि पठनपाठनफलमपितस्यात्मनिस त्वादात्मने पद प्रयोगोयुक्तस्स्यात् किन्तुबालसमवेतमनास्थिरत्यपूर्वं प्र योजनप्रकृतक्रियाफलकत्वेनाभिप्रेतत्वात्तस्य परगामित्वात्परस्मैपदम् ॥ यदिमातुरम्बिकायाश्चरणसेवारतिफलस्यापूर्वादृष्टस्य फलकस्यास्यग्रंथस्य परममात्मनितथापि उद्देशस्यबालाना मित्यस्यविद्यमानत्वाल्लौकिकप्रधा नफलंतदेव किंचापुत्रेणग्रन्थकर्त्रामरणोत्तरकालीनममयशोविशिष्टन्नाम लोकेस्यात्तदपिनामश्रवणरूपफलमस्माकन्न तस्ययदिग्रंथकर्तॄणांसर्वेषामि यंशैलीपरिलक्ष्यतेग्रन्थकरणात्पूर्वमेवप्रबन्धप्रतिपाद्यविषयान्मनसि निधा

यत्तत्प्रतिपादकग्रंथान्कुर्वन्तीतिग्रंथकरणात्पूर्वमेवग्रन्थकर्तुरुक्तफलम् ॥ तच्चतस्यात्मनिसत्वादात्मनेपदयुक्तमितितूक्तोत्तरमेवबालमनस्स्थित्यादि कथनेन ॥ मूलोक्तानुबन्धचतुष्टयप्रतिपादकश्लोकावसरेऽनुबंधचतुष्टय ङ्किम् ? ॥ इत्याकांक्षायांविषयप्रयोजनसंबंधाधिकारीतित्युक्तौतद्घटका धिकारीतिसामान्येननिर्देशाद्यावत्कार्य्यस्याधिकारीतिग्रहणेयज्ञसंस्कारवे दादिपठनकार्य्यस्यापिग्रहेतत्रब्राह्मणादीनामेवाधिकारः ॥ नशूद्रस्येत्युक्तौ तत्रनशंसयः ॥ ब्राह्मणवत्करचरणादीनांशूद्रस्यापिसत्वात्कथंशूद्रस्यतत्रान धिकारः? इतिशंकानिराकरणायब्राह्मणादीनांशूद्रस्यचभेदस्वच्मि ॥ सच भेदोभविष्यत्पुराणीयशतानीकसुमंतसम्वादीयः ॥ ऋषयऊचुः ॥ भोत्र ह्मन्नादिकल्पेब्राह्मण्यंब्रूहिकिम्भवेत्॥ जात्यध्ययनदेहात्मसंस्काराचारकर्म्म णाम् ॥ बाह्याभ्यन्तरसामान्यविशेषाः ॥ यदिकृत्रिमाः मनोवाक्कर्मशारी रज्ञातिद्रव्यगुणात्मकाः ॥ सन्त्यव्यक्ताः प्रसिद्धाः येजातिभेदविधायि नः ॥ जातिश्श्रेष्ठाउतकर्म्म ॥ जीवेब्राह्मण्यं ॥ उतदेहे ॥ ब्राह्मण्यमुत देहरूपंवा ॥ जीवस्यजातित्वेतर्हिकथंव्याधादीनांब्राह्मणजन्म ॥ यदि देहस्यविप्रत्वं देहशक्तिगुणैःक्षीणैः कार्यभस्मादिरूपवत् तस्माद्देहात्मकेनै तद्ब्राह्मण्यम् ॥ नापिकर्मजम् ॥ नब्राह्मणाश्चंद्रमरीचिशुभ्राः नक्षत्रियाः किंशुकपुष्पवर्णाः गवाश्वादिवत्स्वरूपभेदोपिनअतएवजातिकृतभेदोपिन ॥ तदुक्तम् ॥ सएकएवनृपतिः प्रजानांकथंपुनर्जातिकृतः प्रभेदः प्रमाणदृ ष्टान्तनयप्रवादैः परीक्ष्यमाणोविघटत्वमेति ॥ चत्वारएकस्यपितुः सुता श्चतेषांसुतानांखलुजातिरेका एवंप्रजानांहिपितैकएवपित्रेकभावान्नचजाति भेदः ॥ किंचभा० शा० प० ॥ ब्राह्मणानांसितोवर्णाः क्षत्रियाणांलोहि ताः वैश्यानांपीतकोवर्णाः शूद्राणांमसितास्तथा तथापिचातुर्वर्ण्यस्यवर्णे नयदिवर्णोविभिद्यते सर्वेषांखलुवर्णानांदृश्यतेवर्णसंकरः किंचकामादिक्षुधा दिस्वेदमूत्रादीन्तनुः क्षरतिसर्वेषांस्थावरजंगमानामेनेकाएवजातयः इति

जातिकर्म्मादिभिर्नवर्णविभागइतिवाच्यम् ॥ नच नविशेषोऽस्तिवर्णानां सर्वंब्रह्ममिदंजगत् ॥ ब्रह्मणापूर्वसृष्टंहिकर्मभिर्वर्णतांगतम् ॥ अयंभावः ॥ ब्रह्मणापूर्वसृष्टिरचनाकालेसर्वंजगद्ब्राह्मणमयमुत्पादितंतेषुयेधातृकृतब्राह्मणार्थसत्यधर्म्माचारशौचादेर्यदृच्छयानिवृत्ताःकामचारेणराजसकामक्रोधादिषुप्रवृत्ताः प्रियसाहसाः त्यक्तस्वधर्माः तेक्षत्रतांगताः लोभात् ॥ नत्वज्ञानतः ॥ एवंवैश्यशूद्रयोरपिज्ञेयम् ॥ यथाकश्चिद्व्यापार्य्यधिकद्रव्यप्राप्तिलोभेनजाम्बूनदसुवर्णेरजितंपरिक्षिप्यमलिन्यंकुर्वन् ॥ पूर्वमूल्यादपिन्यूनमुद्भावयति ॥ अज्ञातकृतपापस्यैवधर्मशास्त्रेप्रायाश्चित्तम् ॥ न्यूनम् ॥ कस्यचिद्ज्ञातस्यापिप्रायाश्चित्तंनास्ति ॥ अस्तिचेत्कस्यचित् ॥ द्विगुणंचतुर्गुणम्वा ॥ एवंसृष्टिकालादारभ्यतेषांस्वकृतकर्म्मणातेषुक्षात्रियादिजातिब्रह्मणासांकेतिकीकृता ॥ अन्यथायदेतज्जायतेऽपत्यंसएवायमितिश्रुत्या ॥ ब्रह्मणः उत्पन्नत्वेनब्राह्मणरूपेपिराजसादिकर्म्मकृतकर्म्मभेदेऽपिसर्वेषांतत्कर्मसाधारणत्वात् ॥ सकरेणोत्तममध्यमाधमादिभेदोनस्यात् ॥ एवंचतस्मिन्समयेयेब्राह्मणाभूत्वा उक्तब्रह्मकर्मसंपन्नाः तेब्राह्मणाः येचत्यक्तस्वकर्म्मणाः क्षत्रियाभूत्वाक्षत्रधर्म्मनिपुणाः तेक्षत्रियाः वैश्यशूद्रयोरपि एवमेव ॥ तथाचजातिकर्मणोरुभयोरेवप्राधान्यंनतुकेवलकर्म्मणः किंचयथोत्तमाधिकारी । उत्तमाधिकारेराज्ञायोजयन्नपि आलस्यवशाल्लोभाच्चतमगृह्णन् ॥ नीचाधिकारंगृह्णन्तंक्रोधवशादयन्नीचाधिकारयोग्यः ॥ आमरणान्तम्भवेदितिराजाज्ञयाप्युत्तमाधिकारेकदाऽपियोनभवतितद्वदत्रापिज्ञेयम् ॥ यथाविश्वामित्रसुताः पितुराज्ञः पालकाः मधुच्छन्दादिगोत्रम्प्राप्ताः अन्येचम्लेच्छाः येनपालयन्तितदाज्ञाम् ॥ तदुक्तंभारते ॥ इत्येतेचतुरोवर्णाः येषांब्राह्मीसरस्वती विहिताब्रह्मणापूर्वंलोभादज्ञानतांगताः ॥ किंचतदुक्तंभारतेजनकभारद्वाजसंवादेशान्तिपर्वणी ॥ वर्णोविशेषवर्णानांमहर्षेकेनजायते ॥ यदेतज्जायतेऽपत्यंसएवायमितिश्रुतिः ॥ कथम्ब्रह्मणतोजातो

विशेषग्रहणङ्कतः ॥ एवमेतन्महाराजयेनजातस्सएवसः ॥ तपसस्त्वपकर्षेणजातिग्रहणतांगतः ॥ सुक्षेत्राच्चसुबीजाच्चपुण्योभवतिसम्भवः ॥ अतोऽन्यतरतोहीनादवरोनामजायते ॥ अन्यतरत्वहीनत्वमपिकुतइत्याशङ्कयोत्पत्तिस्थानभेदात् इत्याह ॥ वक्त्राद्भुजाभ्यामुरुभ्यांपद्भ्यां चैवाथजज्ञिरेसृजतः प्रजापतेर्लोकान् ॥ इतिधर्म्मविदोविदुः ॥ मुखजाः ब्राह्मणाः जातोबाहुजाः क्षत्रियास्मृताः ॥ ऊरूजाः धनिनोराजन्पादजाः परिचारकाः ॥ चतुर्णामेववर्णाना मागमः पुरुषर्षभ अतोऽन्येत्वतिरिक्ताः येतेवैसङ्करजातयः ॥ तदुक्तंयजुर्वेदसंहितायांपुरुषसूक्तेप्रश्नोत्तररूपम् ॥ मुखंकिमस्यासीत्किंबाहूकिमुरूपादावुच्येते ॥ ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याँशूद्रोऽजायत इति ॥ तदुक्तंगीतायां ॥ चातुर्वर्ण्यंमयासृष्टंगुणकर्म्मविभागशः ॥ तस्यकर्त्तारमपिमांविद्ध्यकर्त्तारमव्ययम् ॥ किंचभार० असृजद्ब्रह्मणानेवपूर्वंब्रह्माप्रजापतीन् ॥ आत्मतेजोऽभिनिर्वृत्तान्भास्कराग्निसमप्रभान् ॥ तत्तस्सत्यंचधर्म्मश्चतपोब्रह्मसनातनम् ॥ आचारंचैवशौचंचस्वर्गायविदधेपुनः ॥ भविष्येऽप्युक्तं म० प० अ०.४ ॥ त्रयाणामेववर्णानांजन्मतोब्राह्मणः प्रभुः ॥ संसृष्टाः ब्राह्मणाः पूर्वंतपस्तप्त्वाद्विजोत्तमाः ॥ हव्यानाभिवक्व्यानांसर्वस्यापिचगुप्तये ॥ अश्नन्तिचमुखेनास्यहव्यानित्रिदिवौकसः ॥ भारते शा० मो० वर्णवि० अ० १८८ ॥ ब्राह्मणलक्षणमुक्तम् ॥ जातकर्म्मादिभिर्य्यस्तुसंस्कारैः संस्कृतश्शुचिः ॥ वेदाध्ययनसंपन्नः षट्कर्म्मसुव्यवस्थितः ॥ शौचाचारस्थितः सम्यग्विघसाशीगुरुप्रियः ॥ नित्यव्रतीसत्यपरः सवैब्राह्मणउच्यते ॥ सत्यंदानमथाद्रोह आनृशंस्यंत्रपाघृणाः तपश्चदृश्यतेयत्रसब्राह्मणइतिस्मृतः ॥ महाभाष्येअ० ॥ २ ॥ तल्लक्षणंच ॥ तपः श्रुतंचयोनिश्च एतद्ब्राह्मणकारकम् ॥ तपः श्रुताभ्यांहीनोयोजातिब्राह्मणएवसः ॥ तदुक्तङ्गीतायां ३०९ ॥ मांहिपार्थव्यपाश्रित्ययेपि

स्युः पापयोनयः ॥ स्त्रियोवैश्यास्तथाशूद्राः तेपियांतिपरांगतिम् ॥ कि
म्पुनर्ब्राह्मणाः पुण्याः भक्ताः राजर्षयस्तथा ॥ किंचबृहदारण्यकोपनि
षदि ॥ किम्पुनर्देवादिकर्म्मकर्त्तव्यत्वेनिमित्तंवर्णाश्रमाश्चतत्रकेवर्णाइत्य
तइदमारभ्यते ॥ तदेतद्ब्रह्मक्षत्रंविटशूद्रः तदग्निनैवदेवपुब्रह्माभवद्ब्रा
ह्मणः ॥ मनुष्येषु क्षत्रियेणक्षत्रियः वैश्येनैवश्यः शूद्रेणशूद्रः तस्मादग्ना
वेवदेवेषुलोकमिच्छन्ते ॥ ब्राह्मणेमनुष्येष्वेताभ्यांहिरूपाभ्यांब्रह्माभवत् ॥
अस्याऽर्थोऽयम् ॥ शङ्करभाष्ये ॥ ब्रह्मवाइदमग्र आसीद्यदग्निसृष्टाग्नि
रूपापन्नब्रह्मब्राह्मणजात्यभिमानाद्ब्रह्मेत्यभिधीयतेवैइदंक्षत्रादिजातः ॥ ब्र-
ह्मैववाभिन्नमासीदेकमेवनासत्क्षत्रादिभेदस्तद्ब्रह्मैकंक्षत्रादिपालयित्रादिशू
न्यं सन्नव्यभवन्नविभूतवत्कर्म्मणोनालमासीदित्यर्थः ॥ तत्तस्तद्ब्रह्मब्राह्म
णोऽस्मिममेत्थंकर्तव्यमिति ॥ ब्राह्मणजातिनिर्वर्त्यकर्म्मचिकीर्षयात्मनः
कर्म्मकर्तृत्वविभूत्यैश्रेयोरूपंप्रशस्तरूपमत्यसृजतातिशयेनासृजत्सृष्टवत् ॥
विस्तरस्तुतत्रैवद्रष्टव्यः ॥ किंचछांदोग्योपनिषदि ॥ तद्यइहरमणीयचरण
अभ्याशोहयत्तरमणीयांयोनिमापद्येरन्ब्राह्मणयोनिंवाक्षत्रिययोनिं वावैश्य
योनिंवाथयइहकपूयचरण अभ्याशोहयत्तेकपूयांयोनिमापद्येरन् श्वयोनिं
वासूकरयोनिंवाचांडालयोनिंवा ॥ यत्त्वाधुनिकैः शुष्ककुतर्कवादिभिः ॥
इदमुच्यते ॥ जातोव्यासस्तुकैवर्त्याः श्वपाक्याश्चपराशरः ॥ बहवोऽन्ये
ऽपिविप्रत्वंप्राप्तायेपूर्ववाद्विजाः ॥ इतिभविष्यत्पुराणीयवचनान्युपष्टंभकं
कृत्वा नीचजातावुत्पन्ना कथंब्राह्मणत्वंप्राप्ताः तथापिव्यासादिमहर्षिमनु
ष्यानां शुक्यादिपक्षिविशेषजातेरुत्पत्त्यसम्भवात् ॥ तत्तदृषीणांसं
कल्पेनशुक्यादिषूत्पन्नत्वेपितत्संकल्पवशान्नतज्जात्यपत्यत्वम् ॥ नतद
पत्यत्वकर्म्मकर्तृत्वम् ॥ किंचयेऽन्ये एवंकर्मकर्त्तुम्प्रवर्त्तेरन् तेऽपि
अनेकवर्ष साध्यतपसासामर्थ्यसंपाद्यसाङ्कल्पिक सृष्टिंकर्त्तुसमर्थाश्चेत्तदा
तत्कृतसंतानप्रवन्धसंशुद्धाः भवेयुरितिद्योतनायैव शुक्यादिषु संतानप्रद

शिता इतिभावः ॥ अतएव तत्रवचनेपुतन्मातृउच्चारसो न क्षेत्रत्वमुच्यते एवंचऋषितेजसोत्पन्नत्वेन तद्वीर्य्यमेवगृह्यते यथाइन्द्रजालिकाऽदर्शेमृत पितृन्दर्शयन्ति पश्यंतिचद्रष्टारा: स्वसंकल्पवशान्नतुतेऽदर्शस्था: एवमृषि संकल्पवशात्ते ब्राह्मणाएवबभूवु: क्षेत्रजन्यनिवृत्तिस्तुतपोभिरेवकृत: एत दर्थे अग्रेप्रमाणंभविष्यति किंचस्मृतिसंस्कारयोरेकरूपत्वात् अनेकजाति देशकालव्यवायेपिभेदोन ॥ तदुक्तंपातंजलयोगे जातिदेशकालव्यवहिता नामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ तदुक्तं भ० वि० ब्रा० प० अ० ४ ॥ शुक्या: शुक: कणादाख्यस्तथोल्लूक्या: सुतोऽभवत् ॥ मृगीजोऽथर्वशृंगोऽपिवसिष्टोगणिकासुत: मन्दपालोमुनिश्रेष्ठोनाविकापत्य मुच्यते ॥ २३ ॥ माण्डव्योमुनिराजस्तुमण्डूकीगर्भसंम्भव: ॥ २४ ॥ यश्चैतच्चारुचरितैरच्र्यमुच्चरितंवच: तद्विचार्य्याचरन्नुच्चैराचारोपचितद्यु ति: ॥ २६ ॥ हरिणिगर्भसम्भूत: शृष्यशृङ्गोमहामुनि: तपसाब्राह्मणो जात: संस्कारस्तेनकारणम् ॥ २७ ॥ श्वपाकीगर्भसंभूत: पिताव्यासस्यपा र्थिव तपसाब्राह्मणोजात: संस्कारस्तेनकारणम् ॥ उल्लूक्या: गर्भसंभूत: कणादाख्योमहामुनि: तपसाब्राह्मणोजात: संस्कारस्तेनकारणम् ॥ किंच शुक्यादीनां तन्मातृनामपरत्वेन तदपत्यत्वान्नाधुनिककुतर्कावसर: ॥ नच शुक्यादीतन्मातृनामपरत्वेतु तपसाब्राह्मणोजात इत्याद्युक्तेरसंगत्या पत्तिरितिवाच्यम् तन्मातृणां ब्राह्मणजातावुत्पन्नत्वेऽपि श्वपाक्यादिजा तिविहित नामवाच्यत्वात् तन्मातृणामेतावतैवदुष्टत्वेतद्दोषनिवृत्यर्थयेतप साब्राह्मणोजातइति तदुक्तं धर्म्मसिंधौसंस्कारभास्करेच स्त्रीणांनामकर्म्म णिदेवितानाम् सुचक्रिणी वैकुंठीवासुदेवीत्यादीनि किंचशुद्धदुग्धस्यस्व तोमिष्टत्वेऽपि तत्तदाम्लकटुककषायद्रव्येणसंस्कारेऽपि विकृतावुपायसहस्रे णाऽपि तद्विकृतिंप्रतिकर्त्तुमसमर्थजन: शुद्धपयस: एकत्वेऽपितत्तद्द्रव्य पुरस्कारेणानेकविधत्वे नतु शुद्धंपयइतिवक्ति ॥ प्रकृते उक्तेश्वरानियमा

नुसारंणैकस्यसतः शुद्धस्यराजसविशिष्टत्वेनानेकविध आधुनिकोक्तियुक्त्याकथमेकत्वम् ॥ उक्तमहर्षीणामनेककालिकसाध्यात्युत्कटशीतवातहिमादिसह्यात्युग्रतपसा नतु सुगमोपायेनेति । ये तु महर्षि मनुतात्पर्य्यानभिज्ञाः स्वमनः कल्पितरुचिकर तात्पर्य्यायकुतर्कारूढा । " शूद्रोब्राह्मणतामेति " इत्यादि मनुवचनमवलम्ब्य शूद्रोऽप्येकस्मिन्नेवजन्मनि तप आदिकर्मणब्राह्मणत्वमाप्नोति, तऽतीवमन्दाः शुष्ककुतार्किणः, उक्तमनुवचनात्पूर्वदशमाध्यायस्थ चतुषष्ठिश्लोकेददतुद्दष्टिम् । शूद्रायां ब्राह्मणाज्जातः श्रेयसाचेत्प्रजायते । अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद् युगात् ॥ अत्र कूल्लूकभट्टः शूद्रायां ब्राह्मणाज्जातः पारशवाख्योवर्णःप्रजायते सामर्थ्यात् स्त्रीरूपः स्यात् सा यदि स्त्री ब्राह्मणेनोटासती प्रसूयते साद्दुहित रंजनयतिसाप्यन्येन ब्राह्मणेनोटासतीदुहितर मेवजनयति साप्येवमेव सप्तमेयुगे (सप्तमजन्मनि) स पशवाख्योवर्णो बीज प्राधान्यात् ब्राह्मण्यं प्राप्नोति, आसमाप्तयुगाभिधानात् सप्तमेजन्मनि ब्राह्मणः संपद्यते इत्यर्थः । इत्युक्तश्लोकतात्पर्य्यात् शूद्रशब्देन पारशवाख्यः शूद्रोवर्णउक्तरीत्या ब्राह्मणतामेति । एतत्प्रघट्टकस्थशूद्रो ब्राह्मणतामेतीतिश्लोकेऽपि तदेवशूद्रो गृह्यते न सामानशूद्र इति । किंचत्र्यहेणशूद्रोभवति ब्राह्मणः क्षीरविक्रयी शूद्रोब्राह्मणतामेति ब्राह्मणश्चेति शूद्रतामिति भविष्यपुराणीयवचनेनापिनसामान्य शूद्रस्यग्रहणम् ॥

मू० बाल्मीकादेः कृतकवितयायास्तिकीर्त्तिस्तुयस्याः
कासौकामीकलघुविषया मेमतिस्स्यात्प्रबन्धे ॥
प्रभ्वीयाहंमुखमपिलघुप्रार्थनामेरुतुल्या
लोकेहास्यम्प्रतिदिनमहस्वैगमिष्याम्यसत्सु ॥ ७ ॥

सम्प्रति अहंकारन्निवर्त्तयति बाल्मीकादेरित्यादिनासपादेनातआह

बाल्मीकादेरिति बाल्मीकिऋषिः श्रीरामायणकर्त्ता वल्यतेसंवेष्ठ्यते उपर्य्यु परिक्रियतेक्षुद्रर्जावैर्य्यामृदा इतिव्युत्पत्याकारणस्यग्रहणं तदपिसमवायि कारणतत्कार्य्ययोरेक्यात् ॥ घटकघटितभावेनबल्मीकस्यग्रहणंतच्चभप्रवो यस्मादितिव्युत्पत्त्याबल्मीकप्रभवत्वेन गोणीपुत्रादिवद्गौणपुत्रत्वमस्यब ल्मीकापत्यत्वम् ॥ गृहीत्वा अत इञ् इतीञ् साधुरपत्यार्थकः ॥ तदुक्तंब्रह्मवैवर्त्ते बल्मीकप्रभवोयस्मातस्माद्वाल्मीकि रित्यसौ किंचवल्यतेसं वेष्ट्यतेतपासिस्थितोऽसौक्षुद्रर्जीवैर्मृदा इतिव्युत्पत्यापि अलीकादश्चेत्यौणा दिकेनवलसंवरणे इत्यस्मात्करणेकर्म्मणिचकीकन् प्रत्ययः मुगागमश्चब ल्मीकः ऋषिविशेषः तस्मादपत्यार्थे इञ् ॥ अत्युग्र तपकर्तृणां महर्षीणा मुपरिजीवैर्बल्मीकंविरच्यते इत्यत्र श्रीभागवतोक्तदृष्टान्तमाह यथाच्यव नऋषिः ॥ तदुक्तंतत्रैवन० स्कं० ॥ सुकन्यानामतस्यासीत्कन्याकमललोच चनातयासार्द्धवनगतोह्यगमच्च्यवनाश्रमं सासखिभिः परिवृताविचिन्व न्त्यंघ्रिपांवने बल्मीकरन्ध्रेददृशेखद्योत इव ज्योतिषी ॥ वावल्मीकपक्षे वामलूरश्चनाकुश्चबल्मीकं पुन्नपुंसकमित्यमरः ॥ आदिपदेनमहाकविका लिदासमाघादिरित्यर्थः ॥ कृतायाकविताकृतकविताकाव्यमित्यर्थः ॥ कुशब्देकुवर्णे इत्यतोवा ॥ अचइरित्यौणादिकेने प्रत्ययः ॥ कुवतिवर्ण यतिसर्वेषांयथार्थायथार्थगुणान् अलङ्काररसाद्यनुगुण्येनेतिकविः काव्य कर्त्ताकविः काव्यकरेसूरौकविर्वाल्मीकिशुक्रयोरितिविश्वकोशः ॥ विनये नविनाकाशीः कानिशाशशिनाविनारहितासत्कवित्वेनकीदृशीवाग्विदग्ध ता ॥ कवेर्भावः कविताकाव्यम् ॥ तद्योगाद्ग्रन्थोऽपिकाव्यम् ॥ अर्था त्काव्यमापाद्यतयायत्रेतितद्ग्रन्थोऽपिकाव्यमित्यर्थः ॥ कृतारचिता रचि तानियानिशृङ्गारादिरसापूर्व छन्दालङ्कारविशिष्ठरामायणादीनिकाव्यानी त्यर्थः ॥ तयाकृतकवितयायाकीर्त्तिः क्रियतेगीयते इत्यर्थः ॥ साद्गुण्येन विद्ययावीरतयापरोपकारेणचेतिकीर्त्तिः यशः ॥ कीर्त्तिः प्रसादयशसोवि

स्तारे कर्दमेऽपिचेतिहैमः ।। यद्यशोऽस्तिभवति ।। यस्याः कृतकाव्यकीर्त्तेः अहंभगवद्दत्तः कामी अभिलाषी ।। कामोऽभिलाषातर्षश्चेत्यमरः ॥ क्व असौकविवाल्मीकादेः कीर्त्तिः अतिदूरतरेत्यर्थः ।। लघिगतावित्यस्माल्लघिवंह्योर्नलोपश्चेतिकुः ।। लङ्घितुंशक्यते इतिलघुः स्वल्पः त्रिष्विष्टोऽल्पेलघुरित्यमरः ।। इष्टेमनोज्ञेऽल्पेऽगुरौलघुस्त्रिषु ।। निःसारेचत्रिषु इति घांताः विषिणोति प्रतिबध्नाति इन्द्रियान्स्वेष्विवितिव्युत्पत्त्या विपूर्वकषिञ् बंधने इत्यस्मात् पचाद्यच् ।। विषयाः पदार्थाः अत्रशास्त्राध्ययनंयस्याः सालघुविषयामेभगवद्दत्तस्यमतिर्मन्यतेज्ञायते ।। यथार्थायथार्थविषयाः अनयाइतिव्युत्पत्त्या वाहुलकात्कर्म्मणिस्त्रियांक्तिन्निति क्तिन् ।। नलोपः मतिःबुद्धिः बुद्धिर्मनीषाधिषणाधीः प्रज्ञाशेमुषीमतिरित्यमरः ।। क्वात्यल्पमित्यर्थः ।। द्वौकशब्दौमहदन्तरालंसूचयतः तद्यशोऽतिदूरमितिभावः ॥ याऽत्यल्पामेमतिः प्रवंधवाक्यविस्तारेग्रंथरचनेइत्यर्थः ।। प्रभ्वीस्यात्परिवृढाभवेत् प्रवर्त्तनायांलिङ्शक्ताभवेदित्यर्थः ॥ अधिभूः नायकः नेता प्रभुः परिवृढा अधिपः इत्यमरः ।। स्त्रीचेत्प्रभ्वी ।। वोतोगुणवचनादिति ङीप् ।। मुखमास्यंमुखमुखांतरालं च द्वयमास्यमितीरितमितिशाश्वतः ।। लघुरल्पंयन्सुखेन प्रबन्धंकरोमीतिकथयामीतिभावः ॥ प्रार्थितंयाचितं प्रार्थिते अर्दित इत्यमरः ।। अर्दितंयाचितेऽपिस्याद्वातव्याधौचहिंसिते इतिकोशान्तरे ।। मेरुतुल्यामेरु पर्वतसदृशा अतिगुर्वीत्यर्थः ।। अत इति शेषः ।। लोकजनसमूहे असत्सु असज्जनेषुप्रतिदिनं अहन्यहनीत्यर्थः ॥ वैनिश्चयेनपुनर्वै इत्यवधारणवाचकाः इत्यमरः ।। हास्यंहसंहासः हासो हास्यंचेत्यममरः ।। लोकाऽपवादमित्यर्थः ।। गमिष्यामिप्राप्स्यामि ।। ७।।

मू० उच्चैर्लभ्येलघुजनइवोद्बाहुरामृष्टचूते
दृष्ट्यासंशुद्धयवरपुरुषाःकर्तृदोषंक्षमन्ति ।

मेघोदूत प्रसरणिमथोवाकवेः कालिदास-
स्योद्धन्वन्तन्तरतिचयथापोत्तमारुह्यबालः ॥ ८ ॥
वाक्याब्धौवावहतिसततंभ्रान्तचित्तस्तरङ्गैः
स्वान्तेकृत्वायुगलचरणौप्राप्नुयांश्रीगुरोर्वा ॥
विज्ञाप्यस्मै इतिसुधिषणाः आशिषापूर्णयन्तु
बालोहंचेत्तदपिमरणं उन्मुखस्त्यक्तलोकः ॥ ९ ॥

उच्चैरिति–उच्चैरुन्नतेनपुरुषेणलभ्येप्राप्तुंयोग्ये आम्रेष्टचूतेसर्वतोमधुरा म्रे ॥ आम्रश्चूतोरसालोसौवित्यमरः ॥ उन्नतेवाहूयस्येत्युद्बाहुः ऊर्द्धभुजः भुजबाहुप्रवेष्टादोरित्यमरः ॥ लघुजन वामनइव अष्टमादि चतुर्थेतिपादस्य पूर्वेणान्वयः ॥ ननुसर्वेहसिष्यन्ति नातआह वरपुरुषाइति संप्रतिक्षमा पनपूर्वक आशिषः प्रार्थयतिपादन्यूनद्वाभ्यां ॥ वरपुरुषाः श्रेष्ठजनाः दृष्ट्या नेत्रगोचरीकृत्वेत्यर्थः ॥ संशुद्ध्यसम्यक् स्वयमेवशोधयित्वेत्यर्थः कर्त्तृदोषं कर्त्तृकृतंपदव्याकरणालङ्काररसाननुगुण्यरूपं दोषंक्षमान्ति सहन्ति सम्प्रति हास्यंपरिहरतिवा अत आहाथोवेति अथोवा अथवेत्यर्थः ॥ अथो अथ समुच्चयेमङ्गलेसंशयारम्भाधिकारानन्तरेषुच ॥ अन्वादेशेप्रतिज्ञायां प्रश्न साकल्पयोरर्पातिहैमः ॥ कवेः काव्यकर्त्तुः कविः काव्यकरेसूराविति वि श्वकोशः ॥ कवयतिशब्दायतिरचयतीत्यर्थः ॥ छन्दोऽलङ्काररसाद्यनुगुण विशिष्टवाचकशब्दान्शास्त्रेशब्दस्तुवाचक इत्यमरः ॥ यैर्घटाद्यर्थोज्ञायते तानित्यर्थः ॥ कालिदासस्यतन्नाम्नः तांप्रसिद्धां मेघदूतश्चासौप्रसरणीप द्धति मेघदूतप्रसराणि तांतन्नामिकांपद्धतिमार्गमितियावत् ॥ सरणिःपद्धति पद्ध्यावर्त्मानित्यमरः ॥ ननुमनोदूतेमहाकविकालिदासकृतमेघदूतग्रन्थस्थ कानिचिदानुपूर्विपदानिसन्तीत्येतद्ग्रन्थकर्त्तुः काव्यचौरत्वमितिनाशङ्कनी

यम् ॥ यदिनव्यार्थयुक्तिर्नोल्लसतितदापरकाव्यार्थमादायाभ्यासस्स्यात्तदा काव्यकर्त्तुस्तस्करत्वम् ॥ परन्त्वत्रोक्तकवेः पद्धतिंगृहीत्वापि॥ तदुक्तंशृंगाररसं ॥ विशिष्टमर्थम्परित्यज्यवैराग्योपादेयकक्षांनव्यार्थयुक्त्योयुक्तां प्रकाशयन्करोतीतिनतस्करत्वमिति ॥ तदुक्तम्वाग्भट्टालङ्कारे ॥ परार्थबन्धाद्यश्चस्यादभ्यासोवाच्यसंगतौ सनश्रेयान्यतोऽनेनकविर्भवतितस्करः इति॥ किंच परस्यकाव्यंस्वमिति ब्रुवाणोविज्ञायतेज्ञैरिहकाव्यचौरः विलोक्यमाणिक्यमयोग्यहस्ते प्रत्येतिकोनामयदेतदस्य इतिजिनवर्धनसूरिप्रणीतव्याख्यायां संवादान्तरमप्युक्तम् ॥ श्रीगुरोर्गोकुलचन्द्रस्ययुगलचरणौपादद्वन्द्वौस्वान्तेहृदिसततमविरतं धृत्वासंधार्य्यप्राप्नुयांयायाम् ॥ प्रार्थनायांलिङ् ॥ भ्रान्तंयच्चित्तंमनो भ्रान्तिश्चज्वरपीडितस्यसेमनोऽनवस्थित्या अत्रैतदर्थकशब्द उपयुक्तोऽनुपयुक्तोवा इतितदेवतरङ्गानिलहर्य्यः इव तैर्भ्रान्तचित्तस्तरङ्गैः वाक्याब्धौशब्दसमुद्रे जातिगुणादिस्फोटादिभेदानां शब्दार्थयोस्सम्बन्धस्य शब्दानांचप्रत्येकशब्दस्यार्थानांचानेकविधत्वादत्रैतदर्थकस्यग्रहणमन्यार्थकस्यवेतिविचारपरत्वेन शब्दसमुद्रत्वमनलङ्घ्यत्वमित्यर्थः ॥ तदुक्तंमहाभाष्ये ॥ चतुष्टयीशब्दानांप्रवृत्तिः जातिशब्दोगुणशब्दः क्रियाशब्दोयदृच्छः शब्दश्चतुर्थः ॥ एवंहिश्रूयतेबृहस्पतिरिन्द्राय दिव्यंवर्षसहस्रंप्रतिपदोक्तानांशब्दानांशब्दपारायणं प्रोवाचनान्तंजगामबृहस्पतिश्च प्रवक्ताइन्द्रश्चाध्येतोदिव्यं वर्षसहस्रमध्ययनकालोनचान्तंजगाम ॥ नत्वत्रवाक्याब्धिशब्देन व्याकरणस्यैव ग्रहणमितिभावः ॥ वहतिनिमज्योन्मज्यवत् ॥ इतस्ततोगच्छतिसतीत्यर्थः ॥ यथा येनप्रकारेण पोतंपानपात्रं पानपात्रंतुपोतइत्यमरः ॥ आरुह्योपरिस्थित्वाबालः षोडशवार्षिकः उदन्वन्तंसमुद्रं समुद्रोऽब्धिरकूपारपारावारे सरित्पतिरुदन्वानुदधिरित्यमरः ॥ तरतिपारंयातितद्वदित्यर्थः ॥ धिषणाबुद्धिः ॥ बुद्धिर्मनीषाधिषणाधीरित्यमरः ॥ सुशोभनाधिषणायेषांतेसुधिषणाः पंडिताः इतिविवक्षितंपूर्वोक्तमित्यर्थः ॥ इतिस्वरूपेसान्निध्येविवक्षानियमेऽपिचहे

तौप्रकारप्रत्यक्षप्रकर्षेष्ववधारणे एवमर्थेसमाप्तौस्यादितिहैमः ॥ मे भग वद्दत्तस्यविज्ञाप्यंप्रार्थितमाशिषा आशीभिरित्यर्थः अर्थवशाद्वचनविपरि णामः ॥ यदिवहुभ्यःप्रार्थना तदाप्रत्येकस्याशीर्वचनस्यैकैकस्यापिगणनेब हुत्वम् ॥ अत अर्थवशादित्युक्तंटीकायांहिताशंसाभिः आशीर्हिताशंसाहि दंष्ट्रयोरित्यमरः ॥ आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोरिति कोशा न्तरम् ॥ पूर्णयन्तुसफलयन्तु ( प्रार्थनायांलिङ् ) ननुत्वंबालोऽर्भकः ॥ अर्भकवुद्धिस्तुहठात्मिका यथा घटेहस्तिनसन्निवेशयेदितिवत् ॥ बालकृत ग्रन्थंदययासम्मत्य यदि प्रवर्त्तयंति तदातेऽपितत्तुल्याः भवेयुरित्याश ङ्क्याह ॥ बालः स्मृत्युक्तः षोडशवार्षिकः अद्यराजकीयनियमानुसारि णापि नत्वर्भकः अतएवदृष्टान्तेषोडशवार्षिकस्यपोतारोहणं संगच्छते न त्वर्भकस्यस्तनंधयस्येत्यर्थः ॥ एवंच बालः षोडशवार्षिकइतिस्मृत्या बाल शब्देन कस्यचिन्ज्ञानवतोग्रहणम् ॥ तथाचव्याकरणादीन्पठित्वाऽपि पंचदशवर्षात्पूर्वमल्पायुषाहेतोरत्यन्तासम्पन्न इवार्थयुक्तशास्त्राणि पठन्न पितन्मननाभिलाषी पठनपाठनानेकवर्षेभ्योविनायावदर्थतात्पर्य्यानभिज्ञः इत्यर्थः ॥ एवंचग्रंथरचनेऽनधिकारीकथंप्रवर्तेत्भगवद्दत्तः ॥ अतस्स्वय मेवोत्तरंवक्ति ग्रन्थकर्त्तात्यक्तलोकमित्यादिना ॥ अनधिकार्य्यप्यतएवस्व दीनतां प्रकटयन् ॥ दीनतयैवतेषांदयांप्रार्थयति यथानधिकार्य्यपिरोमहर्ष णपुत्रस्सुतः ऋषिर्भिर्दययाऋषियोग्यासनेस्थापितः ॥ त्यक्तोलोको येनसः त्यक्तलोकः सन् यदिमरणे उत्सुकः प्राणत्यागे उत्साहवान् तदपितस्माद पिमेविज्ञाप्यंसफलयन्तुपूर्णयन्तु ॥ ९ ॥ यथापाश्यार्थमानीतश्चौरादिर्वस्त्र खानपानाद्यर्थम्पृष्ठाः इतियत्किंचिदिच्छतिखानपानार्थंतदेवददति अधि कारिणस्तद्वदत्रापि खानपानादिसर्वन्त्यक्त्वागमनसमये इदमेवविज्ञाप्यं पूर्णमेवसर्वंखानपानादिरस्तीतिभावः ॥ ९ ॥ किंचयथाविद्धिषमपिशरत ल्पारूढभीष्मम्प्रति तत्प्राणोत्क्रमणसमयेतद्वाणमोचनभीतिंत्यक्त्वातत्प्रार्थ

नयाप्रत्यक्षीभूतागतश्रीकृष्णदयाइव ॥ तदुक्तंमहाभारतेभीष्मस्तवराजे ॥ भीष्मस्तुपुरुषव्याघ्रः कर्म्मणामनसागिरा ॥ शरतल्पगतः कृष्णंप्रदध्मौप्राञ्जलिश्शुचि ॥ स्वरेणहृष्टपुष्टेनतुष्टावमधुसूदनम् ॥ योगेश्वरंपद्मनाभं विष्णुंजिष्णुं जगत्पतिम् ॥ भीष्मउवाचापराधयाम्यहं विष्णुंवाचाजिगदिषाम्यहम् ॥ तयाव्यासससमासिन्याप्रीयताम्पुरुषोत्तमः ॥ यथा अवाङ्मनसगोचरोऽपिभगवान् श्रीकृष्णः भक्तवात्सल्यात् मरणसमयेभीष्मेनप्रार्थितः चर्म्मचक्षुर्मार्गेप्रत्यक्षीभूत्वा ऽसम्भावितसंभावनांपूरयामास इतिभावः ॥ २ ॥

ॐ श्रीगणेशायनमः ।

मू० ॐ कश्चिद्विद्याविरहगुरुणास्वात्मनात्मप्रमत्तः
शोकेनास्तंगमितमहिमाऽऽजीवभोग्येनयस्य ॥
दत्तश्चक्रेशिखरितनयावासपुण्येवितस्तातीर्थो
ऽधस्ताद्वहतिवसतिंकालिगिर्य्याश्रमेच ॥ १ ॥

कश्चिदिति स्वात्मनः स्वशरीरात् आत्मेतिब्रह्मवाग्देहमितिनानार्थकोशः प्रमत्तोऽनवहितः प्रमादोऽनवधानतेत्यमरः जुगुप्साविराम प्रमादार्थानामुपसंख्यानमित्यपादानत्वात्पञ्चमी पंचमीतियोगविभागात् समासः यद्यप्येतावत्कालपर्य्यन्तंस्वशरीरस्य प्रमत्तत्वन्नास्त्यन्यथाकथंग्रन्थरचनेशक्तिः नचग्रन्थरचनेबुद्धिप्रतिभावागिन्द्रियाणांकारणत्वेतद्रचने शरीरस्य कारणतैवनास्तीतिशरीररूपपक्षे ग्रन्थकरणशक्तेरिति हेतोरभावात्स्वरूपासिद्धिर्दुर्वारेतिवाच्यम् शरीरस्यानास्थित्यभावे एव बुद्ध्यादीनांग्रन्थकरणे शक्तिमत्वमित्यनुभवसिद्धत्वात् ग्रन्थरचनेशरीरशक्तेरपिकारणत्वेग्रन्थकरणशक्तिरूपहेतोः शरीररूपपक्षेसत्वान्नस्वरूपासिद्धिदोषोदुर्वारोयथाज्वरादिनाशरीरस्यशैथिल्येसुतरांमनोवैकल्यंचक्षुरादीनांयथापूर्वविषयाग्रहः वा

गिन्द्रियादीनांशैथिल्यमिति रसायनौषधनिषेवणेनतत्तद्रसानुगुण्येनशरीर स्यतत्तद्धातुपुष्ट्याज्वरादिनिवृत्तौ तन्निवृत्याशरीरपुष्टौतत्पुष्ट्यातच्छैथिल्याभावेनमन आदीनांवैकल्याद्य भाव: तद्वत्शरीरशक्तेरेवबुद्ध्यादीनांग्रन्थरचनेशक्तिरितिमन्यन्ते प्रकृतमनुसराम: तथापिशरीरधर्म: सत्कर्मसन्ध्याबन्धनविद्याध्ययनादिस्तन्निवृत्तौशरीरस्यसुतरां प्रमत्तत्व मितिभाव: मूलेनष्टेनैवपत्रंनशाखा इतिन्यायात् विद्यायाविरह: विद्याविरह: विरहो वियोग: विरतिरितियावत् तेनगुरुणाविद्याविरहगुरुणा दुर्भरेणदुस्तरेणेत्यर्थ: गुरुस्तुगीष्पतिश्रेष्ठेगुरौपितरिदुर्भरे इतिविश्व: आजीवं आ इति मर्यादार्थक: आङ्मर्यादाभिविध्योरितिसमास: जीव: असुधारणंजीवोऽसुधारणंमित्यमर: तमभिव्याप्येत्यर्थ: आजीवं भोग्येन आजीवभोग्येन द्वितीयाश्रितेति योगविभागात्समास: यावज्जीवभोग्येनेत्यर्थ: शोकेनमन्युना मन्युशोकौतुशुक्स्त्रियामित्यमर: दैन्येनेत्यर्थ: मन्युर्दैन्येक्रतौयुधीत्यमर: अस्तंनाशं अस्तमदर्शने इत्यमर: गमित: प्राप्त: महिम: सामर्थ्ययस्यसोऽस्तंगमितमहिमा अस्तांमितिमकारान्तमव्ययम् तस्य द्वितीया श्रितेति योगविभागात्समास: कश्चिदितिअभिमाननिवृत्ति: ननु आत्मनामगुरोर्नामनामातिकृपणस्यच श्रेयस्कामोनगृह्णीया ज्येष्ठापत्यकलत्रयोरितिस्मृत्या यक्षवदतिकृपणत्वेननामानुच्चारणम् अन्यथादत्तइत्युक्तेकथं संगति: दत्त: भगवद्दत्त: भगवान्देयादितिपितृमातृभ्यां प्रार्थनयाभगवतादत्त: इतिभगवद्दत्त: क्तिचक्तौचसंज्ञायामितिक्त:विनापिप्रत्ययंपूर्वोत्तरपदयोर्लोपोवाच्य: इतिपूर्वपदस्यलोप: देवदत्त: दत्त: इतिवत् शिखरी पर्वत: शिखरि क्ष्माभृदहार्यधर पर्वता: इत्यमर: तस्यतनयाकालोउमा कात्यायनीगौरीकालीहैमवतीश्वरी इत्यमर: तस्या: वासेन निवासेनपुण्ये पवित्रेयस्यपर्वतस्यषष्ठ्यतसर्थप्रत्ययेनेतिषष्ठीवित्तस्तानामतीर्थ: अर्द्धर्चादित्वात्पुंस्त्वमिति अधस्तात्देशवाचिअधरशब्दात्दिक्शब्देभ्य:सप्तमीपञ्चमीप्र

थमाभ्योदिग्देशकालेष्वस्तातिरितिअस्ताति: अस्तातिचेतिअधरशब्दस्याध् आदेश: अधस्तादपिचाधर: इत्यमर:अधस्तादनूर्ध्वेओष्ठेपिचेत्यमर:नीचैर्वह तिप्रवाहरूपेणचलतीत्यर्थ:काल्या:गिरि: कालिगिरि: गृधातो: कृगृशृपृकुटि भिदिदिछिदिभ्यश्चति इसचकित्‌कृतइद्धातोरितीत्वेरपरत्वेचगिरिरितिगि रिगोत्राक्षिरोगयो: अद्रिगोत्रगिरिग्रावइत्यमर: तस्यकालिगिरे: तस्याश्रमं कालिगिर्य्याश्रमं तस्मिन् कालिशब्दस्यह्रस्वत्वं इकोह्रस्वोङ्यो गालवस्ये तिसाधु: कालिदास इतिवत् मङ्गलादेव्या: निवासस्थानस्याश्रमेसंनिहित स्थाने इत्यर्थ: मनसाननुनिपुर्वकवस्‌धातो: भाव घञिकृते निवास इति तस्यकुत्रचिदधिकरणे एक घटिकादि कालावच्छिन्नकालिक जीवसंयोग इत्यर्थ: तथाचप्रकृतभगवद्दत्तोपाध्यवच्छिन्नचैतन्यस्यसंयोग: सचदेहसं योगंविनानसम्भवति तत्संयोगेदेहस्यैवासाधारणकारणत्वेनकरणत्वात् अ साधारणंकारणमितिलक्षणादिति तद्वारैवतदुपाध्यवच्छिन्नजीवस्यनिवास इति मनसोऽसाधारणकारणत्वाभावेन करणत्वाभावान्नमनसानिवासस म्भावित इतिवाच्यम् नचममातृपितृभ्यामितिकथितंमङ्गलादेव्या: स्थानं गत्वा तत्र चतुर्दिनपर्य्यन्तंतस्या: प्रतिदिनंपूजनादिकङ्कुर्वन् भ्रातुर्गणेशदत्त स्यमुण्डनादिकंसर्वंकृत्यतातं चतुर्दिवसंतत्रोषित्वासम्पाद्यच मीरपुरंगमि ष्याम: प्रतिदिनंपिण्डीनिवसतामेयतियच्छ्रुतंतन्मनसिनिधाय चतुर्दिवस साध्यं सर्वपूजनादिकमल्पकालेनैवसंपादितं मनसा यथा श्रीकृष्णभक्ते नाक्रूरेणयमुनायांस्नानार्थंन्निमज्झतास्नानकालिकाल्पसमये नैवानेकवर्षसा ध्यसंभोगादिसर्वंकृतमिति श्रीकृष्णमायया एवंश्री मातुर्गौर्य्या: एकान्त भक्तेनतेनपिण्डीनिवसताविसाक्षादिवमनसा सर्वंनिवासादिकंकृतमिति अम्बिकामाययाकिंतत्रचित्रंदेहावच्छिन्नचैतन्यसंयोगेपिण्डीनिवसतस्तस्या ल्पकालंस्वप्नवदिति ननुतत्वमस्यादिवाक्यैरपरोक्ष प्रमाणम्भवतीतितद्वत् नहिमातृपितृकथितवाक्यैरपरोक्षज्ञानंसंभवति तत्वमस्यादिवाक्यजन्यं

ज्ञानमपरोक्षम् अपरोक्षविषययत्वात् चाक्षुषघटादिप्रत्यक्षवदित्यनुमान
स्य प्रमाणत्वात् नहिमातृपितृकथितवाक्यैर्जायमानम्मङ्गलास्थानमेतद्रू
पमितिज्ञानमपरोक्षं किन्तुपरोक्षमेव तत्वमस्यादिवाक्यानामीश्वरज्ञानरू
पत्वात् तैर्ज्ञातंसर्वंजगत् मातृपितृकथितवाक्यानां मातृपितृज्ञानरूपत्वाभा
वात्परोक्षविषयत्वाच्च नतैर्ज्ञातमिति नतेषामपरोक्षज्ञानेकारणमिति तत्व
मस्यादिवाक्यैरपरोक्षज्ञानंभवति इत्यत्रयथाअनुमानस्यप्रामाण्यम् तद्वत्
प्रकृतेऽनुमानस्यपिप्रामाण्यंनास्ति अत्रानुमानस्वरूपंचेत्थं मातृपितृकथित
वाक्यजन्यंज्ञानमपरोक्षम् अपरोक्षत्रिषय चाक्षुषघटादिप्रत्यक्षवत् मातृ
पितृकथितमंगलास्थानमेतद्रूपमितिवाक्यजन्यज्ञाने अपरोक्षत्वविषयरूप
हेतुरेवनास्ति तस्यपरोक्षत्वात् इतिस्वरूपासिद्धिरूपदोषस्यविद्यमानत्वात्
नानुमानंप्रमाणमितिमातृपितृकथितवाक्यस्य प्रत्यक्षविषयत्वाभावेनभ्रमा
त्मकत्वात् नतज्जन्यज्ञानस्यतात्विकत्वम् नचतत्वमस्यादिवाक्यजन्यंज्ञानं
शाब्दं शब्दजन्यत्वात् यजेतेत्यादिवाक्यजन्यज्ञानवत् एवंमातृपितृकथि
तवाक्यजन्यंज्ञानंशाब्दंशब्दजन्यत्वात् परदेशस्थस्यतवपुत्रोजातः इतिपुरो
हितवाक्यजन्यज्ञानवत् इतिवाच्यम् योयंयोगंविनाब्रह्मसाक्षात्कृतमिति
वाक्यजन्यज्ञानवदित्यनेनापरोक्षविरोधिशाब्दत्वसाधकेन सत्प्रतिपक्षस्त
थातवपुत्रोजातः इतिमिथ्यावादिपुरोहितवाक्यजन्यवदित्यनेनापरोक्षवि
रोधिशाब्दत्वसाधकेनसत्प्रतिपक्षः दृष्टपुत्रोअदृष्टपुत्रोवापुरोहितइत्यन्यत्
नचेदमप्रयोजकंशाब्दं प्रत्येवशब्दस्यजनकत्वेन लाघवमूलानुतर्कात् ननु
न केवलेनतर्केणशब्दजन्यज्ञानस्यापरोक्षत्वं किंतु श्रुत्यापिमनसैवानुद्रष्ट
व्यं मनसैवेदमाप्तव्यमिति यथामहर्षिर्बाल्मीकिः नारदात्काव्यविषयंराम
चरितरूपंवस्तुश्रुत्वासमग्रं प्रकाशरहस्यसहितंकुर्विति च ब्रह्ममुखाच्छ्रुत्वा
तस्यधीमतोरामस्ययद्वृत्तंसरहःप्रकाशंतत् भूयःसाक्षात्कारविषयोयथा
भवतितथाकर्तुमुद्योगंकृत्वा ब्रह्मप्रसादेनगतिंरामादीनांचारितरूपामतिय

त्तेनपश्यतिस्म तदुक्तंरामायणे श्रुत्वावस्तुसमग्रंतद्धर्मार्थसहितंहितम्व्य क्तमन्वेषतेभूयोयद्वृत्तंतस्यधीमतः हासितंभाषितंचैवगतिर्यावच्चचेष्टितम् तत्सर्वंधर्मवीर्येणयथावत्संप्रपश्यति इति तथायंभगवद्दत्तोमातृदेवोभवपितृदेवोभव इति श्रुत्या मातृपित्रोर्देवरूपत्वेनतद्वाक्यानामपि अपरोक्षज्ञानविषयत्वेन निश्चयात्मकत्वान्मातुरम्बिकायाअत्यन्तभक्तस्तद्विषयवार्तया तदत्यानुरागीचमातुः प्रसादेनतद्विषयिणींवार्तांसाक्षात्पश्यति इतितादृशज्ञानस्य नभ्रमात्मकत्वंकिंचगुरुर्ब्रह्मेत्यादि कथनेनगुरुणांयथाब्रह्मरूपत्वं तथामातृपित्रोरपि अतएवब्रह्माणंप्रतिनारदकथनंसंगच्छते इति सर्वंह्येतद्भवान्वेदभूतभव्यभवत्प्रभुः करामलकवद्विश्वंविज्ञानावसितंतव यद्यपि नानृतंतववचा पियथामांप्रब्रवीषिभो अविज्ञायपरंमत्तएतावत्त्वंयतोहिमे इत्युक्त्यानारदज्ञानस्यभ्रमात्मकत्वाद्विषमोयंदृष्टान्तस्तथापि यथानेकरोगिणामेकरूपरोगस्यैवैकेनवौषधदाने तेषामेकेनिरुजाभवन्त्येकेनभवंतियं स्यादृष्टवशात् तेनैववैद्येन तस्यपुरुषस्यतद्रोगज्ञानपूर्वकौषधदानेरोगनिवृत्तौतज्ज्ञानस्य न भ्रमात्मकत्वंवैद्यस्ययशलाभादृष्टवशाद्रोगिणः रोगनिवृत्यदृष्टवशाच्च एवमेवभगवद्दत्तमातृपितृकथितवाक्यजन्यज्ञानस्यपरोक्षत्वेऽपितदृष्टवशात्तत्कथितवाक्यजन्यज्ञानस्यनभ्रमात्मकत्वमिति किंचमंगलादेव्याः स्थानंगत्वेत्यादिपूर्वोक्तंसर्ववर्णात्मकरूपं ध्वनिरूपेणश्रोत्रदेशमागत्यमङ्गलास्थानाकारज्ञानं भूत्वामनसाऽऽत्मनिप्राप्तमन्यथाकथंराम नामादिश्रद्धयागुरुमुखात्श्रुतंतदेवान्तरात्मनि द्विभुजादिरूपेणदृश्यतेसंस्मर्य्यते इति साक्षादेवतदुक्तंभागवते शृण्वतः श्रद्धयानित्यंगृणतश्चस्वचेष्टितत्तम् कालेननातिदीर्घेणभगवान्विशतेहृदि प्राविष्टः कर्णरन्ध्रेणस्वानांभावसरोरुहम् धुनोतिशमलंकृष्णः सलिलस्ययथाशरदिति एवंभगवद्दत्तोपाध्यवच्छिन्नचैतन्यस्य देशसंयोगंविनापि मङ्गलाकारज्ञानेनसहमनसः संयोग इति देहंविनापिचैतन्यस्यमनसासंयोगस्सम्भावित एवेति

भावः इत्याहमनसा इति यद्यपिताल्वादिस्थान श्रोत्रस्थानेतिभिन्नाधिक रणजनकत्वेनवर्णात्मकध्वन्यात्मक शब्दरूपभेदेनाभेदाभावेपि आकाश त्वेनरूपेणैकाधिकरणत्वात् वर्णात्मक एवध्वनिरूपमागत्यज्ञानाकारेणमन सात्मनि प्रकाशते इतियतः ज्ञानाधिकरणमात्मा किञ्चतस्यमनोचिन्ति तस्यैकान्तभक्तिमतोमातुः पूर्णकर्त्र्याः कृपाकटाक्षेणहृदिस्वयमेबतदाकारं स्थानंप्राप्नोतियथायोगिनंसर्वसुखंस्वयंकर्तृभूतंस्वयमेवप्राप्नोति तदुक्तंगी तायाम् प्रशान्तमनसंह्येनंयोगिनंसुखमुत्तमम् उपैतिशान्तरजसंब्रह्मभूतम कल्मषम् ॥ १ ॥ चक्रेकृतवान् ननु आगामितस्मिन्नद्राविति श्लोकस्थता त्पर्य्यात् मङ्गलास्थानचतुर्दिननिवासानन्तरमेकादशदिनोत्तरंग्रन्थकर्तुमर णमभूदितिप्रसिद्धम् तदनन्तरंग्रन्थकर्तुरभावात् कथमस्यग्रन्थकर्तृत्वंयदि पूर्वग्रंथकृतिः पश्चान्निवासस्तदाभूतकालिकचक्रे इति क्रियायाअनुपपत्ति यदिदुर्गास्थाननिवासानन्तरमेकादशादिवसैवग्रन्थकृतिरिति तदपियोगम न्तरानसंभवति यद्यपूर्वपूर्वजन्मोपार्जितापूर्वपुण्यवशाद्योगासिद्ध्या शुका दिवत् तद्दिवसैवग्रन्थरचनशक्तिर्भवतीतिमन्यन्ताम् परञ्चतन्मरणानन्तरं व्यतीतत्रिमासकालं कदाचित्तस्यग्रन्थान्यवलोकयतामया दृष्टमिदमपूर्वम नोदूतंनाममनोहरंकाव्यमिति निवासात्पूर्वमेवग्रन्थकृतिरितिभाति तन्मन सिनिधायग्रंथकर्त्तास्वयमेवशङ्कान्निवर्त्तयतिमनसा । इत्यनेन ॥ १ ॥

मू० तस्मिन्नद्रौपठनविरहात्तापयोगाच्चदुःखी ।
नीत्वाघस्रान्सुलभचतुरः रिक्तरक्तात्मशुष्कः ॥
माघेमासिप्रथमदिवसेऽव्याकुलंस्वंहिदृष्ट्वा ।
आशादूराभवतिचममेत्याशशङ्केमनस्वी ॥ २ ॥

तस्मिन्नद्राविति ।

मङ्गलायाःभद्रकाल्याः शैलेयश्चमहाराजप्रतापसिंहराज्यस्थमीरपुर

नगरात्पश्चिमदिग्भागस्थवित्तस्तानदीतीरे तापयोगाद्वज्वराकारान्तत्वात् अतएवपठनविरहात् विद्याविरहात् विरहत्वंचपंचदशवर्षायुषिमहाभाष्यान्तान् व्याकरणग्रन्थात् न्यायेमुक्तावल्यन्तान् काव्यालंकारनाटकग्रंथांश्च पठित्वापाठयित्वाचविद्यासागरपरीक्षांतर्त्तुमिच्छोः सार्द्धैकसंवत्सरज्वरसंपीडितस्यमेपठनासंभवादेवविद्याविरह इतितात्पर्य्यम् दुःखीसुखादिभ्यश्चेति इनिर्मत्वर्थीयः प्रियकरवस्तुषुविद्वेषबुद्धिरित्यर्थः रिक्तः शून्यः रक्तोयस्यसरिक्तरक्तः सचासौ आत्मा इतिरिक्तरक्तात्मातेनशुष्कः रिक्तरक्तात्मशुष्कः यतोरिक्तरक्तः अतएव आत्मनादेहेनशुष्कः विद्याविरहात्कृश इत्यर्थः आत्मेतिब्रह्मवाग्देह इतिनानार्थकोशः सुलभचतुरः ( सुखार्थकसावुपपदे लभधातोः ) ईषदद्दुस्मष्विवतिकर्मणिखल् सुलभाइति नतु उपसर्गात्वल घञोरितिनुम् नसुदुर्भ्यांकेवलाभ्यामितिनिषेधात् सुष्ठुलभाः प्राप्ताः चत्वारः सुचत्वारः तान् सुचतुरः घस्रान्दिनानि ( घस्रोदिनाहनीत्यमरः) नीत्वापापयित्वामघानक्षत्रेणयुक्तापौर्णमासीमाघी नक्षत्रेणयुक्तः काल इत्यण् टिड्ढाणञितिङीप् सामाध्यस्मिन्पौर्णमासीतिमाघोमासः सास्मिन्पौर्णमासीतिसंज्ञायामित्यण् तस्मिन् माघेमासि तस्येतिशेषः प्रथमदिवसेप्रतिपद्दिनेव्याकुलंव्यग्रं अनेकार्थेन्यस्तमित्यर्थः ज्वरस्यनिवृतिर्भविष्यतिवानभविष्यतिविद्यादिपर्य्यासोनिष्फलोभविष्यतिसफलोवाभविष्यतीतिनिष्कर्षः विभ्रान्तमितियावत् स्वमात्मनंचित्तमित्यर्थः चोप्यर्थः इन्द्रियमप्यर्थः(स्वाज्ञात्यात्मनोरितिमेदिनीकोशः) दृष्ट्वाज्ञात्वा आशादीर्घातृष्णा आशातृष्णापिचायतेत्यमरः साचपंचदशवर्षायुषिमहाभाष्यान्तान्व्याकरणग्रंथान्न्यायमुक्तावल्यन्तान्काव्यालंकारनाटकग्रंथांश्चपपाठाधुनाविद्यासागरपरीक्षोपयोगिग्रन्थान्पठित्वाविद्यासागरपरीक्षांतरेयमितिमेपूरा विप्रकृष्ठका ( स्याद्दूरंविप्रकृष्ठकमित्यमरः ) निष्फलेत्यर्थः मनस्वी मत्वर्थीयः अस्मायामेधास्रजोविनिरितिविनिः मननशीलः विचारवानित्यर्थः

आशशंके आङ्पूर्वात् शकेः कर्त्तरिलिट् ररागरगेशङ्कायामितिकर्त्तरिलिट् विचारितवानित्यर्थः ॥ २ ॥

मू० तत्रस्थित्वाकथमपिमनारोगानिष्पीडहेतो ।
रन्तर्बाष्पश्चिरमनुनयः सद्गुरावद्ध्यदध्यौ ॥
आशांस्मृत्वाभवतिसुखिनोअप्यन्यथावृत्तिचेतः ।
भाविन्याशावसतिहृदियस्याद्यपूर्णेतिवाश्वः ॥ ३ ॥

तत्रस्थित्वेति ।

सद्गुरौश्रीमत्प्रतापसिंह श्रीरणवीरसिंह मुख्यमान्यश्रीमत्पण्डितगोकुलचन्द्रशर्म्मसुतभारतप्रसिद्ध श्रीमत्पण्डितगङ्गाधरे अनुनयःप्रीतियुक्तः सअन्तर्बाष्पः धीरोदात्तत्वादन्तः स्तम्भिताश्रुसन् रोगनिष्पीडहेतोः रुजतीतिरोगः तापः पचाद्यचिनिपूर्वादवगाहनार्थकपीडधातोः भावद्यञिनिष्पीड्यते इतिनिष्पीडः रोगस्यनिष्पीडः रुजार्थानामितिषष्ठी प्रतिपदविधाना इतिवार्तिकेननिषेधेऽपिकृद्योगाचषष्ठीसमस्यते इति वाच्यमनेनषष्ठीसमासः तस्यहेतुंरोगनिष्पीडहेतुः तस्यरोगनिष्पीडहेतोः शेषषष्ठीतिसमासः कथमपिगरीयसाप्रयासेन ज्ञानहेतुविवक्षायामव्यादि कथमव्ययम् कथमादितथाप्यन्तंयत्नगौरवबाढयोरित्युज्वलः··मनःस्थित्वारोगाद्विमुखीकृत्यनिश्चलंकृत्वाचिरंदध्यौचिंतयामास ध्यैचिंतायामितिधातोर्लिट् मनोविकारमाह तथाहि आशा आङ् पूर्वाच्छतेः ( आतश्चोपसर्गे ) इति बाहुलकात्कर्त्तरिकः वापचाद्यच् ( आदेचउपदेशेऽशितीति ) आत्वे ( आतोलोप इटिचेत्याकारलोपे ) आसमन्तात् देहादि कंशयतितनुकरोतीत्याशां ( आशातृष्णापिचायते इत्यमरः ) तांस्वमनोरथंस्मृत्वासुखिनोऽपिधनविद्याद्वारानेकसुखसंपादितस्यापिचेतश्चित्तम्

अन्यथाभूतावृत्तिर्व्यापारोयस्य तदन्यथाभवतिविकृतिमापद्यते इत्यर्थः यस्यमेइतिशेषः हृदि इतिवसतिवर्तते अद्यसद्यः परुत्पराय्यैषमः परेद्यव्यद्युरपूर्वेद्युरपरेद्यु इत्यादिसूत्रेण इदमोऽश्द्यश्चप्रत्ययेनिपातनात् अस्मिन्नहनि अद्य इति ( आद्यात्राह्नीत्यमरः ) अस्मिन्नहनि इत्यर्थे अद्यशब्दः ॥ श्वोवा (अनागतेह्निश्वस इत्यमरः) अद्यश्वोवेवित्युक्त्याऽतिशीघ्रमिति भावः पूर्णा आशामनोरथंविद्यासागरपरीक्षातरणरूपम् भाविनीभविष्यति प्राप्स्यामीत्यर्थः भूधातोः भविष्यतिगम्यादयः इति सहकृत्य अवश्यंकाधमर्णयोरिति भविष्यदावश्यकार्थेसिनिः अचोञ्णिति इतिसूत्रेणवृद्धौ ऋन्नेभ्योङीपितिङीप् पद्सत्वे आशापूर्णाभविष्यतितन्नष्टेसतितंविरहिणः किमुवक्तव्यंविकृतिंनाप्नोति प्राप्नोत्येवरोगविष्टदेहोमनोविकृतिमुद्दीपयति इतिभावः अर्थान्तरन्यासोऽलंकारः तदुक्तं दण्डिनाज्ञेयः सोर्थान्तरन्यासोवस्तुप्रस्तुत्यकिंचन तस्माधनमसमर्थस्यन्यासोयोन्यस्यवस्तुनः ॥ ३ ॥

मू० प्रत्यासन्नेमरणसमये जीवतालम्बनार्थी ।
सुस्वान्तेनस्वकुशलमयींहारयिष्यन्प्रवृतिम् ॥
दत्तोवौद्धैः कमलकुसुमैः कल्पितार्घायतस्मै ।
दुःखीप्रीतिप्रमुखवचनंस्वागतंव्याजहार ॥४॥

प्रत्यासन्न इति ।

अथ समाहितान्तः करणः सन् किंकृतवानित्याह दत्तः भगवद्दत्तः मरणसमयेमृत्युकाले प्रत्यासन्नेदेहेन्द्रियादिव्याकुलज्ञानानंतरं सन्निकृष्टे सति इत्यर्थः स्वस्येतिशेषः जीवितंप्राणरक्षणमेवावलम्बनंप्राप्तिरर्थोविद्यतेयस्यात इनिठनावितीनिः जीवितालम्बनार्थीसन् देहेन्द्रियव्याकुल

ताया: विद्याविरहदुःखजनकत्वादुत्पन्नानर्थप्रतीकारादनर्थोत्पत्तिप्रतिब न्धएव वरमितिन्यायेनप्रागेवमातृरूपाविद्यांप्रतिसंदेशोपायंचिकीर्षुरित्य र्थः सुस्वान्तेनशोभनमनसाप्रयोजनकर्त्रास्वान्तंहृन्मानसंमन इत्यमरः

स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्तां . वार्ताप्रवृत्तिवृतन्त इत्य मरः हारयिष्यन् प्रापयिष्यन् लृट्शेषेचेति चकारेण क्रियार्थक्रियो पपदात् लृट्प्रत्ययः जीवनार्थं कर्म्मजीवनप्रदेनैव कर्तव्यमितिभावः ।

हृक्रोरन्यतरस्यामिति कर्म्मसंज्ञाया विकल्पात् पक्षेकर्तरि तृती या बौद्धैः तस्येदमिति अण् प्रत्ययः बुद्ध्याकल्पितैः कमलकुसुमैः कल्पितार्घायकल्पितोऽनुष्ठितः पूजाविधिर्यस्यतस्मै मूल्येपूजाविधावर्घ इत्यमरः तस्मै स्वान्तायक्रियाग्रहणमपिकर्त्तव्यमिति संप्रदानत्वाच्चतुर्थी प्रीतिप्रमुखानि प्रीतिपूर्वकाणिवचनानियस्मिन्कर्म्मणितत्प्रीति प्रमुखवच नंयथातथाशोभमानमागतंस्वागतंवचनंदुःखीरोगनिष्पीडः सन् व्याजहा रकुशलागमनं प्रयच्छेत्यर्थः ॥ ४ ॥

मू० सत्त्वोत्पन्नंप्रकृतिसुजडंक्काऽस्तिमेमानसञ्च ।
संदेशार्थाः क्हृदयरुधैर्योगिभिः प्रापणीयाः ॥
इत्यौत्सुक्यादपरिगणयन्नात्मवान्तद्ययाचे ।
वैयोगीयाः प्रकृतिकृपणाः चेतनाचेतनेषु ॥ ५ ॥

ननुचेतनसाध्यार्थंकथमचेतनेनकारयितुंप्रवृत्तः इत्यपेक्षायांकर्त्तास माधत्ते सत्वेतिमत्वादुत्पन्नंसत्वगूणयुक्तमित्यर्थः ।

कारणगुणत्वात्कार्यस्यरजोयुक्तस्य प्रकृतिनिश्चलाभावात् सन्देशान र्हमितिसत्त्वोत्पन्नमितिविशेषणम् प्रकृत्यास्वभावेनजडं ( ससिद्धिप्रकृती त्वमेस्वरूपश्चस्वभावश्चेत्यमरः ) मानसंमनः ( स्वान्तंहृन्मानसंमनः इत्यमरः ) क्वचेतनत्वात्संदेशानर्हमित्यर्थः हृदयंरुन्धन्तीतिहृदयरुधा

( इगुपङ्गः प्रीकिरः ) इतिकर्त्तरिकः तैश्चित्तंवशीकुद्भिर्योगिभिः युज्यते इतियोगः योगोविद्यतेयेषुतेयोगिनस्तैः अतइनिठनावितीनिः ईश्वरेचित्त वृत्तेः प्रणिधानं अतएवयोगदर्शनकारः ( योगश्चित्तवृत्तिनिरोधः ) चित्तस्यवृत्तेः निरोधोनितरामेकाग्रतायोग इत्यर्थः संप्रज्ञातासंप्रज्ञातभेदेनयोगोद्विविधः चित्तवृत्तेः प्रवृत्तौनिरोधेचावस्थाभेदेनचित्तस्यपंचस्थानम् पञ्चप्रकारास्थितिरित्यर्थः क्षिप्तमूलविक्षिप्तएकाग्रनिरुद्ध इतिरजोयुक्तस्याति चंचलत्वाद्विक्षिप्तता तमोयुक्तस्यनिद्रा वशित्वान्मूढता अत्यन्तचलायमानस्यकादाचित्कस्थित्याविक्षिप्तता आस्ववस्थासुसंदेशानर्हत्वात् सत्वप्रधानस्यैकाग्रतयैकविषयेनिश्चलत्वमित्यन्यथैकविषयेनिश्चयत्वाभावे अन्यत्रवागमनेममकार्य्यहानिः स्यादितिभावोऽतउपपन्नंसत्वमितिविशषणे प्रापणीयाः प्रापयितव्याः संदिशन्ते इतिसंदेशास्त एवार्थाः संदेशार्थाः क इत्येवमौत्सुक्यादिष्टार्थोद्युक्तत्वात् इष्टार्थोद्युक्तउत्सुकइत्यमरः ॥ अपरिगणयन् अविचारयन् सावधानमनामनोधैर्य्यदर्शनार्थमिदंविशेषणम् तन्मनः ययाचेयाचितवान् प्रार्थयामास तथाहिवियोगेनक्षुणः ( क्षुधिरसंपेषणे इत्यतः कर्त्तरिक्तः रदाभ्यांनिष्ठानोन इत्यनेनप्रकृतिप्रत्ययतकारदकारयोर्नत्वेपूर्वपरनकारस्य रषाभ्यामितिणत्वपूर्वस्यष्ठु नाष्ठुः इतिष्ठुत्वेनणकारोजर्जरीभूतः वैयोगीयः शैशिकः गहादेराकृतिगणत्वाद्गहादिभ्यश्चछः तस्यायनेयीति इयादेशः चेतनाचेतनेषु विषयेप्रकृतिकृपणाः स्वभावदीनाः वियोगिनांयुक्तायुक्तविवेकशून्यत्वादचेतनयाच्चानविरुध्यते इत्यर्थः अत्रमनस्संदेशयोर्विरूपयोर्घटनाद्विषमालङ्कारः तदुक्तम् विरुद्धनार्थस्योत्पत्तिर्यत्रानर्थस्यवाभवेत् विरूपघटनाचा सौविषमालंकृतिस्त्रिधासाचार्थान्तरन्यासानुप्राणिताततसमर्थकत्वेनैवचतुर्थयादेतस्योपन्यास्यात्॥५॥

**मू॰ जातंवंशेप्रकृतिसुभगेपंचबुद्धीन्द्रियाणां ।**

**तज्जीवस्यप्रकृतिपुरुषंकामरूपंमनस्त्वाम् ॥**

मोघंवेद्मित्वयिविधिवशाद्दूरविद्योगतोऽहं ।
तेनार्थित्वंवरमधिगुणेनाधमेलब्धकामम् ॥ ६ ॥

संप्रतियाच्ञाप्रकारमाह ॥ जातमिति ॥

हेमनःप्रकृतिसुभगेस्वभावसुन्दरे तैजसत्वादिभावः तैजसः इदंतैजस (तस्येदमित्यण् ) तेजस्यभावः तैजसत्वं तैजसत्वात्तेजः प्रभवत्वात् इत्यर्थः पंचबुद्धीन्द्रियाणांज्ञानेन्द्रियाणां वंशेकुलेकुलान्यभिजनान्वयौ वंशोऽन्वयाय इत्यमरः सजातीयगणे इत्यर्थः कुलजनपदेगोत्रेसजातीयगणेपिचेति कोशान्तरे जातंमहाकुल प्रसूतमित्यर्थः कामरूपमिच्छाधीनगति इच्छा मनोभवोकामावित्यमरः शिवाद्यन्तः करणसच्चारक्षममित्यर्थः जीवस्य सूत्रात्मनः प्रकृतिपुरुषंप्रधानपुरुषंत्वांवेद्मिजानामि चतुरादीन्द्रियैस्सह संयोगमेत्याबाह्य विषयान्साक्षात्कारयतीतिभावः तेन उत्तमकुलप्रसूतत्वादिगुणयोगित्वेन हेतुनाविधिवशाद्दैवायत्तात् ( विधिविधानेदैवेचेत्यमरः ) वशमापन्नेवशमिच्छाप्रभेदयोरितिविश्वः दूराविद्यायस्यदूरविद्यः वियुक्तविद्योऽहं त्वय्यर्थितंगतः गत्यर्थाकर्मकश्लिष्यशीङ्स्थेत्यादिसूत्रेणकर्त्तरिक्तः प्राप्तः ननुयाचकस्ययाच्ञायांयाच्यगुणोत्कर्षः कुत्रोपयुज्यते इत्याशंक्यदैवाद्याच्ञाभङ्गोऽपिलाघवदोषाभाव एवोपयोग इत्याह तदिति अर्थित्वमधिगुणे अधिकगुणेपुंसिविषये अर्थित्वंमोघंनिष्फलमपिवरमीषत्प्रियं दातुर्गुणाढ्यत्वात् प्रियत्वं अर्थित्ववैकल्यादीषत्प्रियतत्वमितिभावः अधमेनिर्गुणे अर्थित्वंलब्धकाममपिसफलमपि न वरमीषत्प्रियमपि न भवतीत्यर्थः दैवाद्वृत्तेवरः श्रेष्ठेत्रिषुक्लीबे मनाक्प्रिये इत्यमरः अर्थान्तरन्यासानुप्राणितमिति एतदाद्यपादत्रये चतुर्थपादस्थेनार्थान्तरन्यासेनोपजीवितमितिस्वव्यक्तमेतत् ॥६॥

मू॰ चित्तस्वस्थत्वमसिशरणंवागधिष्ठातृदेव्याः ।
संदेशंमेहरगतविधि क्रोधविश्लेषितस्य ॥

संततानांशिवपदनगंयत्रगन्तव्यमस्ति ।
सेव्यंतत्तेशिवयुगपदं शैलपुत्र्योपचारैः ॥ ७ ॥

हेचित्तस्वस्थ एकाग्रचित्तं त्वंसंतप्तानां भगवत्साक्षात्कारकरणार्थं जलशय्यापञ्चाग्नितापकृच्छ्रादिव्रतेन विद्याविरहेणवासंज्वरितानांसंतापः संज्वरः समावित्यमरः शरणंभगवत्साक्षात्कारेणकृच्छ्रादिखिन्नानांविद्या विरहिणांदैवाधीनं जगत्सर्वमित्यादिपरामर्शात् शान्तिदानेनचरक्षकोऽसि शरणंगृहरक्षित्रोरित्यर्थः ॥

तत्तस्मात्कारणात् गतोयोविधिः गतविधिः दैवंपूर्वसुकृतेफलदातृ अर्थात् गतः दूरिभूतः नष्टः इतियावत् सएवक्रोधः तेनविश्लेषितस्यविद्य याावियोजितस्यमे ममसंदेशंवार्त्तांवागाधिष्ठातृदेव्याः मातुः हरतांप्रतिनये त्यर्थः सम्बन्धसामान्ये षष्ठीसंदेशहरणेनावयोः संतापनुदेत्यर्थः यद्यपिवि द्याविरहिणोममैवसंतापसत्वेपितथापिसर्वखानपानादिसुखंत्यक्त्वाकेवलं तस्या उपासकत्वेनमयिप्रीतियुक्तायाः मातुः कृपाकटाक्षहेतोः संतापमि त्युभयसन्तापहारित्वमितिभावः ॥ कुत्रस्थानेस्थिता कतत्स्थानंवाकस्य तत्राह गन्तव्यमिति यत्रकैलासेशैलपुत्र्यापार्वत्या उपचारैः पूजासाम ग्रिभिः शिवयुगपदं शिवाङ्घ्रियुगलंपदं व्यवसितत्राणस्थानलक्ष्मांघ्रिव स्तुष्वित्यमरः ॥ सेव्यंतत्तेत्वयाशिवपदनगं शिवस्थानकैलासंपदंस्थानेवि भक्त्यते शब्देवाक्यैकवसुनोरितिहैमः गन्तव्यमस्तिगमनयोग्यमित्यर्थः कृत्यानांकर्त्तरिषष्ठी ॥ ७ ॥

मू० त्वामारूढंपवनपदवीमूर्द्ध्वशुक्लाः सयत्नाः ।
प्रेक्षिष्यंतेपथिकपुरुषाः प्रत्ययादाश्वसंतः ॥
कःसन्नद्धेविरहाविधुरः त्वय्युपेक्षेतविद्यां ।
नस्यादन्योप्यहामिवजनोयः पराधीनवृत्तिः ॥ ८ ॥

मदर्थेप्रस्थितस्यतेपथिकयोगिजनाश्वासनमानुषङ्गिक फलमित्याह त्वामिति पवनपदवीमाकाशमारूढंत्वांपन्था: निवासोएषामिति ॥ पथिका: सोऽस्यनिवासइति शैषिक:कन् तेचपुरुषा: पथिकपुरुषा: योगिजना: योगक्रियारब्धका: इत्यर्थ: प्रत्ययात् पूर्वयोगिमनांसिकैलासे शिवसांनिध्यंगच्छन्तीत्यागमनविश्वासादित्यर्थ: प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमर: आश्वसंत: विश्वस्ता: आङ्पूर्वक श्वासिधातो: शत्रन्तस्येति ऊर्द्धशुक्रंवीर्य्ययेषान्तेऊर्ध्वशुक्रा: शुक्रंतेजोरेतसीचवीजवीर्येन्द्रियाणिचेत्यमर: ॥ तैर्विनानान्येत्वांपवनपदवीमारूढंपश्यन्तीतिभाव: अतएवयत्नै: सह इति बहुव्रीहौतेनसहेतितुल्ययोगे इतिसूत्रेतुल्ययोगवचनस्यप्रायिकत्वात्सकर्म्मक इतिवत् तेनसमासेवोपसर्ज्जनस्येतिसहस्यसआदेश: सयत्ना: यत्नविशिष्टा: इत्यर्थ: सन्त: प्रेक्षिष्यंते अत्युत्कटतयाद्रक्ष्यन्तीत्यर्थ: तथाहि त्वयिसन्नद्धे संपूर्वकनहधातो: क्रान्तमितिचित्तेस्थितिंलभतिसति विरहेणविधुरोविकल: वैकल्येपिचविश्लेषेविधुरंविकलेत्रिष्वितिमेदिनीविवश इतियावत् आसन्नमरणदूषितबुद्धिरित्यर्थ: विवशोऽरिष्टदुष्टधीरित्यमर: ॥ विद्यांविद्यतेज्ञायते ईश्वरप्राप्तिद्वारापरमानन्दसुखमनयावाहुलकात् करणेण्यत् इतिविद्याविदांकुर्वन्त्वितिनिर्देशात्तिङतिरिक्तार्द्धधातुके गुणाभावोऽपिविज्ञायते तांमातृवदनेकसुखदात्रींविद्ययासुखमश्नुते इतिशास्त्रात् विद्ययैवपरमानन्दंप्राप्नोतिपुरुष: अध्ययनकर्त्रास्वाध्यायाद्यनुष्ठानपूर्विकाधीतामानमेतितदेवसुखंसाचज्ञानंखलेशूद्रकुलेगताऽननुष्ठानपूर्विकाऽधीतादु:खमेतितदेवसुखदात्र्या: तस्या: विरह: इतिभाव: क: उपेक्षेत् नकोपीत्यर्थ: अन्योऽपिमद्व्यतिरिक्तोपि योजनोऽहमिवपराधीनप्राण: परस्यमृत्यो: अधीन: वशीभूत: प्राणोयस्यसनस्यात्स्वतंत्रस्तुनकोप्युपेक्षेत इत्यर्थान्तरन्यास: ॥ ८ ॥

मू॰ प्राणोवायुश्चलतिसुलघु:सोऽनुकूलोयथात्वां ।

वामाङ्गेडासरतिशुभदादक्षिणेपिङ्गलाते ॥
सेविष्यन्तेसुगुणसुभगंदेवताखेमनस्त्वां ।
शंभोःसेवाक्षणपरिचयान्नूनमाबद्धपंक्तीः ॥९॥

निमित्तान्यपितेशुभानिदृश्यन्तेइत्याहप्राणइतिअनुकूलःयात्राकालेशुभसूचकोयथाभवतितथेत्यर्थःप्राणोवायुःत्वांलघुःशोभनःलघुःसुलघुःअत्यल्पमित्यर्थःअल्पंत्रिष्विष्टेऽल्पेलघुइतिकोशेनानार्थःयथासदृशंभावि वेलानुरूपमित्यर्थःयथासादृश्ययोग्यता वीप्सास्वार्थानतिक्रम इतियादवः चलतिशनैश्शनैश्चलतीत्यर्थःयथाप्रकृतिप्राणचलनेनमनसोऽनवस्थितिर्निराकृता इति भावः शुभदाकल्याणदात्रीतेतववामाङ्गे वामभागे वामस्तुवक्रेरम्येस्यात् सव्येगतेऽपिचेतिशब्दार्णवः इडा अमृतरूपा वामेचामृतरूपास्यादितिशास्त्रात् दक्षिणेदक्षिणभागेपिङ्गलाचसरतिचलति इदन्निमित्तद्वयंवर्त्ततेवार्त्तिष्यतेचापरन्निमित्तामित्याह ॥ शंभोर्महादेवस्यसेवातच्चित्तानुवर्त्तनं सेवाश्ववृत्तिरित्यमरः शुनोवृत्तिरिवेत्यर्थः तदेवक्षणः उत्सवः सुखहेतुत्वादित्यर्थः ॥ निर्व्यारस्थितौकालविशेषोत्सवयोः क्षणइत्यमरः तस्मिन्परिचयादभ्यासाद्धेतोः खेआकाशे खमिन्द्रियसमाख्यातंखमाकाशमुदाहृतमित्येकाक्षरकोशः आबद्धपंक्तीः वासनानिवृत्तिपूर्वकशिवचित्तानुवर्त्तनार्थंत्वत्समीपेवद्धपंक्तयः इत्यर्थः तदुक्तंवसिष्ठे यावद्विलीनंनमनोनतावद्वासनाक्षयः इतिदेवतांदीव्यंतिप्रकाशंते इतिपचाद्यचिदेवाः देवाएवेतिदेवता दैवात्तल् इतिस्वार्थिकस्तल्प्रत्ययः सुगुणैःशोभनैः सत्वगुणैस्सुभगंसुन्दरं मनसः सौदर्य्यंनिश्चलत्वमित्यर्थः हेमनः त्वांनूनंसत्यंसेविष्यन्ते प्राणायामेननिश्चलंकुर्वन्तीत्यर्थः ॥ अनुकूलप्राणवायुरिडापिङ्गलयोर्यथास्थानचलनंदेवतादर्शनंचयोगशास्त्रेशुभसूचकमितिविस्तरभयान्नलिखितं ॥९॥

मू० ताञ्चावश्यन्शिवचरणगांतत्परामेकपत्नीं ।

तत्पूजायामविहतगतिर्द्रक्ष्यसिभ्रातृमात्रीं ॥
आशाबन्धः कुसुमसदृशंप्रायशोह्यङ्गनानां ।
सद्यःपातिप्रणयिहृदयंविप्रयोगेरुणद्धि ॥ १० ॥

नचतस्यानाशादन्यत्रगमनाद्वानिरर्थकस्त्वत्प्रयासः इत्याह

ताञ्चेति-हेमनः ध्यानावस्थितेः गौर्य्याः एकाग्रतयाशिवचरणयोरेव स्मरणंनममेतिपुष्पादिसामग्र्याशिवांघ्रिसेवासत्वेपिमयिप्रीतियुक्तायाःमातुः कदासंगमिष्यतिपुत्रः इतिस्मरणबोधनायाह तत्पूजायामिति तत्पूजायांम हादेवपूजायां पूजानमस्यापचितिसपर्य्याचार्हणासमाइत्यमरः ॥ तत्परा मासक्तांनतुध्यानावस्थितांतत्परेप्रसितासक्ताविर्त्यमरः॥ मदागमनकांक्षया यापुष्पादिपूजाव्याजेनवासरानूगणयन्तींजीवनीमितिभावःशिवचरणगांना न्यत्रगमनार्हामित्यर्थः ॥ एकपुत्रांयद्यपिजगत्सर्वंतस्याःपुत्रः इतिकथमेक पुत्रीत्वं तथापिएकःप्रधानोऽहमेवमनुष्येषुपुत्रोयस्याःसा एकोऽसहायः पुत्रोयस्याः ॥ नसहायकौरक्षकौमरणसमयेपितरौयस्येतिकिञ्चएकोऽन्यः पुत्रोयस्याःलोकोत्तरचमत्कृतिरपूर्वइतियावत् एकपुत्रातामितिभावः एको न्यार्थेप्रधानेचेतिकोशः ॥ भ्रातुर्ममभ्रात्रींभ्रातृमात्रींनिशङ्कंदर्शनीयामित्या शयः ॥ ननुयद्यपिभ्रातृमात्रीमित्यत्रनषट्स्वस्रादिभ्यश्चेतिङीप्निषेधेभ्रातृ मात्रीमित्यनुपपन्नंतथापिभ्रातृमात्रीमित्युक्त्यातद्घटकभ्रातृशब्देनसहोदर स्यग्रहणंतदामातृशब्दस्य मातृवाचकत्वेन षट्स्वस्रादिभ्यइतिङीप्निषेधः स्यात् किन्तुसहोदरस्यग्रहणंनास्ति यदिसहोदरस्यग्रहणं तदामात्रीमित्ये ववक्तुमुचितमतः भ्रातृमात्रीमित्युक्त्या मातृस्वसृपितृस्वसृसुतस्यग्रहणेत त्सुतस्य या माता तद्वाचकमातृशब्दस्यमुख्यमातृवाचकत्वाभावान्न षट् स्वस्रादिभ्य इति न ङीप्निषेधः गौणमुख्ययोमुख्येकार्य्यसंप्रत्ययइतिन्या यात् अतएवशेखरेप्युक्तं स्वस्रादिषुमातृशब्दस्यननान्दादिसाहचर्य्यात्प्र

सिद्धत्वाच्चससम्बंधिक जननीवाचकस्यैवग्रहणमिति किंच नचसहोदरादि सर्वेषांभ्रातृशब्देनग्रहणे तन्मातृणांसर्वासामुपस्थितावपि सहोदरमात्रुप स्थितौमातृस्वस्रुपस्थितसामग्र्याः प्रतिबन्धकत्वंमातृस्वस्रुपस्थितावपिस होदरमात्रुपस्थितसामग्र्याः प्रतिबन्धकत्वमितिपरस्परप्रतिबन्ध्यप्रतिबन्ध कभावेनतात्पर्य्यीयार्थस्याभावात् नसामान्यमातृवाचकशब्दस्य ग्रहण मुक्तन्यायात् किन्तुमुख्यजननीवाचकस्यैव एवमपितात्पर्य्यीयार्थस्याभा वेननिर्णीतार्थत्वाभावेन कस्याप्यर्थस्योपपत्तिस्स्या।दित्येतावतापिप्रयो गोऽनुपपपतिरेवेतिवाच्यम् किंचवस्तुतः प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंव रमितिन्यायेनाप्रसिद्धमात्रीशब्दंसंगृह्योक्तभाष्यप्रामाण्येनप्रमाणत्वम् ॥ तदपेक्षयाप्रसिद्धस्यैवग्रहणेआग्रहश्चेत्तदाभ्रातृमात्रीमितिपाठेप्रोचुस्तेजिह्मबु द्धितांनागमातांविगृह्यतु इतिभविष्येत्रह्मपर्वण्युक्त्या आर्षमाताशब्दो च्चारणे रोगनिष्पीडनमनो ऽनवस्थित्याकदाचिद्भ्रातृमाता मित्युच्चारणे भ्रातृमात्रीमित्युच्चरितमितिभ्रातृमातामितिपाठः साधुः इतिनकाप्यनुप पत्तिः ॥ नैयायिकमतेजीवमनसोनित्यत्वे ऽपीदमस्यमनोऽयमस्यात्मे त्युपाधिनाजीवमनसोः परस्परभ्रातृत्वेनलक्ष्म्यलक्ष्म्योः पुत्रत्वंकल्पित मिति तथाहिलक्ष्म्यलक्ष्म्योः परस्पर भगिनीत्वमिति पुराणप्रसिद्धं तदुक्तं पद्मपुराणे समुद्रमथनाद्यानिरत्नान्यास न्सुरोत्तमाः श्रियंचकौस्तुभंतेषां विष्णवेप्रददुः सुराः पावदङ्गीचकारासौलक्ष्मीभार्यार्थमात्मनः ताव द्विज्ञापयामासलक्ष्मीस्तंचक्रपाणिनम् असंस्कृता कथंज्येष्ठा कनिष्ठाप रिणीयते तस्मान्ममाग्रजोमनामलक्ष्मी मधुसूदनविस्तरस्तु पुराणेभ्योऽ वगंतव्योविस्तारभयान्नलिखितं ॥ तथाचमनश्चञ्चलत्वेनालक्ष्मीजन्यत्वं चंचलंहिमनः कृष्ण इति गीतावचनात् मनसिचञ्चलत्वं यद्यपिजीवस्या प्युपाधिनाभेदेपि भेदविशिष्टस्यत्रह्मत्वमसंभवं तथापि जीवोत्रह्मैवकेवल मितिश्रुत्यनुरोधाद्भेदविशिष्टेपि ब्रह्मत्वमुपपद्यते तच्चविद्ययामृतमश्नुतेइति

श्रुत्याविद्याद्वारैवेतिर्जावे विद्याप्रभवत्वंकल्पितम् ॥ एवंचविद्याविद्ययोः परस्पर भगिनीत्वेन तत्पुत्रयोर्भ्रातृत्वमिति भ्रातृमात्रीमितिकथन्नशास्त्र विरुद्धम् किन्तुसाध्वेव एतच्चालङ्कारिकाणांनविरुध्यते । नचयथावाहीक वाचकगोशब्दस्य गौस्तिष्ठातिगामानयेत्यत्र ओतसूत्रभाष्यप्रयोगेगौणमु ख्यन्यायसत्वेऽपि शब्दाश्रये वृद्ध्यात्वे भवतस्तथापि नषट्स्वस्रादि भ्यइति निषेधस्यशब्दाश्रयत्वेनगौणवाचकमातृशब्देपि प्रवृतिस्यादितिवा च्यम् अचोञ्णित्यौतोऽम्शसोरितिवृद्ध्यात्वयोः अजन्तांगौदन्तनिमित्त कत्वेनशब्दाश्रयत्वेऽपिवृध्यात्वेभवतामुक्तगौणप्रयोगे तत्रसूत्रेविशेषतयोद्दे श्यत्वाभावादत्रतु विशेषमातृशब्दोद्देश्यत्वात् मातृशब्दस्यानेकर्थत्वात् किमर्थविशिष्टमातृशब्दस्यनिषेधः इति नषट्स्वस्रादिभ्यइत्यस्यार्थाश्रय त्वात् शब्दाश्रयत्वाभावेन नगौणवाचकमातृशब्देप्रवृत्तिरन्यथाननांदृसा हचर्य्याज्जननीवाचकस्यैव गृहणमितिशेखरोक्तिरसङ्गता तांमन्मातरं अ विहतगतिसफलगतिसदवश्यंद्रक्ष्यसिच आलोकयिष्यसेएव तथाहि आ शा अतितृष्णा आशादिगतितृष्णयोरितियादवः बध्यतेऽनेनेतिवधोबन्ध नंवृन्तमितियावत् आशैवबन्धः आशाबन्धः कर्त्ताप्रणयिप्रेमयुक्तं प्रणयः प्रश्रयोसमावित्यमरः ॥ अत एव कुसुमसदृशं सुकुमारमित्यर्थः ॥ अत एव विप्रयोगेविरहेसद्यः पातिसद्योभ्रंशनीयंअङ्गनानांहृदयंजीवितंहृदयं जीवितेचित्ते इति शब्दार्णवः प्रायशः प्रायेण रुणद्धिप्रतिबध्नातीत्यर्था न्तरन्यासः ॥ १० ॥

मू० कर्तुंयच्चप्रभवतिविधेः पूर्णभावंत्ववन्ध्यं ।
त्वामैकाग्र्यंप्रणयियतयोमानसोत्काः विदित्वा ॥
आकैलासात्पवनपरिवर्त्ताध्वस्वाहारवन्तः ।
संपत्स्यन्तेनभसिभवतस्त्वेकचित्ताः सहायाः ॥ ११ ॥

सम्प्रतिसहायसम्पत्तिश्चास्तीत्याह ।। कर्त्तुमिति ।। हेमनः यदैका ग्र्यंत्वंकर्तृविधेः त्वितिनिश्चयार्थकः तुपुनर्वैवेत्यवधारणवाचकाइत्यमरः रावणंतुदुरात्मानमवधीद्राघवः प्रभुः ।। ब्रह्मणोपिब्रह्मात्मभूरित्यारभ्यविश्व सृड्विधिरित्यमरः ।। पूर्णमखण्डं समग्रंसकलंपूर्णमखण्डस्यादनूनके इत्य मरः ।। भावमभिप्रायंसकलजगत्कर्त्तृत्वेनेश्वरत्वमित्यर्थः ।। भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु इत्यमरः ।। अतएवबन्धेसाधुः यत्बन्ध्यं नबन्ध्य मबंध्यंसफलंकर्त्तुम्प्रभवतिशक्नोतिमनसः एकाग्र्यंयोगिनांभावि सिद्धिसूचकत्वादितिभावः ।। तदुक्तंहठप्रदीपकायाम् ।। मनः स्थैर्यै स्थिरोवायुस्ततोबिन्दुः स्थिरोभवेत् बिन्दुः स्थैर्य्यात्सदासत्वंपिण्डस्थैर्य्यं प्रजायतेइति च हेतौचपादपूरणेपक्षान्तरे हेतोवितिनिश्चये इतित्रिकाण्ड शेषोद्वयमितिहेतोरित्यर्थः ।। प्रणयिप्रेमतेनबद्धाः यतयः प्रणयियतयः शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः प्रणयः प्रश्रयौसमौवित्यमरः।। मानसोक्ताः मानसेसरासि उन्मनसाः उत्सुकाः इतियावत् उक्त उन्मनः इतिनिपातनात्साधुः शरदादिऋतावन्यत्रमानसाद्योगिनांयोगसाधन- सम्पत्तिसत्वेपिग्रीष्मादिऋतौपुनर्मानसमेवगच्छन्तीतिप्रसिद्धिः पवनस्य प्राणवायोः परिवृत्तः परिवर्त्तनंपरिपूर्वकवृतधातोर्भावघञिरूपं ।। अवरोहारोहणमित्यर्थः तदेवाध्वनिमार्गे आहारः जेमनंजेमनंलेहआहारः इत्यमरः ।। तद्वन्तोद्वितीयस्तुसमुच्चयार्थकः त्वामित्यत्रान्वितः त्वामिति ज्ञात्वेत्यर्थः ।। तुपादपूरणेभेदेसमुच्चयेऽवधारणे पक्षान्तरेनियोगे च प्रशं सायांविनिग्रहे इति मेदिनीनभसिआकाशेभवतस्तव आकैलासात्कैलास पर्य्यन्तंपदद्वयञ्चैतत् ।। एकचित्ताः एकंप्रधानंचित्तंयेषांतेएकचित्ताः तवतन्मनश्चसाजात्यात्तव तैः सह आहारव्यवहारस्यैक्यंस्यादितिभावः ।। सहायाः सहअयन्तेगच्छन्तीतिसहायाः पचाद्यच् ।। सयात्राः सहायस्तु सयात्रः स्यादितिशब्दार्णवः सम्पत्स्यन्तेसम्भविष्यन्ति ।। ११ ।।

मू० आपृच्छस्वप्रियसखमिमं प्राणमालिङ्ग्यशैले ।
ऽधस्तात्तीर्थोविरहरफणः शोभतेयस्यसाक्षात् ॥
कालेकालेभवतिभवतोयस्यसंयोगमेत्य ।
स्नेहव्यक्तिश्चिरविरहजंमुञ्चतोबाष्पमुष्णम् ॥१२॥

हेमनः अत्रशैलेमङ्गलाभद्रकाल्याः शैलेप्रियं सखायं राजाहःसखिभ्यष्टाजितिटच् प्रत्ययः इमंहृदयस्थं इदमस्तुसन्निकृष्टे इतिशास्त्रं प्राणंप्राणमनसोः हृदयस्थत्वात्सहचारिचारितयापरस्परमित्रत्वंकिञ्चतुल्यक्रियत्वाच्च ॥ तदुक्तंहठप्रदीपकायां ॥ यतोमरुत्तत्रमनः प्रवृत्तिर्यतोमनस्तत्रमरुत्प्रवृत्तिः ॥ तदुक्तंवसिष्ठे ॥ अविनाभाविनोनित्यं जन्तूनां प्राणचेतसो ॥ कुसुमामोदवन्मिश्रेतिलतैलेइवास्थिते ॥ आलिङ्ग्य आपृच्छस्व हेसाधोयामीत्यामंत्रणेनसभाजय आमंत्रणंसभाजने आप्रच्छनमित्यमरः ॥ आङि नुपृच्छेरित्यात्मनेपदम् ॥ यस्यमङ्गलाशैलस्याधस्तात् अधोदेशेनीचैरितियावत् ॥ तीर्थः तीर्थयतेसेव्यतेऋषिभिः पातृतुदिवचिरिचिसिचिभ्यस्थक् इत्यौणादिकस्थक्कर्म्मणि ऋतइद्धातोरितीत्वेरपरत्वेहलिचेतिदीर्घः तीर्थइति तीर्थः अर्द्धर्चादित्वात्पुंस्त्वमपिकश्यपादिभिः सेवितः इति ध्वनिः ॥ तीर्थशास्त्राध्वरेक्षेत्रोपायनारीरजस्सुच अवतारर्षिजुष्टांबुयात्रोपाध्यायमंत्रिष्वितिमेदिनी तीर्थमृषिजुष्टजलगुरावित्यमरश्चविरहरफणजः यस्मात्स्थानान्महर्षिकश्यपत्तपसासन्तुष्टेन महादेवेन गच्छगच्छेतिनिस्सारितादेवीपार्वती विरावशब्दान्कुर्वतीतस्याविरनागोनाम एवंहरतीर्थस्यहरनागसंज्ञाच विरश्चहरश्चविरहरौतौचफणिनौविरहरफणिनौताभ्यांजातोविरह फणः तत्रजातअनेनजातार्थे अच्नस्ताद्धितइतिटेर्लोपः ॥ यस्यावित्तस्तातीर्थइतिनामजगतिप्रसिद्धं वित्तस्तामाहात्म्ये देवाज्ञप्तादेवीवित्तास्तिमा

त्राद्वर्ताद्वैयतोवैनिसृतास्वयंतस्माद्वित्तस्तेतिसदाप्राथिताभुवनत्रये ॥ शोभ तेविराजतेसाखित्वंनिर्वाहयतिकालकालेनित्यवीप्सयोरितिवीप्सायां द्विरु क्तिः ॥ भगवच्चरणोपासनासत्तिकालेसुहृत्समागमकालश्चकालशब्देनो च्यते भवतः तवमनसः संयोगंसंपर्कमेत्यप्राप्यचिरविरहजम् ॥ चिरवि रहजंजनधातोः पंचम्यामजाताविति डः टेर्लोपे जइतिचिरकालीनवियोगा ज्जातम् ॥ मनसश्चंचलत्वादितस्ततश्चचलनम् ॥ जीवरक्षार्थमपिप्राणो देहएवावतिष्ठतीतिप्रसिद्धम् ॥ तथाचमदिच्छयामातृपित्रादिअनेकपदा र्थेषुप्रवर्त्तमानस्यमनसः प्राणेनसहवियोगः ॥ इतितद्वियोगी प्राणः पुनर्मा तुःपार्वत्याःसन्देशार्थमाहूतेनमनसाप्राणस्यसंयोगः॥ इतितत्समयेचिरका लीनवियोगजन्यत्वंवाष्पस्येतिभावः ॥ ननुप्राणमनसोरभेदकप्रतिपादकैःय तोमरुदित्यादिवाक्यैः प्राणमनसोः क्षणिकमपिवियोगाभावात्कथंचिरका लिकवियोगसम्भवस्तयोरितिवाच्यम् ॥ यदागौरीरूपाविद्यायाअत्यंतवियो गेनममभगवद्दत्तस्यमनोविद्याब्रूह्मणितन्मयतामेति विद्यायाब्रूह्मत्वं सर्वंख ल्विदं ब्रूह्मेतिश्रुत्यातदाप्राणेसुषुम्नावाहिनिसतिप्राणमनसोर्भवतिबहुकालि कसंयोगः ॥ तदुक्तंहठप्रदीपिकायाम् ॥ सुषुम्नावाहिनिप्राणेशून्येविशति मानसे तदासर्वाणिकर्म्माणिनिर्मूलयतियोगविदिति ॥ यथाश्रीकृष्णवि युक्तगोपिकानांमनस्तन्मयतामाप ॥ दृष्टान्तश्चायमेकदेशीवियोगेनतन्म यतां प्राप्तौ ॥ ननु प्राणमनसो लौकिक पितापुत्रादिदेशान्तरगमनवत् वियोगाभावात्कथंपुनस्संयोगइतिवाच्यम् ॥ यावत्प्राणः सुषुम्नायांवह तितावत्पुनरपिमनइतस्ततोगत्वाहृदयेतिष्ठति ॥ तदुक्तंहठप्रदीपिकायाम् ॥ यावद्वायुस्थितोदेहे तावज्जीवनमुच्यते इति ॥ यावज्जीवनंतावन्मनः स्थि तिर्हृद्देशे ॥ अतएवकाश्मीरमंडलस्थमण्डनमिश्रकन्ययाशास्त्रार्थेकामशा स्त्राविज्ञानतश्शङ्कराचार्य्यः स्वदेहंपरित्यज्यतद्रक्षार्थंशिष्यान्नियुज्यकस्य चिद्राज्ञः देहंप्रविश्यतच्छास्त्रमधीतवान् अध्ययनञ्च विनाप्राणवायुनान सम्भवति परंचयोगबलेनतस्यराज्ञस्तत्कालपर्य्यन्तमिडापिङ्गलयोः प्राणा

न्निरुध्यसर्वकामशास्त्रविषयमनुभूतम् ॥ यदिस्वप्राणेनसहगतइतिमन्येयु स्तथापिनहि स्वप्राणेनस्वदेहेतावत्काल शुष्कत्वान्नप्रवेशयोग्यतास्यादिति भावः ॥ इतिशंकराचार्य्याख्यायिकाशंकरदिग्विजयेप्रसिद्धाविस्तारभया न्नोल्लिखिता इडापिंगलाभ्यांवहनं प्राणस्यजीवनंस्वस्वविषयग्रहणामिंद्रिया णांजीवनंनानाविषयाकारवृत्त्युत्पादनंमनसोजीवनं ॥ नचमनसोऽनीन्द्रि यत्वम् ॥ मनसः इन्द्रियत्वेबाधकाभावादिन्द्रियाणांमनोनाथइतिमनुष्यामि वोद्दिश्यमनुष्याणामयंराजेत्यादिवदिन्द्रियेष्वेवकिंचिदुत्कर्षम्ब्रवीति ॥नतु तस्यानींद्रियत्वंतत्वंच षडस्वखण्डोपाधिविशेषएव ॥ अतएव कर्म्मेन्द्रिय न्तुपाय्वादिमनोनेत्रादिधीन्द्रियमिति प्रत्यक्षंस्यादैन्द्रियकमप्रत्यक्षमतीन्द्रि यमितिच शक्तिप्रमाणभूतकोशेऽपीन्द्रियाप्रमाणकज्ञानस्याप्रत्यक्षंवदन्मन सइन्द्रियत्वज्ञापकत्वंसंगच्छते इन्द्रियाणिदशैकंचेतिगीतावचनं इंद्रियत्वे प्रमाणम् ॥ उष्णंतप्तंवाष्पमुष्माणंनेत्रजलञ्च वाष्पोनेत्रजलोष्मणोरितिवि श्वः ॥ मुंचतः यस्यप्राणस्यस्नेहव्याक्तिःप्रेमाविर्भावोभवतिस्निग्धानांहि विरहसंगतानांवाष्पपातोभवतीतिभावः ॥ १२ ॥

मू० मार्गन्तावच्छृणुकथयतस्त्वत्प्रयाणानुरूपं ।
सन्देशम्मेतदनुहृदयश्रोष्यासिश्रोत्रपेयम् ॥
खिन्नः खिन्नः सकलहृदयेयोगिनान्यस्यपादं ।
क्षीणः क्षीणोलघुपवनमाश्रित्यगंतासियत्र ॥१३॥

सम्प्रतितस्यमार्गङ्कथयति मार्गमिति हेहृदयतावदिदानीं कथयतोमत्त इति शेषः त्वत्प्रयाणानुरूपमनुकूलंसार्गमध्वानंमार्गोमृगेमासिसौम्यर्क्षेऽन्वे षणेऽध्वनीतियादवः शृणुतदनुमार्गश्रवणानन्तरंश्रोत्राभ्यां पेयंपानार्हं अ तितृष्णया श्रोतव्यमित्यर्थः पेयग्रहणात्सन्देशस्यामृतसाम्यंगम्यतेमेसंदेशं वाचिकम् सन्देशवाग्वाचिकंस्यादित्यमरः ॥ श्रोष्यसियत्रमार्गे खिन्नः

खिन्नोऽभीक्ष्णंक्षीणवलंसत् अत्यन्तशीघ्रगमनेनवाकुत्रचिदपरिचयादसम्भवात् खानपानादेरितिभावः नित्यवीप्सयोरितिनित्यार्थेद्विर्भावः योगिनांसकलहृदयेसमग्रमनसिपादंमयूषंपादोमूलास्त्रतुर्य्यांशांत्रिषु प्रत्यन्तपर्वते इतिहैमः ॥ मनसस्तैजसत्वान्मयूषत्वंसूर्य्यादिवदितिभावः ॥ पादशब्देन चरणग्रहणेचरणनिक्षेपेण शरीरस्यानिक्षेपयोगिनांहृदयएवस्थितिर्नस्यादित्याशंक्य किन्तुस्वयमेवोपरिमार्गेस्थित्वाकिरणद्वारापिबललाभात् ॥ मयूषमित्युक्तम् ॥ यथासूर्य्यस्तत्रस्थित्वैवकिरणैरेवजलान्याकर्षतितद्वदिति भावः न्यस्यनिक्षिप्यपुनर्बललाभार्थंकचिद्विश्रम्येत्यर्थः क्षीणः क्षीणोऽभीक्ष्णंकृशांगंसत् ॥ अत्रापिकृदन्तत्वापूर्ववत्द्विरुक्तिः लघुइष्टं त्रिष्विष्टेऽल्पेलघुरितित्रिकांडशेषः गुरुत्वदोषरहितम्पूरकरेचकावर्त्तनेनखेदितत्वात्पथ्यमित्यर्थः तदुक्तंहठप्रदीपकायाम् ॥ यथासुषुम्नानाडीस्थाःमलाःशुद्धिंप्रयान्तिच वहुपद्मासनोयोगी प्राणंचंद्रेणपूरयेत् धारयित्वायथाशक्ति भूयोमार्गेणरेचयेदितिपवनमाश्रित्य स्वशरीरपोषणपूर्वकप्रवृत्यर्थमव्यवहृत्य तदुक्तंवसिष्ठे द्वेबीजेरामचित्तस्य प्राणस्यन्दनवासने चित्तप्रवृताविति शेषः गन्तासिगमिष्यसिगमेर्लुट् ॥ १३ ॥

अस्मिन्नद्रौवसतिगिरिजामंगलानामयस्याः
पूतेतस्याः चरणकमलैः पूजितैस्सर्वसिद्धैः ॥
स्थानादस्मात्सजलसरसादुत्पतोदङ्मुखख्येः
बुद्ध्यादीनांपथिपरिहरन् वासनापुंजजालान् ।१४।

अस्मिन्निति सर्वसिद्धैःपूजितैः तस्याः मङ्गलादेव्याः चरणकमलानिवउपमितमितिसमासः ॥ चरणकमलैः पूतेपवित्रे अस्मिन्नद्रौमङ्गलादेव्याः पर्वते यद्यपिहिमवान्निषधाविन्ध्योपारिपात्रगन्धमादीनामुदयाचलरैवतकादीनांचपर्वतत्वं प्रत्यन्तपर्वतानांपादात्वंशैलपादात्वमित्यर्थः ॥

तेष्वन्यतमत्वाभावाद्धरिपर्वतस्य पर्वतत्वन्नास्त्यथचकाश्मरि मण्डलस्थश ङ्कराचार्य्यपर्वतस्यपर्वतत्वंनास्तितथापिशारिकादेव्याश्रितत्वेन शङ्कराचा र्य्यलिङ्गाश्रितत्वेनोभयोरतिशयितत्वात्पर्वतत्वम् ॥ तद्वदत्रापिगिरिजा मंगलाश्रितत्वेनातिशयितत्वात्पर्वतत्वं किंचगिरिजश्रायत्वेनकैलासस्यैवक श्चिदेकदेशविशेष इत्येकदेशेऽवयवित्वमारोप्यतेविष्णुमन्दिरस्येष्ठका इति तदिष्ठकासुमन्दिरत्वन्नविहन्यते इतिपर्वतत्वम् गिरिजागिरौजायते इतिसप्तम्यांजनेर्डः इतिडः वसतिनिवासंकरोतीत्यर्थः ॥ यस्याः गिरिजायाः मंगलाइतिनामप्रसिद्धम् ॥ सजलसरसात् जलेनसहवर्त्तते इति सजलं तञ्चसरः विद्यतेयत्र इति ॥ अर्श आदिभ्योऽच्इत्यच् ॥ सजलसरसंतस्मात् अस्मात् ममाश्रितत्वेनसाक्षात्तवाश्रया दित्यर्थः ॥ किञ्चयद्विद्यारूपपार्वत्याः दैववशात्क्रोधहेतोः विरहाद्दुःखेनपीडितस्सन् तदाराधनार्थयत्रकतिचिद्दिवसनिवासार्थं समागतोऽहम् ॥ स्थानात् आश्रमात् पथिहृदयमार्गे बुद्ध्यादीनामादिपदेनतत्तदिन्द्रियाणांवासना भावनाख्यः संस्कारः तस्यपुञ्जानांराशनिांस्यात्रिकायः पुञ्जराशिरित्य मरः ॥ जालान्समूहान् जालंसमूहपानाय इतित्रिकाण्डशेषः परिहरन् दूरीकुर्वन् उदङ्मुखंसत् कैलासस्य उदीच्यत्वादित्याशयः खमाकाशमुत्प तोद्गच्छ ॥ १४ ॥

सूर्य्यच्छव्याः समुदितइवप्रेक्ष्यमेतत्पुरस्ता-
च्चितस्थानात्प्रभवतिपुरः येनसूक्ष्मंप्रकाशम् ॥
विक्षिप्तंत्वंमलिनरजसारूपमापत्स्यतेस्वं ।
वर्हेणेवस्फुरितरुचिनागोपवेशस्यविष्णोः ॥ १५ ॥

सूर्य्येति सूर्य्यस्यछव्याः प्रभायाः स्युःप्रभारुग्रुचिस्त्विड्भ्यांभाछ विद्युतिदीप्तयइत्यमरः ॥ समुदयः समवायः समुहइतियावत् समुदायः

समुदयः समवायश्चयोगणः इत्यमरः ॥ सइवप्रेक्ष्यंदर्शनीयं प्रकाशमेत त्पुरस्तात् अग्रेचित्तस्थानात् पुरोऽग्रेप्रभवतिआविर्भवतियेनप्रकाशेनमलि नरजसामलिनंतद्रजः रजसिमालिन्यंतमोयुक्तत्वं नतुसत्वेनेतिभावः ॥ मलिनरजः तेनाविक्षिप्तमनवस्थितं सूक्ष्ममणुरूपंस्वंस्वकीयंत्वंमनः ॥ विष्णोः शुद्धरूपेणजगद्व्यापकत्वेऽपिस्फुरितरुचिनादेदीप्यकान्त्यावर्हेणव र्हस्यानेकविचित्रवर्णत्वात् राजसत्वमितिभावः ॥ गोपावेशरूपंगोपाल रूपं एकदेशिरूपमितिभावः ॥ आपत्स्यतेप्राप्स्यसि ॥ १५ ॥

त्वय्यायत्तंकृतिफलमितिभ्रूविलासानभिज्ञैः।
प्रीतिस्निग्धैः शिवपदिरतिस्त्विन्द्रियैः पीयमानं ॥
सद्यःप्राणोत्कषणकुशलंक्षेत्रमारुह्यशुद्ध-
ङ्किञ्चित्पश्चाद्व्रजलघुगतिप्रायएवोत्तरेण ॥ १६ ॥

त्वयीति ॥ कृतिः पुण्यकर्म्मणः फलंस्वर्गादिप्राप्तिः स्वस्वरूपप्राप्ति श्चत्वयि अधिकरणत्वविवक्षायांसप्तमीति आयत्तमधीनम् ॥ आधीनो निघ्नआयतइत्यमरः ॥ इतिहेतोः प्रीत्यास्निग्धैरकृत्रिमप्रेमार्द्रैरित्यर्थः यानिरागतः प्रवर्त्तन्तेतानिस्वभावतः आर्द्राणिभवंति अतएवेन्द्रियाणिस्व स्वविषयेषुस्वभावतः आर्द्राणिभवन्तीतिभावः ॥ भ्रूविलासानांहावानां विकाराणामितियावत् स्त्रीणांशृंगारभावजानां शृंगाररससमुद्भूतानांक्रि याणामित्यर्थः ॥ स्त्रीणांविलासविव्वोकविभ्रमाललितंतथाहेलालीलेत्य मीहावाइत्यमरः ॥ तत्ररामानयनवदनभ्रूप्रभृतीनां यः काश्चिदुत्पद्यतेवि शेषः सविलासः ॥ अनभिज्ञैरपरिचितैरेकाग्रचितत्वादितिशेषः स्वी न्द्रियैः शोभनानिसत्वगुणयुक्तानीत्यर्थः ॥ इंद्रियाणियेषांतैरंतरिन्द्रिय वृत्तिभिः योगिभिरितिशेषः पीयमानंसतृक्षेत्रंशरीरं हृदयस्थानमित्यर्थः ॥ क्षेत्रंशरीरंकेदारेसिद्धस्थानकलत्रयोरिति विश्वमेदनीप्रकाशौ योगिनः

इतिशेषः सद्यः शीघ्रंप्राणस्यवायोरुत्कर्षणेनारोहावरोहणेत्यर्थः ॥ उत्पूर्वककषः ॥ ल्युट्चेतिभावेल्युट् ॥ उत्कष्यते उत्कषणंकुशलंपुण्यंपवित्रमितियावत् पर्य्याप्तिक्षेमपुण्येष्वित्यमरः ॥ आरुह्यतत्रास्थित्वेत्यर्थः ॥ किंचित् अत्यल्पकालं पश्चात् अनन्तरंलघुगति श्रमविगमानन्तरंक्षिप्रगमनंसत् लघुक्षिप्रमरंद्रुतमित्यमरः ॥ भूयः पुनरपि उत्तरेणैवउत्तरमार्गेणैव व्रजगच्छ तृतीयाभिधाने प्रकृत्यादिभ्यउपसंख्यानमितितृतीया अष्टसिद्धि तुच्छीकृतस्ययोगिनः बहुवासनायुक्तः कश्चिद्योगी अन्यत्रसिद्धस्थानेगूढ़ विहृत्यतस्मादेवमानहेतुकभङ्गभयात् नीचमार्गेणनिर्गत्यपुनः सर्वाध्यक्षंसञ्चरतितद्वदितिध्वनिः ॥ १६ ॥

प्रेमासक्त्याप्रशमितमनोदूषणंसाधुयोगी।
वोढावर्त्मन्परिश्रमगतत्वांद्वितीयाप्तकामः ॥
नक्षुद्रोऽपिप्रथमसुकृतपेक्षयासंश्रयाय।
प्राप्तेमित्रेभवतिविमुखः किंपुनर्यस्तथोच्चैः ॥ १७ ॥

प्रेमेति ॥ प्रेमपूर्विका आसक्तिः प्रेमासक्तिः मध्यमपदलोपीसमासः प्रीतिपूर्विकया आसक्त्यातत्परतया तात्पर्ययुक्तयाइतियावत् तत्परेप्रसितासक्तावित्यमरः ॥ प्रशमितंनाशितंमनोदूषणंरजस्तमोभ्यांकृतंयेनतत्पूर्वकृतोपकारकमितिभावः ॥ वर्त्ममार्गश्रमेणायासेनपरिगतंव्याप्तंत्वांसाधु सम्यक् वोढावक्ष्यति वहेर्लुट् हृदाइतिशेषः तथाहिद्वितीयात्स्वान्यस्मादाप्तं प्राप्तंकामंमनोऽभिलषितं येनसः कामोऽभिलाषस्तर्षश्चेत्यमरः ॥ क्षुद्रःकृपणोऽपिक्षुद्रोदरिद्रेकृपणेनृशंसे इतियादवः संश्रयायसंश्रयणायमित्रेसुहृदिप्राप्ते आगतेसतिप्रथमसुकृतापेक्षयापूर्वोपकारपर्य्यालोचनयाविमुखोनभवतियस्तथा तेनप्रकारेणोच्चैरुन्नतः सयोगीकिंपुनर्विमुखोभवती

तिकिमुवक्तव्यमित्यर्थः ॥ एतेनप्रथमावसथेसौख्यलाभात्तेकार्य्यसिद्धिर स्तीतिसूचितम् तदुक्तंनिमित्तनिदाने प्रथमावसथेयस्यसौख्यंतस्याखिले ऽध्वनिशिवंभवतियात्रायामन्यथात्वशुभंध्रुवम् ॥ १७ ॥

छन्नोपान्तम्परिणतफलद्योतिनास्त्वष्टसिद्ध्या ।
त्वय्यारूढेहृदयमचलेयोगिनांपूर्णयोगी ॥
नूनंयास्यत्यमरकुशलप्रेक्षणीयामवस्थां ।
त्वत्सेवायांसफलजन्माकीर्त्तनीयश्चलोके ॥ १८ ॥

छन्नोपान्तेति ॥ हेमनःपरिणतंपक्वंयत्फलं महादेवांघ्र्युपासनारूपंयद्य पिसाधनीभूतोपासनयाभीष्टदेवप्रसन्नतादिप्राप्तिः फलं तथापिभक्तैरुपा सनयादेव प्रसन्नतादिफलंतुच्छीकृत्यदेवांघ्र्युपासनैवफलंस्वीक्रियते इत्यु पासनायाः फलत्वमितिभावः तद्द्योतिनाप्रकाशिकयाविज्ञापिकयाइतिया वत् शोभनयाअणिमाद्यष्टसिद्ध्याछन्नोपान्तमावृतपार्श्वंयोगिनामचलंहृदयं त्वय्यारूढेहृदि प्रविशातिसति यस्यचभावेनभावलक्षणमितिसप्तमी त्वत्से वायांसत्यांपूर्ववत्सप्तमी लोके जगति सफलजन्माफलमीश्वरप्राप्तिरूपंतेन सहवर्त्ततेजन्मयस्येतिसः कीर्त्तनीयश्च गायनीयस्सन् पूर्णयोगी अमराः देवाः तेषांमध्येकुशलानांपवित्राणां पर्य्याप्तिक्षेमपुण्येकुशलंशिक्षिते त्रिष्वि त्यमरः ॥ प्रेक्षणीयांदर्शनीयामवस्थान्नूनंयास्यति यथापथि क्लान्तस्सन् कश्चित्कामीकामिनीनांकुचकलशे विश्रान्तस्सन् स्वपितितद्वद्भवदपियोगि नांहृदिध्वनिः ॥ १८ ॥

स्थित्वातस्मिन्नवरतमनोवासनास्थेमुहूर्त-
न्प्राणोत्सर्गद्रुतगतिभवत्तत्परम्वर्त्मतीर्णम् ॥

लिप्सांप्राप्स्यस्युपलविषमेमूढजीवेविशीर्णां ।
भक्तिछेदैरिवविरचितां भूतिमङ्गेसुधातुः ॥ १९ ॥

स्थित्वेति ॥ हेमनअनवरतंनित्यं यथातथामनोवासनास्तिष्ठन्ति यत्रानरतमनोवासनास्थं आतोऽनुपसर्गेकः इतिवाहुलकादधिकरणेकः तस्मिन् तत्रतेनयेन विनोदोऽस्तीत्यर्थः ॥ तस्मिन्हृदयेमूहूर्त्तमल्पकालंनतु चिरंस्वकार्य्यविरोधादितिभावः ॥ मुहूर्त्तमल्पकालेस्याद्घटिकाद्वितयेऽपि चेतिशब्दार्णवः ॥ स्थित्वाविश्रम्य प्राणोत्सर्गेणत्यागेनरेचकेनबहिर्निस्सारणेनेत्यर्थः ॥ द्रुतंशीघ्रगतिसत् तत्तस्माद्धृदयस्थानात्परमनन्तरम्वर्त्ममार्गेतीर्णे तीर्य्यतेइतितीर्णमार्गमितिव्युत्पत्यापुनरुक्तिस्तथापि आदिकर्म्मणिक्तः कर्त्तरिचेतिकर्त्तरिक्तः ॥ तरतीतितीर्णमतिक्रान्तंभवत्वं उपलपाषाणवत् विषमेकठोरेमूढजीवेविशीर्णांविसृमराम् ॥ अतिवृद्धिंप्राप्तामिति यावत् एतेन कस्याश्चित्कामुक्याः प्रियतमचरणपातोऽपिध्वन्यते सुधातुः धातरिशोभनत्वंस्वस्मिन्सृष्टिरचनयोगबलेनसामर्थ्यसत्वेऽपि विश्वामित्रादिवत् ॥ तथापिपूर्वतपसापरमात्मानमाराध्यतदिच्छयासृजामीत्यहङ्कारनिवृत्तिरेव ॥ ब्रह्मणः विराजइतियावत् ॥ अंगेशरीरेभक्त्याः अनेकसृष्ट्यादिकर्म्मार्थंकृतविविधोपासनायाः छेदैः भेदैः विरचितांकृतां भूतिमणिमाद्यष्टसिद्धिफलभूतसृष्ट्यादिकर्त्तृरूपामिवार्जुनंप्रतिसर्वविभूतिदर्शनसमये विराट्देहे सर्वमनुष्यादिप्रपञ्चरूपमनेक विधम्भगवतादर्शितमिति प्रसिद्धम् ॥ १९ ॥

लिप्सांभूत्वाऽशुभजनमदैर्वासितांत्यक्तशोभं ।
रुद्धप्राणैः प्रतिहतरयांतांसमादायगच्छेः ॥
अन्तस्सारंद्रुततुलयितुंनानिलः शक्ष्यतित्वां ।
रिक्तस्सर्वोभवतिहिलघुः पूर्णतागौरवाय ॥ २० ॥

हेमनः त्यक्तशोभंसत् रजस्तमोभ्यांविशिष्टस्यालिप्सासत्वात् स्वाभाविकसत्वगुणस्यनिवृत्तिरेवत्यक्तशोभात्वमितिभावः ॥ यथास्वाभाविकसत्यदयादिसत्वगुणधार्म्मिणो ब्राम्हणस्यहिंसादिकरणंसत्यदयादि शोभानिवर्त्तकमितित्यक्तशोभात्वंब्राह्मणेभूत्याः संपदः ऐश्वर्य्यमितियावत् ॥ भूतिर्मातङ्गशृङ्गारेजातौभस्मनिसम्पदीतिविश्वः ॥ अशुभजनस्यामङ्गलयुक्तस्यजनस्य पुण्यकर्म्मण इति भावः ॥ मदैः गर्वैः अहंकारैरित्यर्थः ॥ अर्थेऽप्यामोदवन्मदः त्रिकाण्डशेषः अपिशव्दाद्गर्वगजदानरेतस्सुचेत्यमरः ॥ वासितांभाावितां युक्तामित्यर्थः ॥ रुद्धैः प्राणवायुभिः प्रतिहतरयांनिवृत्तोत्तरोत्तरवेगामित्यर्थः ॥ तांमूढेजीवेविसृमरामित्यर्थः ॥ समादायसम्यकगृहीत्वागच्छेः व्रज अन्तःसारोबलंयस्यतत्वामनिलः प्राणवायुरित्यर्थः सहचारिश्चगम्यतेतुलयितुंनशक्ष्यतिशक्तोनभविष्यतितथाहिरिक्तोऽन्तः सारशून्यः सर्वोऽपिलघुरगुरुः प्रकंप्योभवतीत्यर्थः ॥ पूर्णतासारवत्तागौरवायाकंपत्वायभवतीत्यर्थः ॥ २० ॥

पद्मंगत्वाऽमितदलमितंकेशरैरर्द्धरूढैः ।
आविर्भूतप्रथममुकुलंवासनाश्चानुस्वान्तम् ॥
जग्ध्वाऽनेकेष्वधिकसृमराःसत्वमादायप्रीत्या ।
प्राणास्तेवैगतिरयमुचःसूचयिष्यन्तिमार्गम् ॥ २१ ॥

पद्मामिति ॥ प्राणाः प्राणवायवः अर्द्धरूढैरेकदेशोद्गतैर्बहिर्निसृतैरित्यर्थः ॥ यस्मिन्देशेप्राणसञ्चारस्तद्देशाद्वहिर्निसृतैरितिभावः ॥ केशरैः किंजल्कैरुपलक्षितं इत्थंभूतलक्षणेतृतीयाकिंजल्कः केशरोऽस्त्रियामित्यमरः ॥ आविर्भूताउत्पन्नाः प्रथमाः आद्याः आद्येप्रधानेप्रथमस्त्रिषित्यमरः ॥ मुकुलाः कुड्मलाः कुड्यलोमुकुलोऽस्त्रियामित्यमरः ॥ यस्यतत्तत्राप्राणेसंचारादित्याशयः अमितान्यनेकानिदलानिपर्णानिदलंपर्णछदः पु-

मानित्यमरः ॥ यस्यतत्पद्मंहृदयस्थकमलमित्यर्थः गत्वाप्रविश्यअनेके योगिहृदयेष्वित्यमरः ॥ अधिकाअत्यन्ताः भ्रमराः प्रविष्टावासनाः चेति पादपूर्णार्थः ॥ स्वान्तंस्वान्तंप्रतिइत्यनुस्वान्तंलक्षणेत्थंभूतेतिकर्म्मप्रवचनीयत्वेद्वितीयाजग्ध्वानिवृत्येत्यर्थः ॥ सत्वंगुणमादायगृहीत्वाप्रीत्यामुदागतेः स्यंवेगंमुंचतीतिगतिस्यमुक्तस्यमनसः तेमार्गंसूचयिष्यंति अनुमापयिष्यन्तियत्रयत्रयोगिहृदयस्थंकलमीषद्विकसितन्निवृतवासनाचदृश्यतेतत्रतत्रत्वयानिरुद्धमितिभावः ॥ तदुक्तंहठप्रदीपकायाम ॥ पवनोवध्यतेयेनमनस्तेनैववध्यते इति ॥ २१ ॥

मू० उत्पश्यामिद्रुतमयिसखेमत्प्रियार्थंपिपासोः ।
कालक्षेपंप्रयतनिरुधेमानसे मानसेते ॥
तेषांचित्तेक्षणमपिधृतिंस्वागतीकृत्यपूर्णा-
म्प्रत्युद्यातंकथमपिभवद्गन्तुमाशुव्यवस्येत् ॥ २२ ॥

उत्पश्यामिति ।

हेसखेमनः मत्प्रियार्थंममप्रीत्यैयथातथाद्रुतंक्षिप्रंलघुक्षिप्रमरंद्रुतमित्यमरः ॥ पिपासोः पातुमिच्छोः पातेस्सन्नन्तादुप्रत्ययः प्रयतेनपवित्रत्वेनहेतुनापवित्रः प्रयतः पूतइत्यमरः ॥ निरुध्यते इति निरुधः बाहुलकात्कर्म्मणिकः तस्मिन्निरुधेमानसेमानसे प्रतिमानसमित्यर्थः ॥ वीप्सायां द्विरुक्तिः कालक्षेपंसमयविलम्बंक्षेपोविलम्बेनिन्दायामितिविश्वः ॥ उत्पश्यामि उत्प्रेक्षेविलम्बहेतुंदर्शयन्नाशुगमनंप्रार्थयते तेषांयैर्मनसिनिरुद्धंतेषामित्यर्थः ॥ चित्तेहृदयेक्षणमपिमुहुर्त्तस्यद्वादशभागंकालविशेषोत्सवयोः क्षणइत्यमरः ॥ धृतिंस्थितिंपूर्णमनल्पकालीननिवासादिकंबहुतरमित्यर्थः ॥ मित्रस्यममकार्य्यशीघ्रकरणायेतिभावः ॥ स्वागतीकृत्यस्वा

गतवचनीकृत्यप्रत्युद्यातं प्रत्युद्गतंकृतांतिथ्यमित्यर्थः ॥ भवत्त्वंकथमापिय थाकथञ्चित् आशुगन्तुव्यवस्येत् । उद्युंजीत् ॥ प्रार्थनेलिङ् ॥ शेषेप्र थमइतिप्रथमपुरुषः शेषश्चायंभवच्छब्दोयुष्मदस्मच्छब्दव्यतिरेकात् क्ष णमापिधृतिंपूर्णा स्वागतीकृत्येत्यत्रयोगिनिरोधेन धृतावारोप्यमाणस्यस्वा गतवचनस्य प्रकृतप्रत्युद्गमनयोगात् परिणामालङ्कारः तदुक्तमलङ्कारस र्वस्वे आरोप्यमाणस्यप्रकृतोपयिगित्वेपरिणाम इति ॥ २२ ॥

मू० सिद्ध्यष्टाभिः रचितवृतयः प्राणरोहावरोहैः ।
नीडारम्भैः गृहबलिभुजांमाकुलादेहरोहाः ॥
त्वय्यासन्नेपरिणतशुभाः केचिदासन्नवाञ्छाः ।
संपत्स्यन्तेकतिपयदिवस्सिद्धिमन्तोदशार्णाः ॥ २३ ॥

हेमनः त्वय्यासन्नेसन्निकृष्टेसतिदशार्णाः दशार्णदेशभवाः भवार्थश्चा णास्तद्राजलुकितदेशीयनिवासियोगिनइत्यर्थः॥प्राणस्यवायोः रोहावरोहैः पूरकरेचकैरित्यर्थः ॥ तथागृहेदेहेयेबलिभुजः लोभादयः तेषांनी डारम्भैः कुलाय निर्म्माणैः ॥ अर्थात् ॥ लोभादिकरणैरेवस्थाननिर्म्माणै रित्यर्थः ॥ इष्टकादिभिर्मंदिरंयथा ॥ लोभादयः एवात्युन्नतगृहवदुत्तरोत्तरं बहुवृद्धाः इतिभावः कुलायोनीडमास्त्रियामित्यमरः ॥ आकुलानिसंकी र्णानिदेहरोहाणिरोमाणि तनुरुहंरोमलोमेत्यमरः ॥ येषांतेकेचित् अष्टा भिः सिद्धिभिः रचितवृतयः प्राकाराः येषांतेसाकांक्षत्वेऽपिगमकत्वात्स मासः नित्यसाकांक्षत्वादितिभावः ॥ प्राकारोवरणस्सालः प्राचीरंप्रान्त तोवृतिरित्यमरः ॥ तथापरिणतानिपक्वानिशुभानिशुभकर्म्मफलानीत्य र्थः ॥ येषांतेपरिणतशुभाः अतएवासन्नाः निकटासमीपेनिकटासन्नेत्य मरः ॥ वाञ्छाः मनोरथाः येषांते आसन्नवाञ्छाः कतिपयदिवः कति

चिद्दिवसेषुनतुबहुकालेनात्युग्रपुण्यत्वादितिभावः॥ सिद्धिमन्तः अष्टसिद्धिमन्तइत्यर्थः॥ यावन्मनोरथाविष्टास्तावत्सिद्धिमन्तोनिवृत्तवासनास्तुकैवल्यम्प्राप्ताः इतिभावः॥ सम्पत्स्यन्तेभविष्यन्ति॥ २३॥

मू० तेषांलोकेप्रथितवपुरित्युत्तमांराजधानीं।
गत्वासद्यः फलमविकलंवासनायाश्चलब्धा॥
तीरोपान्तध्वनितसुषमं प्राप्स्यसिस्वादुयस्मात्।
हर्षप्रेमादिकमिवरवंवासनाशैवलिन्याः॥ २४॥

तेषामिति॥

लोकेस्वर्गादौलोकस्तुभुवनेजने इत्यमरः॥ प्रथितंविख्यातंप्रतीतमितियावत् प्रतीतेप्रथितख्यातवित्तविख्यातविश्रुताइत्यमरः॥ वपुः शरीरं गात्रंवपुः संहननशरीरंवर्ष्मविग्रहः इत्यमरः॥ तेषांयोगिनांसम्बन्धिनीं उत्तमां उत्कृष्टां राज्यंतेप्रकाश्यंते इतिविषयाः रूपादयः यैस्तेराजानः चक्षुरादीन्द्रियाणितानिधीयन्तेपीयन्तेस्वस्वविषयान्विषयिणः क्रियंतेयस्यांसाराजधानी (कालाधिकरणयोश्चेतिल्युट्) कृद्योगलक्षणाषष्ठी समस्यते इतिवक्तव्यत्वात्समासः तांराजधानींप्रधानंवपुरित्यर्थः॥ योगिनएवैकत्रास्थित्वा अस्मिन्स्वशरीरेसर्वदूरदेशीयविषयान्भुङ्क्तेराजवदतः प्रधानत्वंतेषांवपुषः इतिभावः॥ प्रधाननगरींराज्ञांराजधानीतिकथ्यतेइति शब्दार्णवे गत्वा प्राप्यसद्यः वासनायाः भावनाख्यसंस्कारस्यपूर्वोपार्जितकर्म्मानुकूलमनश्चिन्तितस्येत्यर्थः॥ अविकलंसमग्रंफलं प्रयोजनंलब्धालप्स्यतेत्वयेतिशेषः कर्म्मणिलुट्॥ कुतः यस्मात्कारणात् स्वादुप्रियंस्वादुप्रियौतुमधुरावित्यमरः॥ रवमनाहतशब्दामित्यर्थः॥ हर्षः प्रीतिः मुत्प्रीतिप्रमदोहर्षः इत्यमरः॥ प्रेमास्नेहः मनउल्लासपूर्वकान्यस्मिन्स्वव्यापारदर्शन

स्नेहः मनउल्लासइत्यर्थः ॥ प्रेमानाप्रियताहार्दम्प्रेमस्नेह इत्यमरः ॥ आदिपदेनभक्ष्येपेयपदार्थः ( कंसुखंकंशिरो जलमाख्यातंकंसुखेपरिकीर्त्तितम् ) इत्येकाक्षरकोशः ॥ तामिववासनैवशैवलिनीनदीसरित् नदीतरङ्गिनीशैवलिनीत्यमरः ॥ तस्याः तीरस्यवासनायाः हृदयवर्त्तित्वात् हृदयएवतस्याः तीरमित्यर्थः ॥ तस्यहृदयस्येत्यर्थः ॥ उपान्ते हृदयस्य प्रान्ते यत् ध्वानितं शब्दितंस्वानितंध्वनितंसमे इत्यमरः ॥ तेनसुषमंसुन्दरं सुन्दरंरुचिरं चारुसुषमंसाधुशोभनमित्यमरः ॥ यथातथाप्राप्स्यसिश्रोष्यसीत्यर्थः ॥ पिवतेर्लृट् ॥ २४ ॥

मू० नाभिस्थानंमनरधिवसेस्तत्रविश्रामहेतो-

स्त्वत्संपर्कात्पुलकितामिवाम्भोजपुष्पैरुपस्थैः ॥

यत्षट्चक्रभ्रमपरिमलोद्गारिभिर्योगिनांच

उद्दामानिप्रथयतिशिराभिःरुचायौवनानि ॥ २५ ॥

नाभीति ।

हेमनः तत्रयोगिशरीरेविश्रामः खेदापनयः भावेघञ् तस्यहेतोर्विश्रामार्थमित्यर्थः ॥ षष्टीहेतुप्रयोगेइतिषष्टी उपसमीपेतिष्ठन्तीतिस्थः कचेति कर्त्तरिकः । उपस्थाः तैः अम्भोजपुष्पैः नाभिचक्रस्थकमलैरित्यर्थः अनेकयोग्यभिप्रायेणबहुत्वम् अम्भोजस्यकमलत्वेऽपिविशिष्टोपादानं मुकुलितनिवृत्यर्थंतेषांसौगन्ध्येनसुष्टुखेदापनयः सूचितः नाभिचक्रकमलानांमांसपिण्डत्वात् पुष्पवत्तेषुसौगंध्यंनास्ति तथापि अनेकौषधनिषेवणरसेनयुक्तत्वात् सौगंध्यंत्वत्संपर्कात्तवसङ्गात्पुलकाअस्यजाताः पुलकितमिवसञ्जातपुलकितमिवस्थितम् ॥ तारकादित्वादितच्प्रत्ययः नाभिस्थानमधिवसेः स्थिरोभवेत्यर्थः॥ उपान्वध्याङ्वसइतिकर्म्मत्वम् यन्नाभिस्थानंषट्चक्राणां

मूलाधारादिस्थानस्थितानांयोगशास्त्रप्रसिद्धानां विस्तारभयान्नात्रलिखितं योभ्रमःजलस्येवावर्तः तेन आवर्त्तेत् उद्गिरंति अविष्कुर्वन्तीति उद्गारयः (अचःइइत्यनेननिवृत्तप्रेषणण्यन्तात् गृधातोः इन्प्रत्ययः) तैः परिमलंपरिमलोगंधविशेषः ।। विमर्दोत्थेपरिमलोगंधेजनमनोहरे इत्यमरः ।। उद्गारिभिः परिमलोद्गारिभिः द्वितीयेतियोगविभागात्समासः षट् चक्राणांभ्रमः जलस्येवावर्त्तः षट्चक्रभ्रमः तेनपरिमलोद्गारिभिः षट्चक्रभ्रमपरिमलोद्गारिभिः शिराभिः नाडीभिः नाडीतुधमनीशिरा इत्यमरः ॥ योगिनां चेति चकारेणतेषांरुचाकान्त्याघोद्दामान्युत्कटानियौवनानिप्रथयति प्रकटयतिउत्कटयौवनाः गृहादिकंपरित्यज्ययोगमार्गेऽनुरक्ताः योगाभिलाषिणः संसारेविवाहादिबन्धनकारकपित्रादिभयात् कंचनविविक्तदेशमाश्रित्यधौतिवस्तीत्यादिषट्कर्म्माणिकुर्वन्तीतिप्रसिद्धम् ॥ २५ ॥

मू० विश्रान्तंसत्वजद्दढमनोजन्मभावानियानि ।
आर्द्रत्वानांशुभमतिमयत्वासनाजालकानि ॥
देहस्वेदोपनिसृतजलैः सच्छरीरार्द्रितानां ।
अन्तस्थित्वाक्षणपरिचितःप्राणरोधस्थितानाम् ॥ २६ ॥

विश्रांत इति ।

विश्रान्तं सत् तत्रनाभिस्थानेविनीताध्वश्रमं सत् आर्द्रत्वानांआर्द्रहृदयानांयोगिनांहृदये इति शेषः ।। यानिवासनायाः पूर्वोपार्ज्जितकर्म्मानुकूलमनश्चितनस्यजालकानियेषांतानिजालमेवेति जालकानि (स्वार्थेकः) नसामिवचने इतिनिषेधश्चान्यन्तस्वार्थिकमपिकनंज्ञापयतीतिकौमुदीजन्यभावानिजन्यानि उत्पद्यमानानि भावानिमनोविकाराणिविकारोमानसोभाव इत्यमरः ।। शुभमतिमयत् अतिशुभंकुर्वन्सत् तथादेहे स्वेदोयः

उपनिसृतः स्वेदोपानिसृतः मयूरव्यंसकादेराकृतिगणत्वात्समासेउपनिसृतइत्यस्यपरानिपातः मयूरव्यंसकइतिवत् उत्पन्नोयस्स्वेदइत्यर्थः तस्यजलैः राहोः शिरइतिवत्षष्ठीसम्बन्धश्चभेद्यभेदकः षष्टीतिसमासः ॥ अथ स्वेदोपनिसृतानियानिजलानीतिकर्म्मधारयः ॥ तैः शोभनानिशरीराणि आर्द्रितानियेषामितिबहुव्रीहौवाहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्यपरनिपातः यद्वाशब्दस्य जातिवाचकत्वात् (जातिकालसुखादिभ्यः परानिष्ठा वाच्यइतिवार्तिकेनतस्यपरनिपातः) सच्छरीरार्द्रितानांप्राणस्यरोधनरोधः (भावेघञ्) तस्मिन् तत्रस्थितानांबहुपद्मासनस्थानामित्यर्थः ॥ उक्तं हठप्र० ॥ बद्धपद्मासनोयोगीप्राणंचन्द्रेणपूरयेत् धारयित्वायथाशक्तिः भूयःसूर्य्येणरेचयेत् इतियेनत्यजेत्तेनपीत्वाधारयेदतिरोधतः रेचयेच्चततोऽन्येनशनैरेवनवेगतः अतिरोधतः अतिशयितेनरोधेनस्वेदकम्पादिजननपर्य्यन्तेनेत्यर्थः ॥ अन्तःहृदयेस्थित्वाक्षणंमुहूर्त्तद्वादशभागंकालविशेषोत्सवयोः क्षणमित्यमरः ॥ परिचयं क्षणपरिचयं अत्यन्तसंयोगेचेतिसमासः संसृष्टं सत् नतुचिरंव्रजगच्छ विश्रामत्वेनालसत्वातुमुहूर्त्तमात्रपरिचयेनाधिकसजातीयगुणत्वाच्चगमनेसंदेह एवस्यादितिभावः ॥ २६ ॥

मू० वक्रः पन्थायदपिभवतः प्रस्थितस्योतराशां ।
आज्ञाचक्रे प्रणयविमुखोमास्मभूः श्रीगुरूणाम् ॥
विद्युद्दामस्फुरितसुषमैर्जम्बुपुर्य्यांस्थितानां ।
प्राणोल्लोलैर्यदिनरमसेसारसैर्वंचितोऽसि ॥ २७ ॥

वक्रइति ।

उत्तराशामुदीचींदिशंप्रस्थितस्यभवतः पन्थाः जम्बुपुरीमार्गः वक्रो यदपिदूरोयद्यपीत्यर्थः ॥ वैष्णवीदेव्याः त्रिकूटपर्वतात्पूर्वदिशिरामवनसंज्ञकस्थानस्याधः प्रवाहिन्याश्चन्द्रभागायाः कियदपिदूरेदक्षिणभागेवर्त्त

मानाजम्बूनगरी उत्तरपथस्तुचन्द्रभागायाः उत्तरेमंगलास्थानंतुचन्द्रभागायाः पश्चिममितिवक्तव्यम् ॥ तथापिजम्बुश्चासौपुरीजम्बुपुरी ॥ अन्दूदृन्भूजम्बूकफेलुकर्कन्धुदिधिष्वित्यौणादिकसूत्रेण जनधातोः कुप्रत्ययः वुगागमश्चनिपात्यते बाहुलकाद्ह्रस्वोपिजम्बुशब्दः जायन्ते उत्पद्यतेजम्बुफलानिपत्रेतिजम्बुः ॥ जम्बुनगरेबहूनिमिष्टानिचजम्बुफलानिसंतीति प्रसिद्धम् ॥ फलेजम्वाः जम्बूस्त्रीजम्बुजाम्बवमित्यमरः ॥ किम्वाजम्बुशब्दस्यतत्रस्थराज्ञः राजधानौरूढित्वाज्जम्बुइतिनगरस्यसंज्ञाकिम्वाजायंतेउत्पद्यंतेऽनेकशिल्पाद्युपजीविनोयत्रेतिजंबुः सचासौइतिपूर्ववत् ॥ किंवा जन अदने धातोः अन्दूदृन्भूरितिसूत्रेणकर्मणिकूप्रत्ययेबाहुलकाद्ह्रस्वेवुगागमेचजन्यंतेअद्यन्ते जम्बवः जम्बुफलानितेषांपुरीजम्बुपुरीपत्तनम् स्थानमित्यर्थः ॥ यद्यपिवृक्षसमुदायो वनंनतुनगरी इतिप्रसिद्धम् ॥ तदुक्तम् ॥ यत्रानेकशिल्पिनोऽनेकवणिजादिव्यवहारस्तत्पुरादिसंज्ञम् ॥ तथापितत्रानेकशिल्पिन आदिसर्वेजम्बूनामप्यतिशयित्वात् उक्तपुरसंज्ञा तस्यांस्थितानांनिवसतामित्यर्थः ॥ ममगुरोरभिजनस्थानात् जम्बूनगराधीशेन श्रीमहाराजरणबीरसिंहपुत्रकेनमहाराजगुलाबसिंहनाम्ना ममगुरोर्विद्ययासौजन्येनमहर्षिगुणत्वेनचवशीभूतेनात्यन्त प्रतिष्ठासंपादनकर्त्रा आनीयजम्बूनगरेनिवासितानां श्रीगुरूणां श्रीगोकुलचन्द्राणामित्यभिप्रायः आत्मनामगुरोर्नामेतिस्मृत्याविरोधेनामानङ्गीकारः वहुत्वंपुत्रपौत्राभिप्रायेणगुरुवद्गुरुपुत्रेषु इतिवचनात् गुरुपुत्रेष्वपिगुरुत्वम् ॥ किंचैकवचनंनदातव्यंगुरावात्मनिचेश्वरेइतिस्मृत्यनुरोधाच्च आज्ञाचक्रेप्रणयः परिचयः अभ्यासइतियावत् ॥ प्रणयस्स्यात्परिचयेयात्रायांसौहृदेपिचेतियादवः तस्यविमुखोमास्मभूः नभवेत्यर्थः ॥ स्मोत्तरेलङ्चेतिचकारेणाशीरर्थेलुङ् नमाङ्योगेइत्यडागमनिषेधः विद्युत्वत् ॥ उद्दा उत्कृष्टास्फुरितदेदीप्यमानासुषमापरमशोभायेषांतेसुषमापरमाशोभा आभाकांतिद्युतिछविरित्य

मरः ॥ प्राणेनवायुनाउह्लोलैः चपलैः सारसैः कमलैः सहस्रपत्रंकमलं शतपत्रंकुशेशयं ॥ पङ्केरुहंतामरसंसारसंसरसीरुहमित्यमरः ॥ नरमसेयदि तर्हित्वंवञ्चितोऽसिप्रतारितोसिजन्मवैफल्यंभवेदित्यर्थः ॥ २७ ॥

मू० कामाद्युर्म्याक्षुभितहृदयध्वानकांचीगुणायाः ।
संसर्पन्त्यास्स्वलितसुषमंदर्शिताचक्रनाभेः ॥
लिप्सामद्याः पथिभवरसाभ्यन्तरंसन्निपत्य ।
स्त्रीणामाद्यंप्रणयवचनंविभ्रमोहिप्रियेषु ॥ २८ ॥

कामादीति ।

हेसखेपथि आज्ञाचक्रेमार्गेकामादीनां आदिपदेनलोभादयोगृह्यन्ते ऊर्म्यातरङ्गेन भगस्तरंग ऊर्मिर्वास्त्रियामित्यमरः ॥ क्षुभितेस्थिरेहृदयमेनसिध्वानः शब्दः शब्देनिनाद निनदध्वनिध्वानरवस्वनइत्यमरः ॥ सएवकाञ्चिमेखला स्त्रीकट्यांमेखलाकाञ्चीसप्तकीरशनातथेत्यमरः ॥ ह्रस्वान्तोऽपिकाञ्चिशब्दः एकयष्टिर्भवेत्कांचीमेखलात्वष्टयष्टिका रशनाषोडश ज्ञेयाकलापः पंचविंशकः इतिगुणोयस्यास्तस्याः स्खलितेनस्खलनेनेतस्तत श्चलनेनेत्यर्थः ॥ वासनायाः विषयस्यानंतत्वात् एकविषयाद्वितीयतृतीयादिविषयेषुगमनमेवपतनमिति भावः ॥ सुषमंसुन्दरं सुन्दरंरुचिरंचारुसुषमंसाधुशोभनमित्यमरः ॥ समंसर्वमस्यसुषमं ॥ सुविनिर्दुर्भ्य इति समः ॥ सस्यषत्वंयथातथासंसर्पन्त्याः प्रवहन्त्याः प्रवहनंचोत्तरोत्तरविषयेषुगमनंतथादर्शितानियानि आ अल्पानि आ इतीषदर्थे आप्रगृह्यः स्मृतौवाक्येऽप्यास्तुस्यात्कोपपीडयोः पापकुत्सेषदर्थेइत्यमरः । चक्राणिहृदयादिस्थानस्थितान्याज्ञाचक्रादीनितानिनाभिर्यस्यास्तस्याः लिप्सावाञ्छा तदेवनदी तस्याः नद्याः सान्निपत्यसंगत्यरसः रागः प्रीतिरितियावत् ॥

रसोगन्धरसेजले शृङ्गारादौविषेवीर्येतिक्तादौद्रवरागयोरितिमेदिनी ॥ किंवारसः आस्वादः शृङ्गारादौजलेवीर्य्ये सवर्णेविषशुक्रयोः ॥ आस्वादे च रसंप्राहुरितिशब्दार्णवः अभ्यंतरेयस्यतत् अन्तरङ्गोभव सर्वथातस्याः रसमनुभवेत्यर्थः ॥ ननुतत्प्रार्थनामन्तरेणकथंतथातत्रानुभवोयुज्यते इत्य तआह स्त्रीणांप्रियेषुविभ्रमःविलासः सएवाद्यंप्रणयवचनंप्रार्थनावाक्यंहि स्त्रीणामेषस्वभावोयद्विलासैरेवरागप्रकाशनंनतुकण्ठतः इतिविश्रमश्चात्रना भिस्सन्दर्शनादिरूपएव ॥ २८ ॥

मू० पूर्वम्मध्येभवतिनगरंनामयन्मीरपूर्मे ।
भुक्त्वातिथ्यंस्वरुचिविषयंयत्रपित्रादिहर्म्येम् ॥
गत्वातस्मिन्रुचिरभवनंकीर्त्तिस्तम्भेवशोभि- ।
लक्ष्मीशेचप्रतिदिनरतेर्बोधराजस्ययस्य ॥ २९ ॥

पूर्वम्मध्येइति ॥

जम्बूनगरस्थ श्रीगुरोर्गोकुलचन्द्रस्यस्थानदर्शनार्थङ्गन्तुमिच्छोः मङ्ग लादेवीस्थानात्तस्यबहुदूरवार्त्तित्वात् ॥ विश्रामार्थमथचममपित्राद्यभिजन स्थानत्वादितिपूर्वमीरपुर्नगरमेवगंतव्यमित्याह ॥ पूर्वमध्येइति देवीस्थाना द्गमनानंतरंपूर्वम्प्रथमतः मध्येमङ्गलादेवीस्थानजंबूनगरेत्युभयोर्म्मध्येयन्ना मप्रसिद्धंमीरपुरनगरंयत्रयस्मिन्नगरेमेममपित्रादि पितृपितामहादिहर्म्यंगृ हंभवतितस्मिन्नगरेगत्वा स्वरुचिविषयंममात्यंतप्रीतीकरौपितरौतत्रनःस्वः यावत्यन्तप्रीत्यानेकपदार्थम्भोजयिष्यतः त्वांममसंदेशहारकमिति किन्तु यथाप्राप्तंस्वरुचिविषयंकुरु किञ्च यदिकश्चिदन्योममप्रीत्याआतिथ्यंभो जयेत्तदास्वरुचिकरमेव भोज्यंनतुयथायथालाभंज्वरादिभयादितिभावः॥ विलम्बोनभवेदितिध्वनिः अतिथिंदूराच्चोपागतं श्रान्तं वैश्वदेवउपस्थि

तम् ॥ अतिथिंतंविजानीयाञ्चातिथिः पूर्वमागतः (इतिव्यासः) आगन्तु रतिथिर्नागृहागते इत्यमरः ॥ तस्मैहितंभोजनादितद्भुक्त्वाच पुनरर्थेत स्मिन्नगरेलक्ष्मीशेश्रीविष्णौदिनंदिनंप्रति इति प्रतिदिनंलक्षणेत्थंभूतेति प्रतीत्यस्यकर्म्मप्रवचनीयत्वाद्द्वितीया अव्ययंविभक्तीतियोगविभागात्स मासः ॥ अव्ययीभावपूर्वस्यसप्तमीतत्पुरुषेप्रतिदिनेरतिः प्रतिदिनरतिः तस्यप्रीतीवतोबोधराजस्यबुध्यते मन्यते धर्म्माधर्म्मकार्य्याकार्य्यमिति बोधः ॥ पचाद्यच्कर्त्तरि ॥ राजते प्रकाशते । इति राजातस्यषष्ठीतत्पुरु षः । बोधराजः तस्यकीर्त्याः यशसः स्तम्भव वइतिइवार्थकः वइवेत्यर्थः मणिवोष्ट्रस्येतिवत् व वा यथा तथैवैवं साम्ये इत्यमरः केवलंवशब्दोयथा शात्रवं व वपुर्यशः । शोभते इति शोभिरुचिरंसुन्दरंसुंदरंरुचिरंचारु इत्यमरः ॥ भवनमस्ति अस्तीतिशेषः ॥ २९ ॥

मू० पिंड्यांपुर्य्यांभवतिसुयशोमूर्त्तिमद्दृश्यतेच ।
प्रासादः स्वर्गविदितइतोलक्ष्मिनारायणस्य ॥
वित्तेनास्यप्रकृतिसुभगोपुत्रभार्य्यादियुक्तः ।
वृत्तेस्सौख्येनवसतिसदातस्यपुर्य्यांपितामे ॥ ३० ॥

पूर्वस्यैवप्रपंचः

यस्येतिपूर्वश्लोकस्थंपदंयस्यबोधराजस्यापिंड्यांपुर्य्यांरावलपिण्डीसंज्ञ कपुरिलक्ष्मीनारायणस्यस्वर्गेदेवलोकेविदितंप्रसिद्धं प्रासादः देवमन्दिरः प्रासादोदेवभूभुजामित्यमरः ॥ भवति चेति समुच्चयार्थकः चपुनः तस्य शोभनंयशः ॥ एवमूर्त्तिमद्दृश्यते इतः अस्मात्स्थानादिदंशब्दस्यबुद्धि स्थपरामर्शकत्वात् ॥ यत्रकुत्रनिवसतोममयस्यदर्शनार्थम्बुद्धिरुत्पद्यते त स्मादित्यर्थः ॥ अस्यबोधराजप्रबंधरचनसमये स्वर्गवासिनोऽपितस्यार्धा

ङ्गरूप भोलादेव्याः तद्धर्म्मपालिकायाः स्त्रियाः अवशिष्टयशरूपत्वात् ॥ इदमः प्रयोगः अर्द्धाङ्गंपुरुषस्यस्त्रीवेदवादइतिश्रुतः ॥ इतीतिहाससमुच्चये बोधराजस्यावित्तनप्रकृत्यास्वभावेनसुभगोऽकुटलः पुत्रभार्य्यादियुक्तः वृत्तेराजीवनस्य आजीवोजीविकावार्त्तावृत्तिर्वर्त्तनजीवने इत्यमरः ॥ सौख्येनसुखेनतस्यपुर्य्यांबोधराजनिवासनगरेनतुतेनरचितायामित्यर्थः ॥मे पितासदानित्यंवसतितन्नगरेतवपित्रोस्तवापिच स्थितिर्नास्तिनकस्याचिद्देवतास्थानामितितेनमार्गेणाकिंप्रयोजनम् ॥ पिण्ड्यस्माकन्निवासस्थानंनत्वभिजनदेश इत्यनेनसूचितम् ॥ ३० ॥

युगलम्

मू० स्थित्वास्वान्तेपरमपुरुषेमामकानाञ्चमैनौ ।
दृष्ट्वातंवैममगुरुपुरींराजधानींतुजम्बाम् ॥
पश्चाद्याताध्वनिरुचिकरैर्नीलकण्ठैर्द्रुमैश्च ।
उद्यानैर्नीपकुमुदबकुलैश्शोभितामब्जकुन्दैः ॥३१॥

किंचनकेवलमभिजननगरं किंतुसिद्धानामपिनिवासस्थानमित्याह चतुर्थपादेनावशिष्टपादैरुत्तर श्लोकार्द्धेनचागामिनीं नगरीम्विशिनष्टि ॥ स्थित्वेति तत्रमीरपुरनगरेपरमपुरुषेशतवर्षायुष्य जगरवृत्तौऋषभवामदेववत् ॥ लोकवर्त्तिनिमौनौमौनिनाम्निसिद्धे चपुनःमामकानांमत्संबन्धिनांस्वान्तेहृदयेस्थित्वावैनिश्चयेनपुनर्वैवेत्यवधारणवाचकाः ॥ इत्यमरः । तंमीरपुरनगरं दृष्ट्वापश्चात्तदनंतरं ध्वनिनारुचिकरैः सुन्दरैर्नीलकण्ठैर्मयूरैः ॥ मयूरोबर्हिणोबर्हीनीलकण्ठोभुजङ्गभुक् ॥ इत्यमरः ॥ तथाद्रुमैर्वृक्षविशेषैर्नीपाः कदम्बाः नीपप्रियकदम्बास्त्वित्यमरः ॥ कुमुदाः श्वेतोत्पलानिसितेकुमुदकैरवे इत्यमरः ॥ बकुलाः केसराः केसरेबकुला इत्यमरः ॥ तेयेषुनीपकुमुदबकुलेषुतैःअब्जकुन्दानिकमलमाध्यानियेषुतैरब्जकु

न्दैः उद्यानैराक्रीडैः राज्ञीनामेवक्रीडायामुचितवनैरित्यर्थः ॥ पुमानाक्रीडमुद्यानमित्यर्थः ॥ ३१ ॥

मू० अङ्घ्र्यब्जैश्श्रीगुरुगिरिशकानांतथाराम
विष्णवोः ब्रूमोनामान्यनिशयशसाम् ॥
स्वस्यपित्रादिकानांपूर्वश्राव्यंममवर
पितुः प्रान्तनन्दादिबाला ॥ ३२ ॥

अङ्घ्र्यब्जैरिति ॥

अस्यादिचतुर्थपादस्यपूर्वश्लोकेऽन्वयः ॥ श्रीगुरुगिरिशकानांलक्ष्मीष्टदेवमंत्रोपदेशकमहादेवब्रह्मणां सर्वजगदुत्पादकत्वेनाश्रियोऽभ्यर्हितत्वात्तस्यपूर्वनिपातः अनेकप्राप्तावेकत्रनियमश्शेषेऽनियमइति वचनादन्यत्रानियमः ॥ रामविष्णवोः श्रीरामचन्द्रनारायणयोश्च ॥ घिसंज्ञकत्वादभ्यर्हितत्वाद्विष्णुशब्दस्यपूर्वनिपातताप्राप्तेऽप्यत्रानुकंपार्थका आपूर्वकरामशब्देनमर्यादापुरुषोत्तम श्रीरामचन्द्रस्यग्रहणं नतुबलदेवपरशुरामयोः तयोः शूरवीरधर्म्मवत्वात् ॥ विष्णुसाहचर्य्यात्परशुरामस्यापिग्रहणंनभवेदिति आपूर्वकोपादानम् ॥ विष्णोश्चतुर्युगधर्म्मसाधारणतयापालकत्वात्तदपेक्षयात्रेतायुगकालिक धर्म्मविशेषस्यपालकत्वादुक्तधर्म्मवत्वाच्च श्रीरामचन्द्रस्याभ्यर्हितत्वमिति ॥ किंचद्यन्तादजाद्यदन्तं पूर्वविप्रतिषेधेनेतिवचनेन आरामशब्दस्यैवपूर्वनिपातः नतुद्यन्तस्यविष्णुशब्दस्य ॥ आ प्रगृह्यः स्मृतौवाक्येऽनुकम्पायांसमुच्चये इतिमेदिनी ॥ अङ्घ्र्यब्जैश्चरणकमलैः शोभितां ममभगवद्दत्तस्यगुरोः श्रीगोकुलचन्द्रसुत श्रीगंगाधरस्यपुरींनिवासाश्रयंराजधानीं श्रीमहाराज श्रीप्रतापसिंहाधिष्ठितां जम्बांजम्बुसंज्ञकनगरंयातात्संभवदितिशेषः ॥ यास्यसीत्यर्थः ॥ यातेः कर्तरिलुट् ॥ ३२ ॥

मू० सूनुर्यस्यास्मिविदितविदुषः काशितोयेनलब्धं।
सद्भिर्दत्तंविनुतिसुदलंबालशास्त्र्यादिभिश्च॥
विद्याख्यातोविपुलयशसायेनतात्याङ्कितेन।
पौत्रोयस्याहमितिगणपतेः तस्यतातः कुलादिः॥३३॥

सूनुर्यस्येति॥

तत्रनगरेगत्वाभवतिपित्रादि नामानभिज्ञत्वात्कस्यगृहेगन्तव्यमित्यतः पित्रादिनामनिर्वाक्तिसार्द्धद्विश्लोकेनेत्याह॥ ब्रूमइत्यादिना अनिशन्नित्यं संततविरतानिशान्नित्यानवरताजस्रमित्यमरः॥ यशोवतांस्वस्यभगवद्दत्तस्यममेत्यर्थः॥ पितृपितामहादीनांनामानिब्रूमोब्रवीमिकथयामीत्यर्थः॥ वहुत्वंब्रूमइति अस्मदोद्वयोश्चेति॥ एकत्वेविवक्षितेवापूर्वमादौमम भगवद्दत्तस्यवरदातृपितावरपितामध्यमपदलोपीसमासः तस्यश्राव्यंश्रोतव्यंनामेतिशेषः तपोभिरिष्यतेयस्तुदेवेभ्यः सवरोमतकिञ्चवराऽभीप्सितंपुत्रेभ्योददातिपितेतिपितरिवरदातृत्वमितिभावः॥ प्रान्तनन्दादिबालाप्रान्ते अन्तिमभागेनन्दइति॥ शब्दश्चोत्तरश्लोकस्थोऽन्वितः प्रान्तशब्दोऽन्तिमभागार्थकः दृश्यते लोकोयथाबलीकनीध्रेपटलप्रान्तेआदौपूर्वेनन्द शब्द इतिबालानन्दइतिनामविदितः प्रसिद्धोयोविद्वान् तस्यविदुषः यस्य बालानन्दस्यसूनुः पुत्रोऽस्मि आत्मजस्तनयस्सुनुः सुतः पुत्रः॥ इत्यमरः॥ येनममपित्राबालानन्देनसद्भिः श्रेष्ठैः अग्निहोत्रसोमयागकर्तृभिः श्रीमद्बालशास्त्रिभिः चेत्यनुक्तसमुच्चार्थकः श्रीमत्तात्याशास्त्रिप्रभृतिभिश्च दत्तंविनुतिविशेषेणनुतिः स्तुतिर्यत्रममपितुरितिशेषः॥ शोभनंदलंसुदलं पत्रं पत्रंपलाशछदनंदलंपर्णमित्यमरः॥ काशितोवाराणस्यां लब्धंप्राप्तं अन्येभ्योऽपिदृश्यते इतिसप्तम्यर्थेतसिल्प्राप्तामितिभूतेक्तः तात्याङ्कितेन

श्रीमत्तात्याशास्त्रिणाकरचिन्हितेनतद्धस्तलिखितेनेत्यर्थः ॥ येनपत्रेण ॥ विपुलेनबृहताविशंकटं पृथुबृहत्विशालंपृथुलंमहत्वद्रोरुविपुलमित्यमरः॥ यशसाविद्या ख्याताविख्यातायस्यसः ॥ विद्याख्यातः अस्तीतिशेषः ॥ यस्यममपितृपितुर्गणपतेर्नाम्नोऽहंभगवद्दत्तः पौत्रः तस्यपितामहस्यगण पतेः तातः जनकः तातस्तुजनकः पितेत्यमरः ॥ सर्वेगुणाः काञ्चनमाश्र यन्ति सर्वेपादाहस्तिपादे निमग्ना इतिन्यायाभ्यां गणपतित्वेनैवसर्वगुणा श्रयत्व प्रसिद्धत्वेनगुणानामानत्वाकेषां वर्णनंस्यान्नस्यात्केशांचिच्चसर्वेषां वर्णने ग्रन्थविस्तारः स्यादित्येव योगेऽपि सामर्थ्याभावान्नकृतंवर्णनम् ॥ यदिस्थालिपुलाकन्यायेन कस्यचिदत्युत्कर्ष विशिष्टगुणवर्णनेन सर्वेषां ग्रहइतिचेत्तदा पितृपितामहयो गुणवर्णनेतयोर्मध्यगतत्वात्तद्गुणग्रहस्तद्धदेवे नह्यत्युत्तम पुण्यवतां सन्ततिरगुणा अनुत्तमाच मिष्टाम्रवृक्षाणां फलान्या म्राण्येव मिष्टान्येवेति ॥ कुलादिः कुलशब्दादिः ॥ ३३ ॥

मू० जस्तान्तोऽसौभुवनविदितोवेदपाठीत्युपाधिः ।
काश्यांयोवैत्रिदशशरदोवेदशब्दादिशास्त्रम् ॥
काण्डेकर्म्मण्यतिनिपुणतायस्याताविदेशे ।
अस्तयध्यैष्ठस्वपचिबुभुजेअश्मशानान्तकालम् ॥ ३४ ॥

जस्सान्तइति ॥

योभुवनेलोके लोकस्तुभुवनेइतिमेदिनीलोकोविष्टपंभुवनंजगादित्यमर श्चविदितः प्रसिद्धः ॥ विद्यते इतिविदितः ॥ मतिबुद्धिपूजार्थेभ्यश्चेतिक र्म्मणिक्तः ॥ त्रिदशशरदः समाः वर्षाणीत्यर्थः ॥ हायनोऽस्त्रीशरत्समा इत्यमरः ॥ वेदव्याकरणन्यायप्रभृतिशास्त्रंकाश्यामध्यैष्टापाठीत् ॥ यस्य कुलजस्सस्यकर्म्मणिकांडेमीमांसायांनिपुणता विदेशेविप्रकृष्टेदूरदेशेइतिया

वत् ॥ ख्याताप्रथिता अस्तिनतुस्वस्मिन्नेवदेशेगृहेचकिन्तुविदेशेऽपि इति भावोऽसौममप्रपितामहइत्यर्थः ॥ आश्मशानान्तकालंमरणान्तमभिव्या प्यस्वपचिस्वादिपचधातोः सर्वधातुभ्यः इन्निति इनिः तस्मात्तृतीयैकवचन टाकृतेस्वपचिशब्दस्य गृह्यादि प्रसिद्धत्वाद्वैदिकत्वेन "सुपासुलुगिति:" प्रत्ययस्य लुकि उक्तप्रयोगस्साधुः किंचबाहुलकात् भावइनिः भावेऔत्स र्गिकमेकवचनंक्लीबत्वं किंच पचीत्यस्य क्रियापरत्वेन आकृतिगणेचादौ पाठाद् अव्ययत्वेन लिंगादेरभावा दविभक्तिस्साधुः किंच स्वपचीत्यस्य विशेषणत्वम् ॥ स्वयमेवपाकक्रिययेत्यर्थः साचस्वार्थमेवनतुपरार्थवेतना दिना इतिभावः ॥ बुभुजेभोजनंचकारवेदपाठीत्युपाधिः कुटुम्बव्यापृतः कुटुम्बव्यापृतस्तुयः स्यादभ्यागरिकस्तस्मिन्नुपाधिश्चपुमानयमित्यमरः॥ वेदपाठेनकुटुम्बपोषणव्यापारेयुक्तइत्यर्थः ॥ स्वात्विकवृत्त्येतिध्वनिः ॥ कुलशब्दोऽऽदिर्यस्य जस्सशब्दोऽन्तेयस्येतिकुलजस्सइतिनामकुलंसजाती यगणंब्राह्मणादीन् जासयतिमोक्षयतिगर्भाधानादिसंस्कारैर्गर्भस्थखानपान जनयदोषेभ्यः किंचकुलेनदेहेनसहस्वात्मानंयोगबलेन जासयतिमोक्षयति इतिव्युत्पत्या मोक्षणार्थकजसधातोः औणादिकस्सन्प्रत्ययोबाहुलकात्कर्त रिण्यन्तात् कुलंजनपदेगोत्रेसजातीयगणेऽपिचभवनेचतनौक्लीबमितिको शांतरेममप्रपितामहोऽभूदितिशेषः ॥ ३४ ॥

मू० त्वन्निष्पन्दोच्छ्वसितपवनामोदसम्पर्करम्यः ।
स्रोतोरध्रध्वनितसुभगंयोगिभिः पीयमानः ॥
नीचैर्वास्यत्युपजिगमिषोर्जाम्बवन्तींपुरीन्ते ।
शीतोवायुः परिणमयतामानसात्यन्तभक्तेः ॥३५॥

त्वन्निन्देति ॥

त्वत्निष्पन्देनतवशनैश्चलनेनोच्छसितउपबृंहितोयः पवनस्य प्राणवा

योरामोदः सौगन्धिकौषधविशेषस्यमुखवासनेत्यर्थः ।। योगिभिः कस्मै चित्साधनायोपयोगिभक्षितस्य सौगन्धिकौषधेः पवनेसन्निविष्टोयआमोदः गंधइतिभावः ।। तस्यसंपर्केणसम्बन्धेनरम्यः सुरभिरित्यर्थः ।। स्रोतश्शब्देनेन्द्रियवाचिनातद्विशेषो घ्राणंलक्ष्यते स्रोतोऽम्बुवेगेंद्रयोरित्यमरः स्रोतोरंध्रेषुनासाग्रकुहरेषु यत् ध्वनितंशब्दस्तेनसुभगंयथातथायोगिभिः पीयमानः मनोन्मनीसिद्धये अर्थात् राजयोगसिद्धयेयत्कुम्भकरणं तदर्थमुपर्य्याकृष्यमाणइत्यर्थः ।। तदुक्तंहठप्रदीपकायाम् ।। योमनस्सुस्थिरी भावः सैवावस्थामनोन्मनी ।। तत्सिद्धयेविधानज्ञाश्चतान्कुर्वन्तिकुंभकान् मानसोत्पन्नभक्तैः अन्तःकरणे उत्पद्यमानायाः भक्तेः परिणमयितापरिपाकफलंप्रापयितामितांह्रस्वइतिह्रस्वः ।। त दुक्तंहठप्रदीपकायाम् । प्राणापानौनादबिन्दूमूलबन्धेनचैकतां गत्वायोगस्यसांसिद्धिंयच्छतोनात्र संशयः विशेषश्चब्रह्मानन्दकृतटीकायांद्रष्टव्यः ।। शीतोवायुः जम्बुवन्ती जम्बुफलानिविद्यन्तेयस्यांतांपुरीं जम्बूसंज्ञकनगरमुपजिगांमिषोरुपगंतुमिच्छोर्गमेस्सन्नन्ताद्रुप्रत्ययः ।। तेतवनीचैः शनैर्वास्यति अल्पेनीचैरद्रुते शनैरित्यमरः ।। किंचिदित्यर्थः ।। वास्यतिवीजयिष्यतीत्यर्थः ।। गतिगन्धनार्थकवाधातोर्ण्यन्ताद्वोविधूनने जु गितिजुकिरूपं सम्बन्धमात्रीविवक्षायांषष्ठी ।। ३५ ।।

मू० तापीनद्यास्तटगिरिगुहायांमहादेववासः ।
प्राणासौरिस्स्नपयतुभवच्छुद्धलिप्सासुसक्तैः ।।
यस्यांतस्यांनवशशिभृतंप्रोष्यपूर्वक्षणंच ।
दुर्गास्थानंघनतरुसुरम्यंगिरेः पूर्वतोऽस्ति ।। ३६ ।।

तापीति ।

तस्यांगंगायां घोषइतिवत्सप्तमी तस्याः जम्बुपुर्य्याः समीपे अधः

इतियावत् ॥ तापीनाम्नीयानदीतस्याः तटगिरिगुहायांनित्यसाकांक्षत्वात्समासः ॥ कूलेशैलेयः तत्रयागुहातस्यां अकृत्रिमविले देवखातविलगुहा इत्यमरः ॥ यस्यामित्यधिकरणेसप्तमी ॥ उष्यतेइतिवासः ( भावेघञ् ) महादेवस्यदेवदेवस्यशिवस्येत्यर्थः ॥ वासः वसनं महादेववासः पूर्वम्प्रथमतः क्षणंकिंचित्कालं प्रोष्यवसेत्यर्थः ॥ विश्रामार्थमितिभावः ॥ नतुचिरंशुद्धलिप्सायांवाञ्छायांसुसक्तौसात्विकीभावंप्राप्तैः प्राणाः प्राणवायवाः तेषामासारैस्सम्पातैः आरोहावरोहैरित्यर्थः ॥ धारासंपात आसारइत्यमरः । प्राणानांसम्पातश्चारोहावरोहणमेवेतिभावः ॥ नवशशिभृतंमहादेवमित्यर्थः ॥ भवत्स्वयमेवस्नपयतुयत्रेतिशेषः गिरेः पूर्वतः पूर्वदिशिघनतरुभिर्निविडशाखिभिः सुशोभनंरम्यंरमणीयं दुर्गायाः काल्याः स्थानमस्ति ॥ ३६ ॥

मू० गौरीयत्रोग्रमहनिदिवोबद्धपद्मासनातान् ।
हृद्यप्रेम्णाविधृतकुसुमैर्मालयालङ्करोति ॥
धौतस्वान्तेहरशशिरुचायोगिनस्सन्निविश्य
पश्चादात्मन्ग्रहणगुरुभिर्वायुभिर्नर्तयेथाः ॥ ३७ ॥

गौरीति ॥

यत्रयस्यांगुहायां उग्रंहरं उग्रः कपर्दीहरः स्मरहरः इत्यमरः ॥ बद्धं परस्परं संश्लिष्टंवामदक्षिणजंघे इत्यर्थः ॥ पद्मासनंययासाबद्धपद्मासना पद्मासनलक्षणंचेति वामोरूपरिदक्षिणं च चरणंसंस्थाप्यवामे तथा दक्षोरूपरिपश्चिमेनविधिनाधृत्वाकराभ्यांदृढं गौरीभवानीहृद्ये वल्लभेऽभीष्टेऽभीप्सितंहृद्यंदयितंवल्लभंप्रियमित्यमरः ॥ महादेवे इत्यर्थः । यः प्रेमाहार्दं प्रेमानः प्रियताहार्दं प्रेमस्नेहइत्यमरः ॥ तेनविधृतैरवचयनैः कुसुमैः

पुष्पैः रचयेत्याध्याहार्य्यरचयामालया अहर्निदिव्रः प्रतिदिनमित्यर्थोऽसम स्तत्वात्समासान्ताभावोऽलङ्करोति धारयतितामित्यर्थः ॥ योगिनांहरश शिरुचामहादेवशिरस्य चन्द्रज्योत्स्नायां योगिभिर्ध्यानेनान्तः करणे आनी तस्यशिवेस्येतिभावः ॥ धौतस्वान्तेशुद्धांतः करणे संप्रविश्य तत्रस्थित्वे त्यर्थः पश्चात्प्रवेशानंतरं तान्योगिनो येषांहृदयेप्रविष्टंतानित्यर्थः ॥ आत्मनः मनसः कर्तुः आत्माकलेवरेयत्ने स्वभावेपरमात्मनि चित्तधृतौ चबुद्धौचपरव्यावर्त्तनेऽपिचेतिधरणिः ॥ ग्रहणेनप्राप्त्यातत्रसंक्रमणेनेत्यर्थः गुरुभिरुत्तमैः गुरुस्तुगीष्पतिःश्रेष्ठे गुरौपितरिदुर्भरे इतिविश्वः ॥ हृदयग तप्राणवायोरुत्तमत्व मपानप्रदेशापेक्षयात्रिरुद्धाततत्वम् ॥ कनिष्ठादीनांल क्षणंलिङ्गपुराणे ॥ प्राणायामस्यमानंतुमात्राद्वादशकंस्मृतम् ॥ नीचोद्वाद शमात्रस्तुसकृद्धातस्सईरितः मध्यमस्तुद्विरुद्धातश्चतुर्विंशतिमात्रकः मुख्य स्तुयस्त्रिरुद्घातः षट्त्रिंशन्मात्रउच्यते उद्घातलक्षणंतु प्राणेनोत्सर्पमाणेन अपानःपीड्यते यदागत्वाचोर्द्ध्वंनिवर्त्ततएतदुद्घातलक्षणम् ॥ वायुभिः प्राणवातैर्नर्तयेथाः नृत्यंकारयमार्दङ्गिकभावेन भगवंतंहरमुपासस्वेति भावः ॥ अणावकर्म्मकाच्चितवत्कर्तृकादित्यात्मनेपदापवादं निगरणचल नार्थेभ्यश्चेति परस्मैपदंनभवतितस्य नपादम्याङ्यमाङ्यसपरिमुहरुचिनृ तिवदवसइति प्रतिषेधात् ॥ ३७ ॥

मू० आराध्यैनम्वरपशुपतिंदेवमुल्लङ्घिताध्वा ।
सिद्धद्वन्द्वैः परिभवभयाद्व्रीणिभिर्मुक्तमार्गं ॥
व्यालम्बेथांसुरसदनजामागतांमानायिष्यन् ।
तापीमूर्त्यांभुविरणपुरोवीरासिंहस्यकीर्तिम् ॥ ३८ ॥

आराध्यैनमिति ॥

एनंगौर्य्याप्रतिदिनपूज्यंपशूनांपतिः पशुपतिः वरः श्रेष्ठोयः पशुप

तिस्रः तंवरपशुपतिंमहादेवं श्रेष्ठत्वंच शीघ्रवरदानेनदेवाद्वृत्तेवरः श्रेष्ठत्रि ष्वित्यमरः ॥ पशूनांदेवादिब्रह्मसृज्यानांपतिः ( उक्तंच लैङ्गे ) देवादयः पिशाचांताः पशवः परिकीर्त्तिताः तेषांपतित्वात्सर्वेशो भवःपशुपतिस्मृतः देवंमहादेवमाराध्योपास्यवीणिर्भिवीणावद्भिर्व्रीहादित्वादिनिः सिद्धद्वन्द्वै र्मिथुनैः पशुपतिमुपवीणयितुमागतैरितिभावः परिभवास्तिरस्कारः तस्य भयात् अनादरः परिभवः परिभावस्तिरस्क्रियेत्यमरः ॥ तवतेषामन्तः करणप्रवेशेनहस्तादिबाह्येन्द्रियशैथिल्याद्वीणातिरस्कारस्स्यादितिभावः ॥ मुक्तमार्गंत्यक्तवर्त्मसत् उल्लङ्घिताध्वकियन्तमध्वानङ्गतंइत्यर्थः ॥ रणपुरः पुरइत्यग्रार्थकमव्ययंरणशब्दपूर्वकवीरसिंहस्य रणवीरसिंहनाम्नः रणे आजौ आजौखेरणइत्यमरः ॥ वीरः उत्साहवर्द्धनः उत्साहेनवर्द्धते उत्साहंवर्द्धयतीतिवाउत्साहवर्द्धनोवीरइत्यमर ॥ सिंहइवइतिरणवीरसिंहः तस्यसुरसदनेस्वर्गेगीयतेइति गासुरसदनगातांतापीतन्नाम्नीनदीतन्मूर्त्यात- द्रूपेणतन्वा इतियावत् ॥ कायोदेहः क्लीबपुंसोः स्त्रियांमूर्त्तिस्तनुस्तनूरित्य- मरः ॥ भुविपृथिव्यामागतांप्राप्तांकीर्तिंयशः कीर्तिप्रसादयशसोवि- स्तारेकर्दमेऽपिचेतिहैमः मानयन्पूजयन् अन्यराजापेक्षयोत्कर्षयन्नित्यर्थः व्यालम्बेथाः ॥ ३८ ॥

मू० यस्यास्तीरेप्रविततपुरीराजधानीतिजम्बू ।

कीर्तिस्तम्भोलसतिनृपतेर्नोर्द्ध्वगैर्देवहर्म्यैः ॥

यस्यांलोकोविविधरचनोद्दश्यतेविप्रमुख्यः ।

प्रासादेष्वप्रमितगणनास्थापिताः गण्डकीजाः ॥३९॥

यस्या इति ।

यस्याः तापीनद्याः तीरेतटे प्रवितताविस्तारयुक्तापुरीराजधानी

जम्बूइति अत्रेतिशेषः ॥ अस्यांराजधान्यां उर्ध्वगैरत्युन्नतैर्देवहर्म्यैः प्रासादै र्नृपतेः रणवीरसिंहस्यकीर्तेः यशसः स्तम्भोलसतिदेदीप्यते यस्यां जम्बूनगर्य्यां विविधाः नानाबहुरूपाइतियावत् ॥ विविधस्याद्बहुविधोनानारूपाः पृथग्विधः इत्यमरः ॥ रचनाःकृतयोयेनाक्रियाकलापेनसः विविधरचनः ( अर्थादनेक क्रियाकलापज्ञः ) ( इत्यर्थः किंचपचाद्यचि ) रचनाविद्यते यस्मिन्सः विविधरचनः रचनावानित्यर्थः ॥ विप्रमुख्योब्राह्मण प्रधानोलोको जनोदृश्यते प्रासादेषु दवे मन्दिरेषु अप्रमिताः संख्यारहितागणनायकः द्वावित्यादिरूपा येषांते अप्रमितगणनाः गण्डक्यां नद्यां जातः गण्डकीजाः ( सप्तम्यांजनेर्डः ) इतिडः प्रत्ययः ॥ जनधातोः आविर्भूता इत्यर्थः ॥ शालिग्राम शालीभिधाः इत्यर्थः ॥ स्थापिताः । प्रतिष्ठिताः सन्तीतिशेषः ॥ ३९ ॥

मू० भूपालस्यागणनरचनाः मन्दिराणांसुरम्याः ।
आरामस्थैर्भ्रमरनिचयैः कूजितैः पक्षिणाञ्च ॥
तापीकूलात्प्रवहपवनैश्शीतलैश्शीतलानां ।
गत्वातत्रोपरिभवनतोयाहितद्रामसद्म ॥ ४० ॥

भूपालस्येति ।

हेमनस्त्वंयस्यांपुर्य्यां भूपालस्य श्रीरणवीरसिंहस्यारामस्थैरुपवनस्थैः आरामस्यापादुपवनमित्यमरः ॥ शोभार्थकृत्यारचितैः पक्षिभिरित्यर्थः ॥ पुनः भ्रमरनिचयैः समूहैस्समूहोनिवहोव्यूहः समवायश्च योगण इत्यमरः ॥ च पुनः पक्षिणांकूजितैस्स्वनैः अत्रकूजितेत्युक्त्या एषांचेतनत्वात्पूर्वेषांकृत्रिमत्वमितिभावः ॥ शीतलैः तापीकूलात्प्रतापी नाम्नीनदीकूलात् रोधसः कूलंरोधश्चतीरश्चेत्यमरः ॥ प्रवहन्तीतिप्रवहाः

पचाद्यचि प्रवहानियानिपवनानि प्रवहपवनानितैः शीतलानां यद्यपिता-पीकूलादत्युच्चैरपिहर्म्याणितथापितापीसलिलं पवनानिस्वयमेवानय-न्तीतिभावः ॥ शीतंगुणोयेषामितिसिध्यादिभ्यश्चेतिमत्वर्थीयोलच् ॥ शीतलाः तेषां शीतगुणवतांमन्दिराणां प्रासादानांसुरम्याः शोभनारमणी-याः अगणनरचनाः अपरिमितरचनाः दृश्यते इति यस्यास्तीरे इति श्लोक स्थपदंअन्वेतिअत्रविभक्तिविपरिणामेनदृश्यंतेइत्यर्थः ॥ तत्रप्रासादेषु गत्वाविश्रामार्थ मितिध्वनिः उपरिभवनतः आगारतः भवनागारमन्दिर मित्यमरः ॥ उच्चैर्मार्गेणनत्वन्तः मार्गेणकस्याश्चिन्मनसिस्थिरमाभव इतिभावः ॥ रामहर्म्यं श्रीरघुनाथमंदिरंयाहि व्रज ॥ ४० ॥

मू० यत्रस्थानंममवरगुरोर्गोकुलेंदुप्रनाम्नः ।
कीर्त्तिर्यस्यत्रिभुवनाविदितासद्गुणैर्व्यासमूर्त्तेः ॥
मान्यस्यास्तिस्ववरमतिगणैः राजभिः जम्बुधीशैः ।
श्रेष्ठाचारैर्विततयशसश्शास्त्रवेदादिमूर्त्तेः ॥ ४१ ॥

यत्रेति ।

यत्रश्रीरघुनाथमन्दिरे श्रेष्ठाचारैरुत्तमव्यवहारैर्विततविस्तृतयशसः शास्त्रवेदादि व्याकरणन्यायवेदान्तयजुर्वेदादिमूर्त्तेस्स्वरूपस्यअतएवजम्बा धीशैः जम्बूराजधान्याधिपतिभिः राजभिर्महाराजगुलाबसिंहप्रभृति आ राज्ञः अमरसिंहात् मान्यस्यपूज्यस्यसद्गुणैः सतांयेगुणाःसत्यक्षमाद यस्तैः त्रिभुवनेस्वर्गादिलोकेलोकस्तुभुवनेजनेइत्यमरः ॥ विदिताप्रसिद्धा कीर्त्तिर्यशोयस्यसः कीर्तियशाः तस्यव्यासमूर्त्तेर्विशेषेण आसते उपविशं तिवेदादिशास्त्राण्यस्मिन्पात्ररूपे इतिव्यासः ( बाहुलकादधिकरणेघञ् ) तस्यमूर्त्तिः स्वरूपम् ॥ व्यासमूर्त्तिः तस्ययस्यश्रीगोकुलचन्द्रस्यममभग

वद्दत्तस्यवरगुरोः सद्गुरोः वरेतिविशेषणेनगुरूणांश्रीगङ्गाधराणामपिगुरोर्ग्र हणमितिभावः ॥ ननु ॥ श्रीगङ्गाधराणांगुरुग्रहणेनतेषांस्वपित्रतिरिक्तकेषां विद्यादातृणामपिग्रहणन्नस्यादित्याह ॥ गोकुलेंदुःसचप्रकृष्टनामयस्येतिगो कुलेन्दुप्रनामासर्वनामानीत्यादिवस्तुत्वाभावः तस्यप्रशब्देनकेवलंगुणैरेव श्रेष्ठत्वंनकिन्तुनाम्नाऽपिश्रेष्ठत्वमितिभावः ॥ गोकुलचन्द्रस्येत्यर्थः ॥ विनापिप्रत्ययं प्रत्ययोत्तरपदलोपश्चेतिचन्द्रेत्युत्तरपदलोपेसत्यपिकेवलेनैव तत्वग्रहणेइन्द्वन्तग्रहणंसर्वत्रेन्दुवत् ॥ ( प्रकाशद्योतनार्थम् ॥ ) नतुगोकु लेन्दुरितिनाम गवांदृष्टीनांकुलैस्समूहैः कृपाकटाक्षैरित्यर्थः ॥ चन्दयति आह्लादतिलोकमनांसि इतिगोकुलपूर्वकचदेः स्फायितञ्चिवञ्चि इत्यौ णादिकसूत्रेणरक् चन्द्रः कर्पूरसोमयोश्चन्द्रः सुधांशुकर्पूरकम्पिल्लस्वर्णवा रिषुरान्तोविश्वः ॥ पचाद्यचिरेफशून्योऽपिचन्द्रोनिशापतौहिमांशुश्चन्द्र माश्चन्द्रः शशीचन्द्रोहिमद्युतिरितिशब्दार्णवः ॥ किञ्चगोभिर्यज्ञैः कुलंव शंचंदयति आह्लादयतिकिञ्चगोभिर्जलैः कुंपृथिवींलातिददातिदानेनेति गोकुलः राजातंचन्दयतिआह्लादयतिगुणेनेति ॥ गविजलेकुंपृथ्वींला तिददातिनिमज्जयतिगोकुलः हिरण्याक्षः तेनचंद्यते आह्लाद्यते इतिच न्द्रः शिवः शिवरूपः गवांधेनूनांकुलंसमूहंचंदयतीतिकपूर्ववत् ॥ गोकु लचन्द्रः कृष्णः श्रीकृष्णरूपः तस्यनिवासस्थानमस्तिभवति ( गोनास्या द्बलीवर्द्धेक्रतुभेदार्षभेदयोः सूर्य्येभूमौजलेस्वर्गेरश्मिदृग्वाणलोमसु इत्य नेकार्थकोशः ) गोत्राकुःपृथिवीपृथ्वीत्यमरः ॥ ४१ ॥

मू० यस्मिनकुड्यंसुलघुरचितंदारुभिर्देवपूर्वैः ।
आम्राणांहिभ्रमरस्वनितांशोभतेमध्यदेशे ॥
ध्यायायेषांनिविडविततांकूजितैः पक्षिणांचः ।
यस्यादिक्षुस्मरणविषयाछात्रशालासुरम्या ॥ ४२ ॥

यस्मिन्निति ॥ यस्मिन्रघुनाथमंदिरेभ्रमरस्वनोरवोविद्यतेयषुतेभ्रमर स्वनिनः तेषांभ्रमरकृतशब्दयुक्तानामित्यर्थः ॥ आम्राणांसहकाराणांआम्रश्चूतोरसालोऽसौसहकारोऽतिसौरभः इत्यमर ॥ मध्यदेशेयत्रभूमौचतुर्दिक्षु आम्रवृक्षाणिमध्यभागमाछादयंतीत्यर्थः ॥ देवपूर्वैर्दारुभिर्देवदारुभिरित्यर्थः ॥ अत्रदेवशब्दपूर्वकत्वंदारुशब्दस्यैवनतुसंज्ञिनस्तदर्थस्येति शब्दपरस्यदारुशब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थ दोषमाहुः ॥ तदुक्तमेकावल्याम् ॥ पदवाच्यस्यवचनंस्यात्तदेवावाच्यवचनमितिकथितम् ॥ समाधानन्तुदेवशब्दविशेषितेनदारुशब्देनशब्दपरेण कुड्यनिर्म्माणयोग्यः देवदारुरितिलक्ष्यते इतिकथंचित्सम्पाद्यम् ॥ एवंविधविषयेमल्लिनाथेनापिशिशुपालवधटीकायांहिरण्यपूर्वकशिपुमित्यत्रमेघदूतटीकायांदेवपूर्वङ्गिरिन्ते इत्यत्रचैवंरूपेणसमाधीयतेसुलघुरचिताशोभायुक्तानातिविशालानिर्मिताचपुनः पक्षिणांशुकादीना कूजितैः शब्दैः सुरम्यासुष्टुरमणीयाभित्तिःकुड्यं भित्तिःस्त्रीकुड्यमित्यमरः । शोभते प्रकाशते येषां आम्राणांनिविडवितता घनीभूताविस्तृताछायाशोभतेस्मरणविषयापंचवर्षायुष्कस्यतद्देशाद्रावलपिण्ड्यामुपागतस्यमेपूर्वदृष्टायाः स्वगुरुसभित्तिशालायाः इदानीन्तेनमानसप्रत्यक्षाभावात् ॥ आचिरकालदृष्टवस्तुवत् ॥ केवलंस्मरणस्यैवविषयता इत्युक्तमतस्स्मरणविषयइतिविशेषणम् ॥ सुरम्यासुष्टुरमणीयाछात्रशालाविद्याधिकारीणांगृहंचतुःशालमितियावत् । अन्योऽन्याभिमुखशालाचतुष्कस्येत्यर्थः ॥ शोभतचहीति शब्दाभ्यांसमुच्चयार्थकाभ्यांप्रकाशते इत्येकस्याः एवक्रियायाः पुनः पुनः सम्बन्धः ॥ ४२ ॥

मू० गत्वातस्यांसुजनहृदयंप्राप्यस्थानम्विनम्य ।

उच्चैःकर्त्तुर्नमनफलदंब्रह्ममेधांप्रदक्ष्व ॥

शान्तिंधत्तेनयनहृदयंदर्शनेनाथयस्य ।
पश्चाद्याहित्रिभुवनविदितेविष्णुदेव्यास्त्रिकूटे ॥४३॥

गत्वेति ॥ तस्यांपाठशालायांसुजनहृदयंप्राप्यश्रेष्ठजनानामन्तःकरणे प्रविश्योच्चैः कर्तुंनमनंनमस्कारः तस्यफलदंप्रयोजनदातृत्वम् ॥ नमनस्यफलंविनयादितस्यापिदातृ इत्यर्थः ॥ चपुनः केवलंविनयादिदातृत्वं नाकिंतु अन्यदपिकिंचित् ॥ अत आह ॥ ब्रह्मेत्यादि ब्रह्ममेधां ब्रह्मविषयिणीं बुद्धिंप्रप्रकर्षेणदातृस्थानं सन्निवेशं स्थानंनित्यावकाशयोः सादृश्येसन्निवेशेचेतिहैमः ॥ ममगुरूणामत्यन्तसुखकरमर्हदिवंतत्रैवनिवसतामत्यन्तप्रीतिकरंनिवासस्थानमित्यर्थः ॥ विनम्यविशेषतयादण्डवत्प्रणम्येत्युक्या सद्गुरूणांवैकुण्ठवासोबभूवेतिध्वनिः ॥ यस्यस्थानस्यदर्शनेननयनहृदयं द्वन्द्वश्चप्राणितूर्य्यसेनांगानामित्येकवद्भावः ॥ शान्तिंधत्तेप्राप्नोतिपश्चात्प्रणामानन्तरंत्रिभुवनविदितेस्वर्गादिलोकप्रसिद्धेविष्णुदेव्यास्त्रीणिकूटानि श्रृंगानिकूटोऽस्त्रीशिखरंश्रृंगमित्यमरः ॥ यस्यतात्त्रिकूटंतस्मिन्पर्वतेयाहि व्रज ॥ ४३ ॥

मू० यस्याः पादान्निसृतमुदकंशीतलंधारयेत्त्वं ।
हृद्यन्तस्थंशिवरतिमतांशोभितंचूतकूटैः ॥
श्रीपर्णीप्लक्षमरुबकदार्वीशिवातिन्दुकैश्च ।
देव्याःध्यानंप्रतिदिनमिदंकंदरायांसुयत्नाः ॥४४॥

यस्याइति ॥ श्रीपर्णीमरुबकदार्वीशिवातिन्दुकैः श्रीपर्णीकाश्मर्य्यः श्रीपर्णीभद्रपर्णीकाश्मर्य्यः इत्यमरः ॥ प्लक्षः जटीकपीतनश्चप्लक्षः जटीकर्पटीत्यमरः ॥ गर्दभांडेकन्दरालकपीतनसुपार्श्वकः इत्यमरः ॥ मरुबकः श्वसनः पिंडीलकोमरुबकः श्वसनः करहाटकः इत्यमरः ॥ शिवाहरीत

कीचशमीसक्तुफलाशिवाहरीतकीहैमवतीचेतकीश्रेयसीशिवेत्यमरः ॥ तिन्दुकः कालस्कंदः तिन्दुकःस्फूर्जकः कालस्कंदः इत्यमरः ॥ चूतकूटैराम्रराशिभिः ( आम्रश्चूतोरसालोऽसौ सहकार इत्यमरः) ॥ मायानिश्चलयंत्रेषुकैतवानृतराशिषुआयोधनेशैलशृङ्गेस्मरांशेकूटमस्त्रियामित्यमरः॥ शोभितंकान्तिमत्अत्रत्रिकूटे शिवरतिमतामत्यन्तभक्तानांहृद्यंतस्थंहृदयमध्ये स्थितिंकुर्वत् यस्याः विष्णुदेव्याः पादात्पादाधस्तादित्यर्थः ॥निसृतंप्रवाहरूपेणस्यंदितंशीतलमुदकंजलंत्वंधारयेः शिरः उपरिवहेरित्यर्थः ॥ एतत् श्लोकसपादचतुर्थ पादस्याग्रिमश्लोकेनान्वयः ॥ ४४ ॥

मू० सिद्धाः स्थित्वाक्वचिदपिसदायत्रकुर्वन्तितत्र ।

गत्वातेषांहृदिनिवसतांपूजयेरम्बिकायाः ॥

सिद्धिंदात्रींक्षणमपिपुरोगच्छशैलंब्रन्हालं ।

तीर्त्वारम्यांनयनसुभगांचंद्रपूर्वान्तुभागाम् ॥ ४५ ॥

सिद्धाइति ।

यत्रत्रिकूटेक्वचिदपि अगम्यस्थानेपुरुषैः कन्दरायांगुहायांसुयत्नाः शोभनंसाधनविशिष्टयत्नंनासिकाग्रावलोकनादि रूपव्यापारोयेषांतेसिद्धाः निष्पन्नाः तुर्यावस्थांप्राप्ता इत्यर्थः ॥सिद्धोनिर्वृत्तेनिष्पन्नेइत्यमरः॥ देव्याः विष्णुदेव्याः इदंहृदयेप्रत्यक्षीभूतंध्यानेचिंतनंसदानित्यंप्रतिदिनंकुर्वन्तिसततंध्यायंतीत्यर्थः ॥ नतुकदाचिद्द्विदिनंकृत्वा चतुर्दिनंविश्राम्यपुनर्द्विदिनंकुर्वन्तीतिभावः ॥ अतएवनित्यशब्दोपादानंतत्रत्रिकूटेगत्वाप्राप्यये तुर्य्यावस्थांप्राप्ताः सिद्धाः तेषांहृदिनिवसतत्रेतिशेषः ॥ तत्रहृदयेक्षणमपि किंचित्कालमम्बिकायाः पुरः अग्रेस्थित्वासिद्धिदात्रीं अणिमाद्यष्टसिद्धिप्रदांतामंबिकांपूजयेः पूजनंकुरुनयनसुभगांनेत्रयोरानन्ददात्रींचन्द्रपूर्वांच

न्द्रशब्दपूर्वाभागांचन्द्रभागांनदीमित्यर्थः ॥ तीर्त्वातस्याः पारंगत्वेत्यर्थः॥ सुरम्यंशोभनंरमणीयंवन्हालंबल्हालसंज्ञकंशैलंपर्वतंगच्छव्रज ॥ ४५ ॥

मू० यत्रोद्यानंरघुकुलपतेः शोभनंयोगिरम्यं ।
वैनाम्नारामबनमितियज्ज्ञायतेसर्वलोकैः ॥
तत्रप्रोष्यप्रगतिसुमतेभक्तस्वान्तेप्रविश्य ॥
तत्रस्नात्वारुचिरविरनागंव्रजेस्सिद्धरम्यम् ॥ ४६ ॥

हेप्रगतिसुमतेप्रकृष्टगतौ उत्तमजीवनेशोभनामतिर्बुद्धिर्यस्यसःप्रगतिसुमतिः तत्सम्बोधनेहेप्रगतिसुमते नलुमताङ्गस्येतिनिषेधस्यानित्यत्वाद्गुणः यत्रचन्द्रभागातटेरघुकुलपतेः श्रीरामचन्द्रस्यशोभनंमनोरमंसुन्दरंरुचिरंचारुसुषमंसाधुशोभनंकान्तंमनोरममित्यर्थः ॥ योगिभिः रम्यंक्रीडनीयं यत् उद्यानं उपवनंस्यादुद्यानंनिस्सरणेवनभेदेप्रयोजने इत्यमरः ॥ सर्वलोकैर्जनैः नाम्नासंज्ञयारामवनमितिवैनिश्चयेनज्ञायतेज्ञातम् ॥ कर्म्मणि लट् ॥ तत्रोद्यानेप्रोष्यनिवासंकृत्वाभक्तस्वांतेऽन्तःकरणे प्रविश्यस्थित्वेत्यर्थः ॥ तत्रचंद्रभागायांस्नात्वास्नानंकृत्वासिद्धैर्निर्वृत्तैः कर्तव्याकार्य्यात् उपरतैरित्यर्थः ॥ तुर्य्यावस्थांप्राप्तैरितियावदित्यर्थः योगिभिरित्यर्थः ॥ रम्यंक्रीडनीयंरुचिरंचारुयद्रुचिकरमित्यर्थः ॥ विरनागंविरनागसंज्ञकमित्यर्थः ॥ विबहुलः रःशब्दः विरः ( रश्चकामेऽनलेवह्नौशब्देरूपेचरः स्मृतः ) इत्येकाक्षरकोशः ॥ विरः नागइवश्रेष्ठाइत्यर्थः ॥ उपमितंव्याघ्रादिभिस्सामान्याप्रयोगे इतिसमासेविशेषस्यपूर्वनिपातेव्याघ्रादिरुत्तरपदत्वंयथानृसोमइतिकिंचविशेषेणरुयते इतिव्युत्पत्या अन्येभ्योऽपिदृश्यतेइतिवक्तव्यंइत्यनेनकर्त्तरिविहितस्यडः प्रत्ययस्यकथंचिद्धाविधानात् विरः इतिशब्दः यद्यपि आरवारावसंरावविरावइत्यमरेविरावशब्दस्यशब्दोऽर्थोनतुविरशब्दस्यतथापिविपूर्वकरुधातोः भावघञिविरावशब्दस्य शब्दोऽर्थः एवंविपूर्वरुधातोः भावेडः प्रत्ययेपितदेवार्थः ॥ इतिविरशब्द

स्यशब्दार्थत्वे उक्तकोशस्यापिप्रामाण्यम् ॥ स्फुरुतरेपदेव्याघ्रपुंगवर्षभकुंजराः सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थगोचराः इत्यमरः ॥ किंचविशेषेणरातियत्रेतिव्युत्पत्या अधिकरणेउक्तवार्त्तिकेनडः ॥ यथासुगमइत्यत्रनन्वेवंविरः स्थानंतच्चासौनागः इतिकर्म्मधारयस्यानुपपात्तिः स्थानस्यनागत्वस्यत्वाभावात् ॥ अतः नागाश्रयनिवासस्थानमेवलक्षणयागृह्यते ( नागोवृक्षविशेषेचनागोवारणपन्नगे ) इत्यनेकार्थः ॥ नागाः काद्रवेयास्तदीश्वराः इत्यमरः ॥ अतएवयत्रनागानामालयस्तत्रागाधजलानिसंतीतिप्रसिद्धम् ॥ किंचविंविष्णुंरातिगृह्णातियत्रस्नानादितिव्युत्पत्याविपूर्वकराधातोः आतश्चोपसर्गे । इतिकः विरः स्थानं अन्यत्पूर्ववत् ॥ लोकपवित्रार्थंकश्यपाराधितमहेश्वरेणाज्ञप्तागच्छगच्छेति वादिनानिस्सारिताचगौरीनदीभूत्वाकथंत्वदङ्गसंस्पर्श्यलभेयमितिनगच्छामीतिहेतोः विरावान्कुर्वन्तीतिप्रसिद्धम् ॥ वितस्वामाहात्म्येविरनागः तंविरनागंविरनागसंज्ञकस्थानं व्रजेः याहि ॥ ४६ ॥

मू० शैलान्नीचैर्विरगतपुरोनागशब्दान्तनाम्नः ।
आविर्भूताविततलहरीयत्रचास्तिवितस्ता ॥
आकाश्मीरादवधिरुदधिरूर्द्धतुङ्गै स्तरङ्गैः ।
पात्रीवत्स्यन्त्यनिलमिलितैःपूततायाःतटस्थान्॥४७॥

शैलादिति ॥

यत्रस्थानेविरशब्दोगतः प्राप्तः पुरोऽग्रेनागशब्दोऽन्त्येयस्येतिविरगतपुरोनागशब्दन्तनामातस्यातन्नाम्नः शैलात्पर्वतात् नीचैः अधस्तात् मूलप्रदेशादितियावत् ॥ आविर्भूतानिस्सृतासतीविततावितानाविस्तारातरङ्गालहर्य्यःयस्याःसाविततलहरीक्रतुविस्तारयोरस्त्रीवितानमित्यमरः॥अ

निलमिलितैः वायुमिश्रितैरूर्द्धतुङ्गैरत्युन्नतैः उच्चैः प्रांशून्नतोदग्रोच्छ्रितास्तुङ्ग इत्यमरः ॥ तरङ्गैरूर्मीभिः भङ्गस्तरङ्ग ऊर्मिरित्यमरः ॥ आकाश्मीरात् आङ्मर्य्यादाभिविध्योरित्यव्ययीभावः ॥ अभिविध्यर्थकः आङिति काश्मीरनगरमारभ्यनतुकाश्मीरशब्देन पुष्करमूलऔषधिविशेषोगृह्यतेतात्पर्य्यापव्याख्यानात्तद्व्याख्यानञ्चवितस्ता प्रसङ्गकथनं उदाधिः समुद्रादवधिः यावत् समुद्रपर्य्यन्तमित्यर्थः ॥ तटस्थान् कूलेस्थितात् नगरग्रामवृक्षादीनित्यर्थः ॥ पूततायाः पवित्रतायाः पूतंपवित्रंमेध्यंचेत्यमरः ॥ पात्रीवत्स्यन्ती अपात्राणिपात्राणिवत्स्यन्ती अन्तर्भाविण्यर्थेऽत्रवृत् धातुःकरिष्यंतीत्यर्थः ॥ उत्पत्तिकालापेक्षयाभविष्यत्कालिकत्वंवृत्धातोः वृद्भ्यःस्यसनोरितिवापरस्मैपदम् । नवृद्भ्यश्चतुर्भ्यःइतीड्निषेधःवितस्ता वितस्तानदीत्यर्थः । विपूर्वकतसेःवौतसेरित्यौणादिकतिप्रत्ययेनवितस्तिरितिअङ्गुष्ठसकनिष्ठस्याद्वितस्तिर्द्वादशाङ्गुलः इत्यमरः ॥ वितस्तिप्रमाणमस्येत्यर्थेप्रमाणेद्वयसजित्यादिमात्रच्तस्यप्रमाणेलइत्यनेनलुक्वितस्तिशब्देनतात्पर्य्यात् महादेवत्रिशूलविदारितपर्वतस्थगर्त्तविशेषः ॥ तस्मिन्जाता निस्सृता आविर्भूताइतियावत् ॥ इत्यर्थेतत्रजातअनेनाच्यस्येतीकारलोपेटाप्वितस्तेतिसिद्ध्यति ( तदुक्तंभृंगीशसंहितायाम् ) देवमग्रेस्थितादेवीकरंकृत्वावितास्तिकम्।देह्याज्ञांतत्रयास्यामिनदीभूत्वामहेश्वर।।इतिश्रुत्वाप्रियंवाक्यंप्रियायाश्चमहेश्वरःवैतस्तिकंकरंदृष्ट्वाशूलमूध्दृत्यतेजसा।। विदार्य्यशिखरंरम्यंशूलाग्रेणमहेश्वरः ॥ वितस्तिमात्रोऽभूत्तत्रगर्तोत्रिशूलनिर्मितः ततोवैनिस्सृतादेवीनदीपरमपावनीवितास्तिमात्राद्गर्ताद्वैयतोवैनिस्सृतास्वयम् ॥ तस्माद्वित्तस्तेतिसदाप्रथिताभुवनत्रये ॥ अस्तिभवति ॥ ४७ ॥

मू० कूलेयस्याः अमितगिरयोभान्त्यनेकैस्सुवृक्षैः ।
तीरोपान्तैः प्ररुहकमलैः शीकरैर्निर्झराणाम् ॥

नीहाराणांस्फटिकसदृशैश्चञ्चलैश्शीतलाश्च ।

यस्याः मूलेविमलविरनागंहिमाम्बप्रशीतम् ॥४८॥

मूलेइति ।

यस्याः वित्तस्तायाः कूलेतटतीरोपान्तैः तट प्रांतभागस्थितैरित्यर्थः ॥ तत्रेतिशेषः ॥ तत्रप्ररुहकमलैः उत्पन्नेन्दीवरैः निर्झराणां वारिप्रवाहाणां वारिप्रवाहोनिर्झरोझरः इत्यमरः ॥ शीकरैरम्बुकणैश्शीकरोऽम्बुकणः स्मृतः इत्यमरः ॥ स्फटिकसदृशैः स्फटिकमणिनिभैः सदृक्षः सदृशः सदृक् साधारणसमानश्चस्युरुत्तरपदेत्वमीनिभसंकाशनीकाशः इत्यमरः चंचलैस्तरलैश्चंचलंतरलंचैवपारिप्लवपारिप्लवे इत्यमरः ॥ नीहारैस्तुषारैः अवश्यायस्तुनीहारस्तुषारस्तुहिनंहिममित्यमरः॥शीतलाः शीतगुणवन्तः अमिताःअनेकाःगिरयःपर्वताःभांतिशोभंते चपुनः यस्याः वित्तस्तायाः मूलं आप्रथमंदीपते गृह्यते इत्यादिःआदौभवं आद्यंप्रथममुत्पत्तिस्थानमित्यर्थः ॥ मूलमाद्येशिफाभयोरित्यमरः पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः इत्यमरः हिमाम्बैः तुहिनजलैः शीतंशीतगुणवत् ॥ विमलंशुद्धं स्नानकर्तॄणांसत्वगुण प्रापकमित्यर्थः ॥ विरनागं संज्ञकं उत्तमतीर्थस्थानमस्तीतिशेषः ॥ ४८ ॥

मू० कल्हाराणांपवनगतिमत्सारसैः पक्षिभिश्च ।

पुन्नागैर्वत्सकसरलटैश्शोभमानंसुसेव्यम् ॥

वीर्य्योर्द्धानांशिवचरणसुस्वच्छचिंतास्पदानां ।

यत्रस्नात्वापवनगतयोयान्तिकैलासमध्ये ॥ ४९ ॥

कल्हाराणामिति ॥

कल्हाराणां सौगंधिकानां संध्याविकासिशुक्लसरोजानामित्यर्थः ॥

पवनस्य गतिः पवनगतिः तत्संचारो विद्यते यत्र पवनगतिमत् सा रसैः पंकेरुहैः ॥ पंकेरुहं तामरसं सारसं सरसीरुहमित्यमरः ॥ चकारो ऽनुक्तसमुच्चयार्थकः चेनसारसः पक्षिविशेषोगृह्यते पुष्कराह्वस्तु सारसः इत्यमरः ॥ प्रमाणाभावादावृत्तिर्नास्तितन्त्रस्तु ऋषीणांनास्माकं तेनबोधोऽतो उक्तचकारेणेति पक्षिभिः सामान्यपक्षिभिरित्यर्थः पुन्नागै स्तुङ्गैर्वत्सकः गिरिमल्लिकासरलोदेवदारुः ( टः वीजपूरः टः पृथिव्यां समाख्यातः करकेटः प्रकीर्त्तितः टकारोबीजपूरके इत्येकाक्षरकोशः एषांद्वन्द्वेजातिर प्राणिनामित्येकवद्भावेनित्येप्राप्ते ॥ ( विभाषावृक्षमृगेति सूत्रेणवैकल्पिकैकवद्भावान्नैकवचनम् ) तैश्शोभनंशिवचरणस्यसुशोभ नानिस्वच्छानिशुद्धानिचित्तानि आस्पदानिस्थानानियेषांतेशिवचरणसु स्वच्छचित्तास्पदाः तेषांवीर्य्योर्द्धानां ऊर्द्धरेतसांयोगिनामित्यर्थः । कर्त्त रिषष्ठीतैः सुसेव्यम् ॥ सुष्ठुसेवनीयमित्यर्थः ॥ यत्रविरनागे स्नात्वा पवनवत् ॥ गतिः गमनंयेषांतेपवनगतयः योगिनः इत्यर्थः अद्यास्मिन हनीत्यर्थः ॥ शीघ्रमितिभावः कैलासंतन्नामपर्वतंयान्तिगच्छान्ति ॥४९॥

मू० गत्वाकाश्मीरमसमकथाकोविदग्रामवृद्धं
देवीयत्रोष्यसुहरिगिरौशोभतेशारिकासा ॥
यस्याः पूर्वेनिभगिरिवरः शंकराचार्य्यशोभी
स्वल्पीभूतेसुचरितफलेस्वर्गिणांगाङ्गतानाम् ॥५०॥

। मूल युग्मम् ।

॥ शेषैः पुण्यैर्हतामिवादिवः कान्तिमत्खण्डमेकं
यस्याः पूजांप्रतिदिनमिवेऽव्यग्रचित्ताः सुपुष्पैः ॥

॥ लोकाः कुर्वन्तिशुभसुकृतिः शोभतेयत्रसाक्षात् ।
भूपालोयत्रशिवरतिमान् श्रीप्रतापानुसिंहः ॥५१॥

गत्वेति ॥

गांपृथिर्वीगौस्वर्गेवृषभेरश्मौवज्रेशीतकरेपुमान्, अर्जुननेत्रदिग्वाणभूवागादिषुपोषितीतिविश्वः ( कोशांतरेतु गौर्नादित्येवलीवर्देस्वर्गवज्राम्बुरश्मिदृग्वाणलोमास्विति ॥ गतानां आगतानांस्वर्गिणां स्वर्गवासिनांदेवादीनामित्यर्थः ॥ शेषैः अवशिष्टैः पुण्यैः सुकृतैः हृतमानीतमिवस्वल्पीभूतमतिलघुसुरचितस्यसुकृतस्यफलंलाभः फलंहेतुकृतेजातिफलेफलकसस्ययोः त्रिफलायांचककोलेशस्त्राग्रेव्युष्टिलाभयोरितिहैमः ॥ कांतिमत्शोभायुक्तम् शोभाकांतिर्द्युतिच्छबिरित्यमरः ॥ एकमन्यमनुपममितियावत् ॥ एकेमुख्यान्यकेवलाइत्यमरः ॥ खण्डंशकलं भित्तंशकलखण्डेवा इत्यमरः ॥ काश्मीरकाश्मीरमण्डलंगत्वाप्राप्य यत्रकाश्मीरमण्डले आ उष्य आसमन्ततोव्याप्यवसित्वासर्वकाश्मीरमण्डलमाभिव्याप्यवसित्वेत्यर्थः ॥ यद्यपिमूर्तिरूपेणकेवलं हरिगिरावेवस्थिता तथापिजगत्कर्तृत्वेनव्यापकत्वात्काश्मीरमण्डलमभिव्याप्यवसित्वेतिभावः ॥ देवीशारिकाशृणातिहिंसतिदैत्यानितिव्युत्पत्याहिंसार्थकशृधातोः कर्तरिण्वुल्तस्याकशारकः स्त्रीरूपत्वाट्टापिप्रत्ययस्थादितीत्वेशारिकाइतिसिद्धम् ॥ किंचतन्नामिकादेवीसुशोभायुक्तेहरिगिरौतत्राग्निपर्वतेसाशारिकाशोभते प्रकाशते यस्याः शारिकायाः पूर्वस्थानात्पूर्वदिशीत्यर्थः ॥ शंकराचार्य्येणनिर्वृतं स्थापितलिंगमित्यर्थः ॥ शंकराचार्य्येतेनेतिकरणेतृतीया शोभनंशोभाभावेघञ् ॥ ततः अतइनिठनाविति इनिशोभाविद्यतेऽस्यास्तीतिशोभी अतएवनिभगिरिवरः इतिपाठोगिरिणांवरः इतियतश्चनिर्धारणे इतिनिर्धारणषष्ठ्याः ननिर्धारणे इतिषष्ठीसमासनिषेधे गिरिवर इतिसमस्तमयुक्तम् ॥ अतोनिभवर

गिरिः इतिनिभश्चासौवरः श्रेष्ठः गिरिः प्रकाशमानश्रेष्ठगिरिरित्यर्थः ॥ किंचप्रकाशमानः वरः शंकराचार्य्येणपाशुपतयोगसाधनतयाप्राप्तोयोमहादेवाद्वरः अणिमाद्यष्टसिद्धिपूर्वकसरस्वतीभूतः तेनोपलक्षितागिरिः इत्थंभूतलक्षणइतितृतीयातस्यसमासः प्रसिद्धश्चेदंसर्वशांकरदिग्विजयेदेवादवृत्ते वरः श्रेष्ठ इत्यमरः ॥ अस्तीतिशेषः ॥ यस्याः शारिकायाः व्यग्रचित्ताः विशेषेणाग्राणिपुरोभूतानि चित्तानिमनांसियेषांते अग्रेपुरस्तादुपरिपरिमाणेपलस्यच आलंबनेसमूहेच प्रन्तेचस्यान्नपुंसकम् ॥ अधिकेचप्रधानेच प्रथमेचाभिधेयवदितिमेदिनी ॥ इमेभवत्प्रत्यक्षीभूताः लोकाः जनाः प्रतिदिनंदिवः दिवः प्रति अव्ययंविभक्तीत्यादिनाऽव्ययीभावः सुपुष्पैः शोभनैः पुष्पैः पूजांकुर्वन्तियत्रकाश्मीरे शिवरतिमान् महादेवेप्रीतियुक्तः भुवः पृथिव्याः पालः रक्षकः श्रीप्रतापानुसिंहः संपत्यायुक्तः प्रतापपूर्वकसिंहः श्रीप्रतापसिंहः साक्षात्शोभतेचकास्तिसंपतिः श्रीश्चलक्ष्मीश्चेत्यमरः ॥ ५० ॥ ५१ ॥

मू० देवीयस्यास्तिवरदकराभातितापोज्वलेन ।
शौर्य्येनीतावसनृपकः विक्रमादित्यतुल्यः ॥
दानेभक्तौनृपतिवलितत्पौत्रल्हादान्ततुल्यः ।
मर्यादायांरघुपतिसमः बन्धुषूपेन्द्रतुल्यः ॥ ५२ ॥

देवीति ॥

वरदौकरौहस्तौयस्याः सावरदकरा एहिकामुष्मिकवरदानस्यपृथक्त्वात् भिन्नत्वादित्यर्थः ॥ उभयकरेणवरदानत्वमुक्तम् ॥ अतएवसमासेप्युभयत्वम् ॥ उक्तवरदानस्यभिन्नविषयत्वेऽप्येक करेणैववरदानंदेवतायाः प्रसिद्धमितिध्वनिः देवीशारिकायस्य प्रतापसिंहस्यराज्ञः रक्षिका

इतिशेषः ॥ अस्तिभवति यः इतिप्रथमान्तस्याध्याहारः यत्तापोज्ज्वलेन प्रतापस्यशुद्धतयाभातिप्रकाशतेयश्चशौर्य्येपराक्रमे द्रविणंतरः सहोबलं शौर्य्याणिस्थामशुष्मञ्चशक्तिः पराक्रमप्राणइत्यमरः ॥ नीतौराजनीतौ धर्म्मनीतौच नसमाः तुल्याः अन्येनृपायस्येत्यसमनृपकः दानेविक्रमादित्यतुल्यः दातृत्वेविक्रमादित्येतिप्रसिद्धराज्ञासमः यद्यपिबलिनाराज्ञासशरीरंस्वर्गादिभगवत्यर्पणंकृतंतेनतुल्योदानेनविक्रमादित्यः इतिदानेतत्सास्यमुचितं तथापिबलिना एककालेनैवभगवत्यर्पणेदेहेनद्वितीयवारंतद्देहेन दानयोग्यतेतिनतेनसादृश्यम् ॥ किंतुयावज्जीवंपरोपकारं प्रतिदिनङ्कुर्वताविक्रमादित्येनसाम्यमुक्तम् ॥ श्रीप्रतापसिंहस्यशरीरधारणंपरोपकारार्थमेवेतिभावः ॥ एतादृशराज्ञः प्रतापसिंहस्यराष्ट्रंसचचिरायुर्भवतु इतिध्वनिः ॥ भक्तौदेवतागुर्वादिभक्तावित्यर्थः ॥ सेवनेतत्सः बलिः पौत्रोयस्येतितत्पौत्रः सचासौल्हादान्तः तत्पौत्रल्हादान्तः बलिनृपतिश्च तत्पौत्रल्हादान्तश्चेतीतरेतरद्वन्द्वः तयोस्तुल्यः अर्थाद्बलिप्रह्लादतुल्यः यद्यपिबलेर्दानंप्रसिद्धंतथापिभगवत्यर्पणेनशरीरस्यभक्तेरेवबलीयस्त्वम् ॥ इतिभक्तौबलिनापिसाम्यं मर्यादायांपूर्वपूर्वप्रपितामहादि आगतपरिपाट्यांरघुपतिः श्रीरामचंद्रः तत्समः तुल्योबन्धुषु ज्ञातिषुसगोत्रबांधवज्ञातिबंधुस्वस्वजनाः इत्यमरः ॥ उपेंद्रतुल्यः श्रीकृष्णसदृशः यथाश्रीकृष्णेन गोपानांतत्रसहायः कृतः तद्वदितिभावः ॥ ५२ ॥

मू० आकूपारंसुविततयशः कीर्त्तनीयोऽस्तिलोके ।

आस्वर्गान्तंसुरदनुजसुश्रोत्रपूरीकृतस्य ॥

कीर्त्तिस्तम्भान्यवनिखनिताः सागरांतास्तुयस्य ।

यश्चस्तुत्याजयतिसकलंभूभुजांधर्म्मवर्गैः ॥ ५३ ॥

आकूपारमिति ॥

कूपारात्समुद्रात् आसमुद्रमर्यादीकृत्येत्यर्थः ॥ समुद्रोऽब्धिकूपार इत्यमरः ॥ आङ्मर्यादाभिविध्योरिति मर्य्यादार्थकाङाऽव्ययीभावः आकूपारंसुशोभनंविततांविस्तृतंयद्यशः तेनकीर्त्तनीयः गणनीयः ( कृतसंशब्दने ) चुरादिस्वार्थणिजंतादनीयर अस्तिभवति स्वर्गः देवलोकः अन्तश्चरमोयस्यसस्वर्गान्तः मर्त्यलोकः इत्यर्थः अन्तोजघन्यंचरममन्त्यपाश्चात्यपश्चिमाइत्यमरः ॥ तस्मात्स्वर्गान्तात् मर्त्यलोकादित्यर्थः ॥ आ आरभ्यइत्यास्वर्गान्तं आङ्मर्य्यादाभिविध्योरिति अभिविध्यर्थकाङाऽव्ययीभावः मर्त्यलोकमारभ्यदेवलोकपर्य्यन्तमित्यर्थः ॥ सुरदनुजयोः देवासुरयोः सुशोभनश्रोत्रेषुकर्णेषु अपूरः पूरः क्रियतेइतिपूरीकृतः तस्यसुरदनुजसुश्रोत्रपुरीकृतस्य देवासुरकर्णेषुजलप्रवाहवत् यशसाप्राप्तवानितिभावः पूरस्स्यादम्बुसंवृद्धौव्रणसंशुद्धिखाद्ययोरितिहैमः ॥ यस्यप्रतापसिंहस्य राज्ञः न्यवनिखनिताः नि नितरां अवनौपृथिव्यां पृथिवीपृथ्वीक्ष्मावनिर्मेदनीमहीत्यमरः ॥ अवटेआरोपिताः इत्यर्थः ॥ सागराः समुद्राः अन्तः चरमोयेषांतेसागरान्तः सागरपर्य्यन्तामित्यर्थः ॥ ( तुत्विवितिप्रशंसायां ) ॥ तुपादपूरणे भेदेसमुच्चयेऽवधारणपक्षांतरेनियोगेच प्रशंसायांविनिग्रहे इतिमेदनी अत्यन्तप्रशंसावानितिसूचितम् ॥ तदेवाह कीर्त्तिःयशः तदेव स्तम्भाः यशः कीर्त्तिः समज्ञाचेत्यमरः ॥ अत्यन्तविस्तृतधर्म्मस्योपष्टम्भकाः गृहाधारदारुणीवेत्यर्थः ॥ संतीतिशेषः भवंतिचपुनः यः भूभुजां राज्ञांकर्तरिक्विप् सकलंसमग्रंसमूहमितियावत् ॥ समग्रंसकलंपूर्णमित्यमरः ॥ धर्मः वेदप्राणीहितोधर्म्मः चोदनालक्षणोऽर्थोधर्मः इत्युक्तलक्षणः तस्यवर्गैः समूहैः करणभूतैः यास्तुतिः स्तवः तेनजयतिसर्वोत्कर्षेण वर्त्तते ॥ ५३ ॥

मू० मध्येयत्रप्रवहतिसदाकोटितीर्थस्यमूला ।

यत्रस्नात्वाप्रशमितमनोयोगिनस्सिद्धिमन्तः ॥
तेजोवृद्ध्यातृरणिनिकरंस्पर्द्धिमन्तोबभूवुः ।
तेषांस्वांतेक्षणमपिरहः शंकराचार्य्यलिंगम् ॥५४॥

मध्येइति ॥

यत्रकाश्मीरनगरेमध्ये अंतः न्यायावलग्नयोर्मध्यमन्तरेचाधमेत्रि ष्विातिरभसः काश्मीरमण्डलपश्चिमप्रान्तवर्त्तिवारामूल इतिनामस्थानंत त्रकटितीर्थं प्रसिद्धइतितीर्थंतस्यमूला आद्यंमूलंपार्श्वाद्ययोःरूढौविकुंज शिफयोः स्वीयेशिलायांचवशीकृतौ प्रतिष्ठायामितिहैमः ॥ वितस्तातीर्थं मित्यर्थः ॥ सदानित्यंप्रकर्षेणवहति अत्युत्कर्षतयागच्छति अनेनात्यंत पवित्रस्थानमितिसूचितम् ॥ यत्रवितस्तायांस्नात्वाप्रकर्षेण शमितानिशां तिंप्राप्तानिमनांसियेषांतेप्रशमितमनसः तेचयोगिनः प्रशमितमनोयोगि नः सिद्धिमन्तः अणिमाद्यष्टसिद्धिम्प्राप्तास्सन्तः तेजः त्विट्तेजस्त्विद्रेत सोर्बले नवनीतेप्रभावे अग्नावितिहैमः तद्वृध्यातृरणिः सूर्य्यः द्वादशा दित्यः इत्यर्थः ॥ तेषांनिकरंसंघातः समूहइतियावत् स्तोमौघनिकरव्रात वारसंघातसंचयाइत्यमरः ॥ स्पर्द्धिमन्तः ईर्ष्यावंतः सूर्य्याभ्युदयमसहन शीलाः इत्यर्थः ॥ सूर्य्योदयेतेषांजनसमूहशब्दद्वारा ध्यानेविघ्नंभवतीति भावः ॥ बभूवुः येसूर्य्याभ्युदयमसहनशीलाः तेषांयोगिनांस्वान्तेमनसि क्षणमपि किंचिदपिकालं रहः एकांतेस्थित्वास्थित्वेतिउत्तरश्लोकस्थपदम न्वितम् ॥ ५४ ॥

मू० स्थित्वास्वांतस्यकुरुविषयंसिद्धिदंतत्रकेतुं ।
एवंभूतारसिकरसिकाराजधानीतियस्य ॥
जीयात्त्वाम्मामदनमिवसश्रीप्रतापानुसिंहः ।
श्रीश्रीकण्ठस्सतितिविरसिकःशीघ्रजप्योदयालुः ॥५५॥

स्थित्वेति ॥

हेमनः सिद्धिदं अणिमाद्यष्टसिद्धिप्रदातारं तत्रकाश्मीरमण्डले केतु पताकारूपंकेतुर्नारुक्यताकारिग्रहोत्पातेषुलक्ष्मणीतिमेदिनी किंचतत्रे तिसार्वविभक्तिकस्तल् तस्यमंडलस्यलक्ष्मचिन्हमितिभावः ॥ शङ्करा चार्य्यप्रतिष्ठितंलिङ्गंलिङ्ग्यतेज्ञायते पुरुषनिष्ठपुरुषार्थविशेषोऽनेनेतिलिङ्गं प्रतिमा इतिपूर्वश्लोकस्थपदमन्वितमत्र शाकपार्थिवादित्वान्मध्यमपदलो पीसमासः शंकराचार्य्यलिङ्गम् ॥ स्वान्तस्यमनसः विषयं आश्रयं विषयः आश्रये इत्यमरः ॥ कुरुकुर्य्याः लक्ष्यंकुर्वित्यर्थः एवंभूतापूर्वोक्त प्रकारेणात्यन्तप्रशंसनीयतांप्राप्ता लब्धं प्राप्तविन्नंभावित मासादितंच भूतंचेत्यमरः ॥ रस्यते आस्वाद्यतेइतिरसः शृंगारादिः रस आस्वादनस्ने हनयोरितिचुरादिण्यन्तात् घञर्थेकविधानमितिकः रसोगंधरसेजलेशृंगा रादौविषेवीर्य्येतिक्तादौद्रवरागयोः देहधातुप्रभेदेच पारदस्वादयोःपुमा नितिमेदिनी ॥ सः रसोभक्तिः सेवनमेषामितिविग्रहेशैषिकः ठक्रसिकाः रसः रागः अनुरागः प्रीतिरितियावत् ॥ सविद्यतेयत्र अतइनिठनावि तिमत्वर्थायठन् प्रत्ययः रसिकारसिकानांभक्तिमतामित्यर्थः ॥ रसिका अनुरागवतीराजधानी इतिविवक्षिताप्रसिद्धा वा काश्मीरराजधानी त्यर्थः ॥ इतिस्वरूपेसान्निध्येविवक्षानियमेऽपिच्हेतौ प्रकारप्रत्यक्षप्रकर्षे ष्ववधारणेएवमर्थेसमाप्तौस्यादितिहैमः ॥ यस्यप्रतापसिंहस्ययद्यपिपि तामहादीनां जम्बूराजधानीप्रसिद्धातथाप्यस्य राज्ञः बहुकालनैरन्तर्य्य निवासकरणत्वादस्यापिराजधानीत्वम् ॥ सः श्रीप्रतापसिंहः प्रतापशब्द पूर्वकानुपश्चात् सिंहशब्दान्तसंज्ञोप्रभावेन कोशदण्डसेनातज्जन्यतेजसे त्यर्थः ॥ सप्रतापः प्रभावश्चयंत्तेजः कोशदण्डजमित्यमरः ॥ तेनसिंहः श्रेष्ठः सर्वराजसुमध्येऽतितेजस्वीतिभावः ॥ शीघ्रंद्रुतंयतातथाजेतुंशक्यः

शीघ्रजप्यः शीघ्रजेतुंशक्यः इत्यर्थः ॥ दयालुः दयावानिदमुभयविशेषणं राज्ञःपक्षेऽपिदेयम् ॥ सत्यांपार्वत्यांविशेषेणरागवान् इतिसतिविरासिकः श्रियासंपत्या संपत्तिःश्रीश्चलक्ष्मीश्चेत्यमरः ॥ युक्तः श्रीकंठः महादेवः श्रीश्रीकण्ठः मध्यमपदलोपीसमासः ॥ मदनमिवकंदर्पयथात्वांचित्तंमाजीयात्मावशीकुर्य्यात् राज्ञः तववशीभूतेसतिममकार्यहानिस्स्यादिति भावः ॥ ५५ ॥

मू० दीर्घीकुर्वन्मृदुसुनिनदंयोगिनामन्तरास्थं ।
प्रत्यूषेषुस्फुटितकमलामोदमैत्रीकषायः ॥
यत्रामूषांहरतिहृदयग्लानिमाज्ञानुकूलः ।
नद्यावातः प्रियगुरुयथासेवकेचाटुकारः ॥ ५६ ॥

दीर्घीकुर्वन्निति ॥

यत्रकाश्मीरे प्रत्यूषेषु अहर्मुखेषुप्रत्युषोऽहर्मुखङ्कल्यमित्यर्थः ॥ मृदुकोमलंमृदुस्यात्कोमलेस्वरे इतिविश्वः ॥ योगिनामन्तरास्थमन्तरात्मनिआसमन्तात् नतुकस्मिंश्चित्काले इत्यर्थः स्थितमाविर्भूतमित्यर्थः ॥ अन्तरमवकाशावधिपरिधानाऽन्तर्द्धिभेदतादर्थ्ये छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मानिचेत्यमरः ॥ शोभनं निनदंसुनिनदं ध्वनिं शब्देनिनादनिनदध्वनिरित्यमरः ॥ अनाहतशब्दमित्यर्थः ॥ दीर्घीकुर्वन्विस्तारयन्नित्यर्थः यावत्तद्विषयवासनातावदनाहतध्वने रनुवृतिरितिभावः ॥ स्फुटितानांविकसितानांकमलानांहृदयस्थकमलानामित्यर्थः ॥ प्राणरोहावरोहेणयत्प्रचलनं तेनप्रफुल्लानामित्यर्थः ॥ आमोदेनपरिमलेनसहमैत्रीसंसर्गः तेनकषायः सुरभिः रागद्रव्यकषायोऽस्त्रीनिर्यासेसौरभेरसे इतियादवः ॥ यद्यपिहृदयस्थकमलानांमांसविशेषत्वेनतत्स्थसौरभे यत्वस्थासंभवेऽपि

गौणामोदत्वमादत्वरोप्यते तेषामपिकमलसादृश्यत्वाकारेण गौर्वाहीकइतिवत् ॥ किंचरसायनसौगन्धौषधनिषेवणेन हृदयस्थकमलानामप्यामोदविशिष्टत्वेनामोदस्यमुख्यत्वम् ॥ तदुक्तं भागवतपंचमस्कंधे भरतप्रस्तावे व्रतमाजगरमास्थितः शयानएवाश्नातिपिबतिखादत्यवमेहतिहदतिस्म चेष्टमानउच्चारितप्रादिग्धोद्देशः तस्यहयः पुरीषसुरभिसौगन्ध्यवायुस्तंदेशं दशयोजनसमन्तात्सुरभिंचकार अन्यत्रविमर्दगंधीत्यर्थः ॥ विमर्दोत्थे परिमलगंधेजनमनोहरे आमोदः सो ऽतिनिर्हारीत्यमरः ॥ अंगानुकूलः गात्रसुखस्पर्शः ऐहिकयामूलाधारे रुद्धसतियेनमार्गेणसंस्पृशनागच्छति तन्मार्गपूर्वपरपार्श्वभागौ शीतयतीतिभावः ॥ शीतलंकरोतीत्यर्थः ॥ अन्यत्रगाढालिङ्गनदत्तगात्रसंवाहनेइत्यर्थः [ भवभूतिनाचोक्तम् ] अशिथिलपरिरम्भैर्दत्तसंवाहनानीति संवाह्यन्तेचसुरत श्रान्ताः प्रियैः ॥ नद्याः नदी अत्रवासनावातः प्राणवायुः नदीग्रहणं शैत्यद्योतनार्थं शुद्धवासनाविशिष्टप्राणवायुरित्यर्थः ॥ सेवकेसच्छिष्ये चाटुकरोतीति चाटुकारः कर्मण्यण् इति अण् प्रियवचन प्रयोक्तेत्यर्थः ॥ गुरुरिवामीषांयोगिनांहृदयग्लानिंहर्षक्षयंहरतिनुदति अयमाशयः कनिष्ठमध्यमोत्तमाधिकारिणां मध्येप्रथमाधिकारी कनिष्ठप्राणायामस्यासमाप्तसाधनकोयदि उत्तमप्राणायामसाधनेप्रवृत्तोऽत्यन्त श्रमेणमनसः हर्षग्लानिर्भवतीतिप्रसिद्धम् ॥ तदुक्तंहठप्रदीपकायाम् ॥ प्रातर्मध्यंदिनेसायमर्द्धरात्रेऽत्रकुंभकान् शनैरशीतिपर्य्यन्तचतुर्वारंसमभ्यसेत् ॥ कनीयसीभवत्स्वेदः कंपोभवति मध्यमे उत्तमेस्थानमाप्नोतिततोवायुं निबंधयेत् ॥ विशेषश्चतत्रैवटीकायां द्रष्टव्यः योगसिद्ध्यासर्वान्तर्यामीतत्प्रभवतीतिप्रियवचनोक्तिभिर्विस्मृतपूर्वपरिश्रमखेदाः शिष्याः स्वगुरुशिक्षांसफलयंतीतिभावः ॥ ५६ ॥

मू० अक्षोद्क्षुद्रैरुपचितवपुर्देहसँस्कारप्राणैः ।

बन्धुप्रीत्यापवनगतिभिर्दत्तनृत्योपहारः ॥
देहेष्वेषांसुकृतिसुरभिष्वध्वखेदन्नयेथाः ।
लक्ष्मींपश्यन्हृदयजनितांशुद्धरागाङ्कितेषु ॥ ५७ ॥

अक्षोद्रुद्धैरिति ॥

अक्षानीन्द्रियाणि प्राणनिर्गम मार्गाणीत्यर्थः ॥ उद्रुद्धानि प्रतिबद्धानियेषांतैर्बन्धौ स्वजनेप्रीतिः बंधुप्रीतिः तयाबान्धवोऽयमिति हेतोः प्रीतिरित्यर्थः ॥ पवनस्यवायोर्गतिभिः पवनगतिभिः पवनेनकर्त्रा गतिभिरितस्ततश्चलनैः करणभूतैः दत्तंनृत्यमेवोपहारः उपायनंयस्मै इतिदत्तनृत्योपहारं उपायनमुपग्राह्य मुपहारस्तथोपदमित्यमरः । यद्यपिपवनस्य गतिर्येषामिति व्यधिकरण वहुव्रीहेरल्पाज्ञायामितिज्ञापका द्युक्तत्वम् ॥ तथापि पवनगतित्वाभावात्तत्सदृशे लक्षणया पवनवद्गतिर्येषामितिविग्रहः ॥ अतएवतद्द्योतनाय लौकिकविग्रहे इव शब्दः प्रयुज्यते देहस्य पांचभौतिकस्य यःसंस्कारः रसायनसौगन्ध्यौषधनिषेवणेन शोभनंताद्विशिष्टप्राणं देह संस्कार प्राणं तैः मध्यम पदलोपीसमासः ॥ पात्रसंक्रामितगुणत्वात् आधेयस्येतिभावः ॥ शुद्धोयोरागोऽनुरागः प्रीतिरितियावत् ॥ यद्वारागः रसायनौषधिरसः तेनाङ्कितेषुचिन्हितेषु लक्षितेष्वित्यर्थः ॥ अंकोरूपक भेदांगचिन्ह रेखाजि भूषणे रूपकं शांतिकोत्संगस्थानेऽङ्कपाप दुःखयोरिति मेदिनी ॥ किं वातेनान्यत्र भेदविशिष्टेष्वित्यर्थः ॥ सुकृतंपुण्यमेव पुण्यश्रेयसी सुकृत वृषइत्यमरः ॥ सुरभिः शोभनोगंधोयेषु तेषु देहेषुशरीरेषु हृदयेमनसिज नितामुत्पन्नां लक्ष्मींसंपत्तिं संपत्तिः श्रीश्चलक्ष्मीश्चेत्यमरः ॥ पश्यन्सत् एषांसुकृतयशोवतां योगिनामित्यर्थः ॥ अध्वखेदं मार्गगमनेन यत् क्लेशंतन्नयेथाः अपनयन ॥ ५७ ॥

मू० भर्त्तुः कण्ठच्छविरितिगणैर्योगिनांवीक्ष्यमाणं ।
पुण्यंयायाः त्रिभुवनगुरोर्धामकाश्मीरकस्य ॥
धूतोद्यानंकुवलयरजोगंधिभिस्तस्यनद्याः ।
नीचैस्स्थायाःतटानिवसतांस्नानतिक्तैर्मरुद्भिः ॥५८॥

भर्त्तुरिति ॥

भर्त्तुः स्वामिनो नीलकण्ठस्य भगवतः कंठस्येव च्छविर्यस्यासौ कण्ठच्छबिरितिहेतो र्योगिनां गणैस्समूहः समुदायः समुदायस्समवायश्च योगणः इत्यमरः ॥ वीक्ष्यमाणंसत् ध्येयध्यात्रोरभेदेनैक्यात् मनसः नीलकंठच्छविरितिभावः ॥ किंच भृङ्गकीटवत् ॥ प्रियवस्तुसादृश्या- दतिप्रियं भवेदिति भावः ॥ त्रयाणां भुवनानां समाहार स्त्रिभुवनं तद्धितार्थेत्यादिना समासः तस्यगुरोः त्रिभुवनगुरोः काश्मीरस्य श्रीश- ङ्कराचार्य्यस्थापित महादेवस्यतस्यतदीश्वरत्वं त्रिभुवनेश्वरत्वेन किंचोग्रत पसाकश्यपमहर्षिणैतद्देशपवित्री करणार्थं संप्रार्थित महादेवस्तदाज्ञया गौरी वितस्तानदीभूत्वा पावयतीतिहेतोः तद्देशोपकारकत्वेन तदीश्वर- त्वमिति पुण्यं पावनं धाम उक्ताचार्य्य स्थापितमहादेवस्थानं शंकराचा- र्य्य पर्वत प्रसिद्ध मित्यर्थः ॥ यांयाः गच्छविध्यर्थेलिङ् ॥ श्रेयस्करत्वा- त्सर्वथा यातव्यमिति भावः ॥ अस्यमहात्म्यं बहुशः काश्मीरस्थ भृंगी- शकृतग्रंथेषु द्रष्टव्यम् ॥ नकेवलं मुक्तिस्थानमिदं किंतु विलासस्थान मपीत्याह धूतोद्यानमिति धूतं कंपितमुद्यानारामं यत्रतुकुवलयरजोगं धिभिरुत्पलयरागगंधवद्भिः तस्य शंकराचार्य्य नामकपर्वतस्य नीचै- रधःप्रदेशस्थायाः वहंत्याः नद्याः डल इति संज्ञकायाःतटंकूलं कूलं रोधश्चतीरंच तटंत्रिष्वित्यमरः ॥ तत्रवसतांस्नानं स्नानीयं ( चंदनादि करणेल्युट् ) स्नानीयेऽभिषवे स्नानमितियादवः ॥ तेनंतिक्तैः सुरभिः

कटुतिक्तकषायास्तु सौरभेचप्रकीर्त्तिता इति हलायुधः सौगन्ध्यातिशयार्थं विशेषणद्वयम् ॥ मरुद्भिर्मारुतैर्धूतोद्यानंकंपिताक्रीडमिति धाम्नो विशेषणम् ॥ ५८ ॥

मू० अप्यन्यस्मिन्शिखरिविलसच्छङ्कराचार्य्यधाम ।
स्थातव्यन्तेनयनविषयंयावदत्येतिभानुः ॥
सत्स्वान्तानाहतसुनिनदार्थंसमग्रंशिवस्य ।
कुर्वन्संध्यावलिपटहतांलप्स्यसे प्राप्यकाले ॥५९॥

हेमन्तः शिखरिविलसत्पर्वतोपरिदेदीप्यमानंशङ्कराचार्य्यस्थापितमहादेवस्यधाम स्थानं धामरश्मौगृहेदेहेस्थानेजन्मप्रभावयोरितिहैमः ॥ अस्मिन्पक्षेमध्यमपदलोपीसमासः ॥ धामशब्दस्यप्रभावपरत्वेशंकराचार्य्यस्वधामेति शंकराचार्य्यधामेतिषष्ठीतत्पुरुषेशंकराचार्य्यप्रभावः सामर्थ्यमितियावत् ॥ सूचितंशंकराचार्य्येणदिग्विजयेमंडनमिश्रंपराजित्यस्वविजयप्रभावोमूर्त्यास्थापितः इतिभावः ॥ शांकरदिग्विजयेप्रसिद्धामिति ॥ अप्यन्यस्मिन्संध्यातिरिक्तेऽपिकालेप्राप्यासाद्यतेतवस्थातव्यंत्वया स्थातव्यमित्यर्थः ॥ कृत्यानांकर्त्तरिवेतिषष्ठीयावत् ॥ यावदाकालेनभानुः सूर्य्योनयनविषयंदृष्टिपथमत्येतिअतिक्रामति अस्तकालपर्य्यन्तंस्थातव्यमित्यर्थः ॥ यावदित्येतदवधारणार्थेयावच्चतावच्चसाकल्पेऽवधौमानेऽवधारणेइत्यमरः ॥ किमर्थमतआह ॥ शिवस्यसन्ध्यायांसूर्य्यास्तसमयानन्तरमित्यर्थः ॥ बलिः पूजातत्रपटहतां आनकशब्दतां आनकः पटहोऽस्त्रीस्यादित्यमरः ॥ पटहोवाद्यविशेषोकिंचध्वनदम्बुदत्तां आनकः पटहेभेर्य्यांमृदङ्गे ध्वनदम्बुदेइतिमेदिनी ॥ कुर्वन्संपादयन् यद्यपिमनसः शब्दकर्तृत्वंशब्दाश्रयत्वंचाप्रसिद्धं तथापिमनएकाग्र्येणैवचींचीकूचीआनकध्वनिप्रभृत्यनाहतध्वनिपर्य्यन्तंशब्दश्श्रूयते इतिमनः करणत्वेऽपितं

त्कर्तृत्वमारोप्यतेकर्त्तृत्वंचस्वव्यापारेस्वतन्त्रत्वम् ॥ एवंचयद्यपिसामान्यशब्दः श्रोत्रेन्द्रियेणैवश्रूयतेतथापि अनाहतध्वनिस्तु मनरंतरेणश्रोत्रेन्द्रियेऽश्रूयमाणत्वात्श्रवणव्यापारे तस्यैवस्वतन्त्रत्वात्कर्त्तृत्व मित्यनुभवसिद्धम् ( तदुक्तंहठप्रदीपकायाम् ) मुक्तासनेस्थितोयोगी मुद्रांसंधार्यशाम्भवीं श्रृणुयाद्दक्षिणेकर्णेनादमन्तस्थमेकधीरिति ) ( तदुक्तंत्रिपुरासारसमुच्चये ) आदौमत्तालिमालाजनितरवसमस्तारसंस्कारकारी नादोऽसौवंशकस्यानिल भरितलसद्वंशनिस्वानतुल्यः घंटानादानुकारीतदनुचजलधिध्वानधीरोगभीरोगर्जन्यजन्य घोषः परइहकुहरेवर्त्ततेब्रह्मनाड्यां हठप्रदीपकायामपि श्रूयतेप्रथमाभ्यासेनादोनानाविधोमहान् ततोऽभ्यासेवर्धमानेश्रूयते सूक्ष्मसूक्ष्मकः ॥ आदौजलधिजीमूतभेरीझर्झरसंभवाः मध्येमर्दलशंखोत्थाघंटाकाहलजास्तथा ॥ अन्तेतुकिङ्किणीवंशवीणाभ्रमरनिस्वनाः इति नानाविधाःनादाः श्रूयंतेदेहमध्यगाः ॥ अन्योविशेषश्च तत्रैवद्रष्टव्योविस्तार भयान्नलिखितः सतांयोगिनांस्वान्तेहृदये योऽनाहतस्य न आसमंताद्धन्यतेविनाश्यते इत्यनाहतः ॥ नित्यमनिर्वच्छिन्नहृदयेस्थीयमान इत्यर्थः ॥ सचासौशोभनोनिनदः इतिसुनिनदः सुशब्देनानाहतशब्दस्यपरस्मिँल्लयेकारणत्वात्सच यः परमात्मरूपः इत्यतिशयत्वंसूच्यते ॥ ( तदुक्तंहठप्रदीपकायाम् ) ॥ अनाहतस्य शब्दस्य ध्वनिर्यत्रोपलभ्यते ध्वनेरन्तर्गतंज्ञेयंज्ञेयस्यान्तर्गतंमनः मनस्तत्रलयंयाति तद्विष्णोः परमंपदम् ॥ तस्यार्थं प्रयोजनंफलमितियावत् ॥ अर्थोहेतौनिवृत्तौविषयेवाच्ये प्रकारद्रव्यवस्तुषु इतिहैमः ॥ लप्स्यसेलभेः कर्त्तरिलृट् ॥ शंकराचार्य्य महादेवबलिपटहत्वेनविनियोगा त्ते अनाहतश्रवणफलंस्यादित्यर्थः ॥ प्राप्स्यसि यथान्यैस्सर्वैर्भक्तजनैरागत्यदेवताऽऽरार्तिकसमयेऽनेकविधवाद्यविशेषान्वादयद्भिरपूर्वफलमभिलप्स्यन्ते एवंतवैकाग्र्येणानाहतध्वनिर्निह्रादोश्रूयतेतस्यफलत्वंतथाप्राप्स्यसे इतिभावः ॥ ५९ ॥

मू० प्राणन्यासैरनिशनिनदाः कर्णरन्ध्रास्तुयेषां ।
देवेचेतः रचितवलयोहृत्प्रकाशप्रदीपाः ॥
तेत्वांत्वत्तः श्रमसुखकरान्प्राप्यशुद्धांसुवांच्छां ।
नेष्यंतेतेशिवचरणयुग्मेसतीसेव्यमाने ॥ ६० ॥

प्राणन्यासैरिति ॥

प्राणवायोर्न्यासैरुपनिधिभिर्निक्षेपैरितियावत् ॥ पुमानुपाधिर्न्यास इत्यमरः ॥ अनिशंनिनदोध्वनिर्विद्यंतेयेषामित्यर्शाद्यजन्तो निनदशब्दः अनाहतशब्दश्श्रूयमाण इत्यर्थः ॥ कर्णरन्ध्राः विवराः येषांयोगिनां देवे महादेवे चेतसामनसारचितापरिस्पन्दिता एकत्रीकृताः इतियावत् ॥ वलयः पूजोपरणाः सामग्र्याः इतियावत् ॥ यैस्तेराचितवलयः तस्मिन्स मयेहस्तरचितसामग्र्याः असम्भवात् ॥ चेतसाध्यानेनेदंपुष्यादि कल्पि तं पूजोपकरणंग्राह्यमिति भावः ॥ हृदि यः प्रकाशः अतिप्रसिद्धः आत्म साक्षात्कारइत्यर्थः ॥ प्रकाशोऽतिप्रसिद्धेस्यात्प्रहासातापयोःस्फुट इति विश्वः ॥ सर्वैर्यदर्थसर्वपरित्यज्ययस्यप्रत्यक्षीकरणार्थयत्नः क्रियतेसएवा तिप्रसिद्धइतिभावः ॥ सएवप्रदीपाः येषांतेहृत्प्रकाश प्रदीपाः तमस्का त्मकान्धकारनिवृत्तिपूर्वकदेवपूजायाः अपूर्वफलत्वादितिभावः ॥ तथा चस्मृतिः तेयोगिनः हेमनः त्वत्तस्सकाशात् त्वित्यप्यर्थेतु अपिश्रमे यत्नेऽपि सुखकरांशुद्धांनिष्कामांकापट्यरहितांवाञ्छांमनोरथं प्राप्यत्वां मनः सत्यापार्वत्यासेव्यमानेसेवनीयेशिवचरणयुग्मे महादेवपदयुगलेनेष्यं तेप्राप्स्यंते ॥ परैरुपकृतासन्तःसद्यःप्रत्युपकुर्वन्तीतिभावः ॥ साक्षात्का रलक्षणंशिवोपासनाफलंलप्स्यसे इतिभावः ॥ ६० ॥

मू० पश्चादुच्चैस्सुखकररजोमण्डलेनाभिलीनं ।
वृतिंत्वञ्चप्रतिदिनममूंराजसींस्वान्दधानम् ॥

नृत्यारम्भेकुरुपशुपतेः राजसींनित्यवृत्तिं ।
शांतोद्वेगस्तिमितनयनंदृष्टभक्त्युग्रसत्याम् ॥ ६१ ॥

पश्चादिति ॥

संध्यावल्यनन्तरंपशुपतेश्शिवस्यनृत्यारम्भेताण्डवप्रारंभे उच्चैर्महत्सुखकर रजसांरजोगुणानांमण्डलेनचक्रवालेनचक्रवालंतुमण्डलंसमूहमिति यावत् ॥ अभिलीनमभिव्याप्तंसत् ( कर्तरिक्तः ) चपुनः प्रतिदिनंदिवो दिवः प्रति अमूममविद्यारूपकार्य्यिणः प्रार्थनासमये औपकारकीं राजसींयद्यपिरजोगुणेनमनसश्चंचलत्वेऽपिकार्य्यविस्मरणेसंदेहस्तथापिअत्यन्त चलायमानस्य चित्तस्यकदाचित्स्थितिरपिसत्वादाह राजसीमितिनतुसात्विकीं तस्याःआश्रयणेनसत्वगुणत्वेनैकांतचित्तैकाग्रयेणरजस्तमसोर्निरोधत्वेनसात्विकवृत्तिविशेषरूपायांसंप्रज्ञात समाधौसत्यांममकार्य्यविस्मरणं स्यादितिभावः ॥ स्वामात्मीयांवृत्तिंस्वभावंदधानंस्वीकुर्वंत त्वंमनः तस्य महादेवस्यशांतः उद्वेगः मन्मथदाहसमयदर्शनभयंययोस्तेअतएवस्तिमितेनिश्चिलेनयनेयस्मिन्कर्म्मणितत्तथोक्तं ( उद्वेगस्त्वरितेक्लेशेभयेनश्वरगामिनीतिशब्दार्णवे ) दृष्टादर्शिता अन्तर्भावितण्यर्थोदृशिरत्र भक्तिः पूज्येष्वनुरागः ( भावार्थेक्तिन् ) उग्रेमहादेवेयस्याः सादृष्टभक्त्युग्रा ॥ विशेषणंविशेष्येणेति उग्रशब्दस्यपूर्वनिपातेप्राप्तेऽपि ( परत्वान्निष्टेतिसूत्रेणनिष्टान्तस्यपूर्वनिपातः ततः सतीशब्देनकर्म्मधारयेपुंवत्कर्म्मधारये इतिपुंवद्भावेदृष्टभक्त्युग्रसती तस्यांसत्यांभवान्यांराजसींरजोगुणयुक्तांवृत्तिंस्वभावंकुरु मन्मथदाहसामायिकांतमोगुणयुक्तांवृतिंनिवर्त्यरजस्साध्यपार्वतीरतिविषकांकुरु इतिध्वनिः ॥ किंचपार्वतीप्रसादतयाममापिकार्य्यंशीघ्रं भविष्यतीति भावः ॥ कदाचित्समयेध्यानावस्थितमहादेवस्यकृतवृत्तिविकृतिंस्वस्यविज्ञायक्रोधावेशेनतंददाह तस्यक्रोधनिवृत्तयेब्रह्मादिदेवैरागत्यकेनचित्प्रयत्नेनक्रोधावेशोनिवारितः इतिपुराण प्रसिद्धमिति ॥६१॥

मू० तांकेषांचिद्हृदयकमलेसुप्तवृत्तिगणानां ।
नीत्वारात्रिंचिरविलसनात्खिन्नवृत्तिप्रवृत्तम् ॥
दृष्टेसूर्य्येपुनरपिभवद्वाहयेदध्वशेषं ।
मन्दायंतेनखलुसुहृदामभ्युपेतार्थकृत्याः ॥ ६२ ॥

तामिति ॥

चिरंविलसनात् ध्यानावस्थितत्वात् खिन्नाद्वैधीभूता एकाग्र्यात् निवृत्तावृत्तेः प्रवृत्तिः प्रवर्त्तनंयस्यतत् खिन्नवृत्तिप्रवृत्तंसुप्तावृत्तेर्गणाः समूहाः येषांतेसुप्तवृत्तिगणाः तेषांकेषांचिद्योगिनामित्यर्थः ॥ हृदयकमले तांरात्रिंनीत्वासमाधौत्वेकाकारावृत्तिः तदतिरिक्तेकालेऽनेकविषयावृत्तिरित्युभयकोट्याः निवृत्तासुप्तावृत्तिरित्युच्यते इतिसुप्तवृत्तिहृदयानांयोगिनां हृदयाश्रयणेपूर्वंश्रमनिवृत्यातदनन्तरमपिकिंचिद्विश्रमात् सुखमितिभावः अतएवसुप्तवृत्तिगणानामित्युक्तम् ॥ दृष्टेसूर्य्येसतिदिनेसतीत्यर्थः ॥ पुनरप्यध्वशेषंवाहयेत् तथाहिसुहृदांमित्राणामभ्युपेताऽङ्गीकृता अर्थस्यप्रयोजनस्यकृत्याक्रियायैस्ते अभ्युपेतार्थसुहृदर्थाः इत्यर्थः ॥ सापेक्षत्वेऽपिगमकत्वात्समासः ॥ कृत्याक्रियादेवतयोःकार्य्येस्त्रीतियादवः ॥ मन्दायंतेखलुनमंदाभवंतिहिनविलम्बते इत्यर्थः ॥ ( लोहितडाज्भ्यःक्यष् ) ( इतिक्यष् ) वाक्यष् ( इत्यात्मनेपदम् ) ॥ ६२ ॥

मू० तास्मिन्कालेनयनसलिलंयोगिनांखण्डवृत्तेः ।
शान्तिन्नेयांस्त्वितररातिभिर्वर्त्मवायोस्त्यजातः ॥
शुद्धांवृत्तौमिलितविरजः सोऽपिजविस्यहर्त्तु ।
म्प्रत्यावृत्तोभवतिरुधिवायोर्वहुस्याच्चप्रेर्ष्या ॥६३॥

तस्मिन्निति ॥

तस्मिन्कालेपूर्वोक्तसूर्य्योदयकालेखण्डाद्विधावृत्तिर्व्यापारोयस्येति खंडवृत्तेःतस्ययोगिनः चित्तवृत्तिनिरोधिनः नयनसलिलंयोगोक्तमार्गेणगुरूपादिष्टसत्वेऽपि चित्तवृत्तेर्दैववशादेकाग्र्याभावादत्यंतदुःखेन यन्नेत्रजलंतत्शोभनेषु इतरेषुयोगसाधनातिरिक्तलौकिकसाधनेष्वित्यर्थः ॥ येरतयस्ताभिश्शांतिर्न्नेयंनेतव्यम् ॥ नयतिद्विकर्म्मकः ॥ एकत्रोपराममनस्कस्यात्यंतदुःखिनोदुःखेननिसृतनयनाश्रोःतददुखानिवृत्तिपूर्वकाश्रुनिवृत्तयेऽन्यान्यविषयवार्तयायथादुःखानिवृतिस्तद्वदितिभावः॥ अतोहेतोर्वायोर्वर्त्ममार्गत्यजतदाधारसुषुम्नांप्रविश्यवायोर्निर्गममार्गमारुंधः इत्यर्थः ॥ तवतत्रप्रवेशेवायुः रुध्यात् तद्रुद्धेसतिपुनरपिमनसोनैश्चल्याभावात्पूर्ववत् दुःखंस्यादितिभावः ॥ सोऽपिवायुरपिप्राणवायुरित्यर्थः ॥ जीवस्यजीवात्मनः इत्यर्थः ॥ शुद्धयांसत्वगुणयुक्तायांवृत्तौमिलितांमिश्रितंय्याद्विशेषरजस्तद्धर्त्तुंनिवर्त्तयितुंबहिर्न्निस्सारयितुमितियावत् प्रत्यावृतः प्रत्यागतोयथाकस्यचित्कुड्यान्तार्हितधूमसमूहवायुर्न्निस्सरतीतिभावः ॥ भवतित्वयिमार्गमितिशेषः रुणद्धीतिरुधत्तस्मिन्रुधि ( कर्त्तरिक्विप् ) वायोः प्राणवायोर्वद्ध्वः ईर्ष्या अधिकविद्वेषः स्याद्भवतु ( पादपूरणेच ) प्रायेणेच्छाविशेषविघातात् रोषोद्वेषश्चसर्वेषांभवतीतिभावः ॥ किंचात्मानंचाकर्मीशानंविष्णुविद्विष्टियोनरः॥ श्रेयांसितस्यनश्यंति रौरवंचध्रुवम्भवेत् ॥ आत्मानंवायुमित्यर्थः॥ इतिनिषेधात्कार्य्यहानिर्भविष्यतीतिध्वनिः ॥६३॥

मू० नाभेर्वायोचटुलरहितेचेतसीवप्रसन्ने ।

शुद्धात्मत्वंप्रकृतिसुभगंलप्स्यसेस्वप्रवेशम् ॥

॥ तस्मादस्याः विकचकुमुदान्यर्हसित्वन्नधैर्य्यात् ।

मोघीकर्त्तुञ्चटुलपवनोद्वर्तनप्रेक्षितानि ॥ ६४ ॥

नाभेरिति ॥

नाभेरित्याधाराधेयभावसंबन्धेषष्ठी चटुलंतरलंतद्रहितेसमाने इत्यर्थः ॥ समानोनाभिदेशस्थः इत्यमरः ॥ चटुलंतरलं चैवपारिप्लवपरिप्लवमित्यमरः ॥ दोषरहितेइत्यर्थः ॥ चेतसीवप्रसन्नेशुद्धे रजोगुणरहिते इत्यर्थः ॥ शुद्धोनिर्मलः आत्मास्वयंयस्यसशुद्धात्मातस्यभावः शुद्धात्मत्वं अतएवप्रकृत्यालिङ्गेनस्वरूपेणेतियावत् ॥ प्रकृतिर्योनिलिंगेचेत्यमरः ॥ सुभगमधिकभाग्यवत् ॥ सुंदरेऽधिकभाग्येचदुर्दिनेतरवासरे तुरीयांशेश्रीमतिचसुभगइतिशब्दार्णवे ॥ स्वस्यात्मनः प्रवेशे प्राणवायौप्राप्तमित्यर्थः ॥ लप्स्यसेतस्माद्वायुद्वारा नाभौप्रवेशावश्यंभावित्वात् ॥ तस्याः नाभेः चटुलेनशीघ्रेणत्रिषुस्याच्चटुलंशीघ्र मितिविश्वः ॥ पवनेनवायुना यदुद्वर्त्तनानि इतस्ततश्चलनानिएवप्रेक्षितान्यवलोकनानियेषांतानि एतावदेवनाभेरनुरागलिंगम् ॥ विकचानिप्रफुल्लानिप्रफुल्लोत्फुल्लसम्फुल्लव्याकोशविकचस्फुटाः इत्यमरः ॥ कुमुदानिकमलानि धैर्यात् धार्ष्ण्याद्वैमत्यादितियावत् ॥ मोघीकर्तुंविफलीकर्तुंनार्हसिनाभिरितिउदारानायिका ध्वन्यते तस्याःप्रसन्नेऽनुरक्तत्वात् ॥ जगत्स्रष्टुर्ब्रह्मणोविष्णुनाभेराधारत्वात् ॥ आधेयस्यब्रह्मणोजगत्कर्तृत्वाधारत्वं नाभ्याधारेऽऽरोप्यतेइति उदारनायिकात्वंनानुरक्ताविप्रलब्धव्येत्यर्थः ॥ ६४ ॥

मू० तस्याः किञ्चित्करधृतमिवप्राप्तनाभिस्थवायुं ।
नीत्वावांछाविषयवसनंरञ्चितंराजसेन ॥
प्रस्थानंतेकथमपिसखेलम्बमानस्यभावि ।
ज्ञात्वागन्धङ्कमलवसतिंकोविहातुंसमर्थः ॥ ६५ ॥

तस्याः इति ॥

हेसखेप्राप्तोमूलाधारनिरोधेनोपरिगतः इत्यर्थः ॥ नाभिस्थः समानः वायुर्येनतथोक्तम् ॥ अतएवकिंचिदीषत्करधृतंहस्तावलम्बितमिव स्थितंराजसेन रजोगुणेनरञ्चितंरागीकृतंतस्याः नाभेर्वाञ्छाविषयः मनोरथस्ययःज्ञाता नित्यं सेवितःयद्विषयकंमनोरथमित्यर्थः ॥ विषयोयस्ययोज्ञातः इत्यमरः ॥ तदेववसनंवस्त्रंनीत्वा अपनीयपूर्वश्लोकोक्त्याशुद्धमपिरजोगुणरहितमपितस्यविषयवासनामादायैवगमनम्भविष्यतिनतुशुद्धस्य तस्यवासनाविषयत्वाभावाद्गमनमयुक्तमितिभावः ॥ प्रस्थानसमयेप्रेयसीवसनंग्रहणंविरहतापविनोदनार्थमिति प्रसिद्धम् ॥ लम्बमानस्यवासनाभरेणोत्तरोत्तरेविषये प्रवृत्तस्य ते प्रस्थानंप्रयाणंकथमपिकृच्छ्रेणभाविकृच्छ्रत्वे हेतुमाह ॥ कमलेहृदयकमले वसतिर्निवासोयस्यतदगन्धंघ्रात्वाकोविहातुंत्यक्तुंसमर्थःनकोऽपीत्यर्थः ॥ ६५ ॥

मू० तत्रस्थानांहृदिनिवसतागाहमानेनतत्र ।
पथ्यंदुःखंविगतभवताक्ष्यसेतत्सुशैलम् ॥
अग्रेगौरंतुहिननिकरैः प्रोच्यशृङ्गामरेशं ।
उच्चशृङ्गान्निपतितजलैर्योगिमार्गानुरोधैः ॥ ६६ ॥

तत्रस्थानामिति ॥

तत्रस्थानां वितस्तातीरनिवासिनां योगिनामिति शेषः ॥ हृदिमनसिनिवसतास्थितिकुर्वतानिवसान्नित्यर्थः ॥ तत्र वितस्तायां गाहमानेनस्नानंकुर्वतापथिभवंपथ्यं ( दिगादिभ्योयत् ) इतियत् ॥ नस्तद्धितइतिटिर्लोपः ॥ दुःखंसुखविरोधिनामित्यर्थः ॥ विगतोवीतः प्राप्तः इतियावत् ॥ विगतौवीतनिष्प्रभौइतिरुद्रः विगतोभवादितिवि

गतभवत्तेनविगतभवतासापेक्षत्वेऽपिगमकत्वात्समासः ॥ अग्रेपुरः प्रसिद्धम् ॥ अमरेशशैलमित्यर्थः ॥ तुहिननिकरैर्हिमसमूहैर्गौरंसितं गौरःपीतेरुणेश्वेतेविशुद्धेचाभिधेयवत् ॥ इतिमेदिनी ॥ प्रकर्षेणोच्चान्युन्नतानिश्रृंगानिशिखराणियस्यतत् श्रृंगंप्रभुत्वेशिखरेचिन्हेक्रीडाम्बुयन्त्रकेपाषाणोत्कर्षयोश्चापिश्रृंगःस्यात्कूर्चशीर्षके ॥ इतिमेदिनी ॥ तत् अमरेशं प्रोच्चश्रृंगामरेशं अमरनाथसंज्ञकशैलमित्यर्थः ॥ वक्ष्यसे ( वोढाकर्म्मणि यक् ) ॥ प्राप्स्यते इत्यर्थः ॥ यस्यामरेशसंज्ञकस्य अमरनाथसंज्ञकस्येत्यर्थः ॥ शृंगाच्छिखरात्योगिमार्गानुरोधिभिरत्यन्तशीतकरत्वान्मार्गादृश्यकत्वाद्वा इतिभावः ॥ यैर्जलैर्वारिभिः पादयोविक्षेपोदुःखंतत्कर्तुंशीलः इतिपादविक्षेपकारीकठिनोनीहारोऽवश्यायोभवतिकठिनोनीहारोभवतीतिपदंयैरितिचोत्तरश्लोकस्थपदमन्वितम् ॥ ६६ ॥

मू० यैर्नीहारोभवतिकठिनः पादविक्षेपकारी ।
उक्तंशैलंसमधवलितंमार्गिणांप्राणरोधी ॥
वायुर्यत्रप्रवहतिसदाशीकरैः संप्रयुक्तः ।
यस्याधस्ताज्जलकणमुचाकन्दराकान्तशीता ॥६७॥

यैर्नीहारइति ॥ समंसमन्तात् धवलितंश्वेतंतुषारैश्श्वेतमित्यर्थः ॥ उक्तममरनाथाख्यंशैलं यत्रशैलेशीकरैर्हिमाम्बुकणैः संप्रयुक्तः संमिलितः मार्गिणां कैलासपथगामिनामित्यर्थः ॥ प्राणंरोद्धुंशीलः प्राणरोधीहिमसंप्रयुक्तत्वादत्यन्तशीतलतयाविक्षेपेणप्राणसंचाराभावादितिभावः ॥ वायुः प्रवहतिचलतियस्यामरनाथशैलस्याधस्तादधोदेशेमूलप्रदेशेइत्यर्थः॥ जलकणैर्वारिप्रुड्भिर्मुच्यतेयत्रेतिजलकणमुचा (बाहुलकादधिकरणेघञ् )कान्ताचासौशीताकान्तशीता सुन्दराशीतला च कन्दरागुहाअस्तीतिशेषः॥६७॥

मू० लिङ्गंयत्रामृतरसमयंह्रासवृद्ध्यासुगीतं ।

कालेकालेमुदितमनसः प्राप्नुवन्तीहदेवाः ॥

यन्त्यन्यस्मिन्नपितुसुमनो लिङ्गमुक्तंसुप्राप्य ।

स्थातव्यंतेहृदयविषयंयावदायातिशम्भुः ॥ ६८॥

लिङ्गमिति ॥

हेशोभनमनः सुमनः यत्रकंदरायां अमरनाथगुहायामित्यर्थः॥ ह्रासवृध्द्यान्यूनाधिक भावेन शोभनंगानंयस्येतिसुगीतं यथाचन्द्रोमासस्यकृष्णशुक्लपक्षयोर्ह्रासवृद्धिभ्यांकलाभिः न्यूनाधिकभाववान् तथाऽमरनाथलिंगंमासस्यकृष्णशुक्लपक्षयोः ह्रासवृद्धिभ्यांकलाभिर्न्यूनाधिक भाववदितिप्रसिद्धम् ॥ लोकेएतच्चसर्वं अमरनाथमाहात्म्येद्रष्टव्यम् ॥ अमृतरसमयं अमृतएवरसः तस्यप्राचुर्य्यं ( प्राचुर्य्यार्थेमयट् ) लिङ्गमस्तीतिशेषः ॥ इहास्यांगुहायांकालेकालेप्रतिवर्षं श्रावणपूर्णिमायामित्यर्थः ॥ मुदितंप्रसन्नं मनोयेषांतेमुदितमनसः मनुष्याः प्राप्नुवन्ति आगच्छंति देवास्तु अन्यस्मिन् उक्तकालादतिरिक्तेकालेऽपियन्तिप्राप्नुवंति उक्तं अमृतरसमयंलिङ्ग मित्यर्थः ॥ कन्दरांगुहां अमरनाथगुहास्थामित्यर्थः ॥ वसुप्राप्यसृष्ट्वन्तःकरणेन गत्वाहेहृदय पुनरुक्तिः अवश्यद्योतनार्थाशंभुर्महादेवः यावत् यावताकालेनतेविषयंसमक्षमायाति तावत्त्वया मनसास्थातव्यम् ॥ स्थेयमस्तीतिशेषः ॥ अन्यथाकष्टतरेणैतद्दूरतरगमनमनर्थकंस्यात् ॥ नतुशीतभयाच्छीघ्रमग्रेगन्तव्य मितिभावः ॥ ६८॥

मू० तैः पूजायांपवनपटहानांहलानांसमग्रं ।

संसर्पन्त्या अमररसवत्याः निनादै फलंच ॥

यत्रस्नात्वाविमलहृदयंलप्स्यसेयाह्युदीचीं ।
आसीनानांसुरभिताशिलेयोगिनामन्तरास्थम्॥६९॥

तैः पूजायामिति ॥

तैर्देवादिभिस्सहपूजायामर्हणायांपवनानि प्राणवायवएवपटहढक्काः स्याद्यशः पटहोढक्काइत्यमरः ॥ तेषांसमग्रमविकलंफलं लाभंफलंहेतुकृ तेजातीफलेफलकसस्ययोः त्रिफलायांचकक्कोले शस्त्राग्रेव्युष्टिलाभयोरि तिहैमः ॥ संसर्पन्त्याः वहन्त्याः अमररसवत्याः अमरगङ्गायाः नि नादैः शब्दैर्लप्स्यसेप्राप्स्यसि चपुनः यत्रामरगङ्गायांस्नात्वास्नानङ्कृत्वा विमलहृदयंशुद्धमनस्त्वं सुरभितासुरभिकृताः शिलायत्रेतिसुरभितशिलं तस्मिन्पर्वतरसायनसौगन्ध्यौषध निषेवणार्थपेषणेन सुरभितानामिति भावः ॥ आसीनानामुपविष्टानांयोगिनामन्तरास्थं हृदयस्थंसदुदीचीमुत्त रांदिशंकैलासमितियावत् ॥ याहिगच्छ ॥ ६९ ॥

मू० प्राणरोहैस्सततविमलंगौरमुत्प्राप्यनाभौ !
वक्ष्यस्यध्वश्रमविनयनेवायुनाऽधिष्ठितेच ॥
तेषांस्थित्वासमयगतिकंयत्रकैलासमार्गे ।
शोभांशुभ्रामुनिभशिवतोजीवमिश्रोपमेयाम् ॥७०॥

प्राणरोहैरिति ॥

प्राणवायोः रोहावरोहैस्सततमनारतं विमलंशुद्धं गौरमवदात्तं अव दातस्मितोगौरः इत्यमरः॥ उत्प्राप्यातिशयतयेत्य ( आङ्पूर्वक इणः ल्यब न्तस्येति ) तेषांयोगिनामध्वनियः श्रमोदुःखं तद्विनयने दूरीकरणेतत्त त् स्थानीययोगिनां प्रत्येकहृदयेप्राणवायुवेगेन तत्रतत्रागमनमेवाध्वश्र

मः इतिभावः ॥ वायुनासमानवायुनेत्यर्थः ॥ समानोनाभिदेशस्थ इत्य मरः ॥ अधिष्ठिते आश्रयेनाभौस्थित्वा तत्रस्थित्यादूरदेशाध्वगमनश्रम निवृत्तिर्भविष्यतीतिभावः ॥ तदुक्तम् ॥ चलेवातेचलंचित्तंनिश्चलेनि श्चलंभवेदितिसमयेवर्षर्त्तौ गतिर्यत्रेतिसमयगतिकं अन्यकाले शीतभया द्योगिनोऽपिनगच्छन्तीतिध्वनिः ॥ तस्मिन्समयगतिके कैलासे ( क्री डार्थककेलधातोः ) ॥ ( सार्वधातुभ्यइनिः ) ( इतीनिः ) केलिः द्रवके लिपरिहासः क्रीडालीलेत्यमरः ॥ साप्रयोजनमस्येतिकेलः ( तस्येदमि त्यण्) ॥ आस्यन्तेदेवादयोऽस्मिन्नित्यासः कैलासश्चासावासश्चेतिकैला सः महादेवादिदेवानां क्रीडापूर्वक निवास स्थानमित्यर्थः ॥ कृष्णसर्प वन्नित्यसमासः यत्रयस्मिन्ननिभाशिवतः उपमारहितशिवस्यनिर्गुणस्ये तियावत् ॥ निससंकाशनीकाशप्रतीकाशोपमादय इत्यमरः ॥ जीवाभि श्रोपमेयांजीवोपाधिविशिष्टां शुभ्रांशुद्धां नतुतमोयुक्तांकिन्तुराजसीशोभां छविंवक्ष्यासिधरिष्यसि अन्यथासात्विकवृत्या विषयवासनायाः अभावा त् ॥ तत्रागमनस्यासंभवस्स्यादितिभावः ॥ समकार्य्यहानिस्यादिति ध्वनिः ॥ ७० ॥

मू० तत्रव्यक्तंदृषदिचरणन्यासमर्द्धेन्दुमौलेः ।
शश्वत्सिद्धैरुपचितबलिंभक्तिनम्रःपरीयाः ॥
यस्मिन्दृष्टेकरणविगमादूर्ध्वमुद्धूतपापाः ।
संकल्पन्तेस्थिरगणपदप्राप्तयेश्रद्दधानाः ॥ ७१ ॥

तत्रेति ॥

तत्रामरनाथशैले अर्द्धश्चासाविन्दुश्चेत्यर्द्धेन्दुः अर्द्धः खण्डेसमेंऽशके इतिविश्वः ॥ सःमौलौयस्येत्यर्द्धेन्दुमौलिः तस्यमहादेवस्येत्यर्थः ॥ दृष-

दिशिलायांपाषाणप्रस्तरग्रावोपलाश्मानशिलादृषदित्यमरः ॥ सिद्धैर्योगिभिःसिद्धनिष्पत्तियोगयोरितिविश्वः ॥ शश्वत्सदा उपचितारचितावलयः पूजासामग्र्यः बलिःपूजोपहारयोरितिविश्वः ॥ यत्रात्रपर्वतेमहादेवःशीतनिवृत्तिहेतोः कदाचित्तस्थौइतिभक्त्युत्कर्षंदर्शयन्तः परमेश्वरेनित्यंपूजां चक्रुरितिभावः ॥ चरणन्यासंपदानामुपवेशनंविन्यासांचिन्हामितियावत् ॥ व्यक्तंस्फुटंभक्त्याभक्तिः पूज्येष्वनुरागः तयानम्रंविनयिसत्परीयाः प्रदक्षिणङ्कुरु ( परिपूर्वकगत्यर्थकेणः ) ( प्रेरणेलिङ् ) यस्यमहादेवचरणचिन्हस्य ( आइतापदर्थे ) ॥ किंचिदृष्टेदर्शनेसतिकरणावगमात्कायत्यागात् करणंकारणेकायेसाधनेन्द्रियकर्म्मसुकायस्थेव्रतबंधेचनास्त्यप्रभेदयोः पुमान्शूद्रविशोः वानरादौचकीर्त्यते इत्यजयः ॥ ऊर्द्धमनन्तरमुद्धूतपापाः निवृतकल्मषाः श्रद्धधानाः श्रद्धावंतःगणानांप्रमथादिमहादेवगणानामित्यर्थः ॥ यत्पदंकैलासस्थानंगणपदंतस्यप्राप्तिरितिगणपदप्राप्तिःस्थिराचासौगणपदप्राप्तिरितिस्थिरगणपदप्राप्तिः तस्यैसंकल्पन्तेसम्यक्समर्थाः भवन्तिाकिञ्चास्थिरंशश्वत् गणानांप्रमथानांपदंस्थानंतस्यप्राप्तयेगणाःप्रमथसंख्यौघाइतिवैजयंतीक्लृप्तेः पर्य्याप्तिवचनस्य अलमर्थत्वात् तद्योगेनमस्स्वस्तीत्यादिनाचतुर्थी ( अलमितिपर्य्याप्त्यर्थग्रहणमितिभाष्यकारः ) अव्यक्तंव्यञ्जयामासशिवश्रीचरणद्वयं हिमाद्रौशाम्भवादीनांसिद्धयेसर्वकर्म्मणाम् ॥ दृष्ट्वाश्रीचरणन्यासंसाधकः स्थितयेतनुम् ॥ इच्छाधीनशरीरोहिविचरेच्चजगत्त्रयमितिशम्भुरहस्ये ॥ ७१ ॥

मू० संध्यायन्तेहृदयपवनैर्योगिनापूर्य्यमाणाः ।
सँय्युक्तैस्तैस्त्रिपुरविजयोगीयतेमुख्यकामैः ॥
स्वान्तेशब्दोमुरजइवचेत्कन्दरेषुध्वनिस्स्यात् ।
सङ्गीतार्थोननुपशुपतेस्तत्रभावीसमग्रः ॥ ७२ ॥

संध्यायंते इति ॥

हेमनः मुख्यकामैः प्रधानाणिमादिसिद्धिभिरापूर्य्यमाणाः परिपूर्णाः तद्विषयवासनाराहिताइत्यर्थः ॥ योगिनोहृदयपवनैर्हृदयस्थप्राणवायुभि र्हृदिप्राणइत्यमरः ॥ सन्ध्यायन्तेमन्त्रंकुर्वन्तीत्यर्थः ॥ नतुगायन्तिनिर्वा सनत्वादितिभावः ॥ तदुक्तंहठप्रदीपकायाम् ॥ अपानमूर्धमुत्थाप्यप्राणा न्कण्ठादधोनयेत्योगिजराविमुक्तः सन्शोडषाब्दवयोभवेदितिसंयुक्तैराणि मादिसिद्ध्यभिलाषवद्भिरित्यर्थः ॥ कंदरेषुदरीषुदरीतुकन्दरोवास्त्रीत्य मरः ॥ त्रयाणांपुराणांसमाहारास्त्रिपुरम् ॥ तद्धितार्थोत्तरपदइतिसमासः॥ पात्रादित्वान्नपुंसकत्वम् ॥ तस्यविजयस्त्रिपुरविजयः तारकासुरस्यत्रीणि सुवर्णादिमयानिपुराणिविजयते इतित्रिपुरविजयः गीयतेत्रिपुरासुरस्यपरा भवोयैर्गानंक्रियतेइत्यर्थः ॥ तेसकामा इतिध्वनिः ॥ ततवशब्दःतवश्रव णविषयोऽनाहतशब्दःमुरजेवाद्यभेदध्वनिरिवमुरजध्वनिरिवेत्यर्थः ॥ स्या च्चेत्तर्हितत्रचरणसमीपेपशुपतेर्नित्यसन्निहितस्य शिवस्यसंगीतंसम्यग्गीतं गानंतदेवार्थस्संगीतार्थः संगीतवस्तु अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्ति ष्वित्यमरः ॥ समग्रः संपूर्णोभावीननुभविष्यतिखलु ( भविष्यति गम्यादय ) इतिभविष्यदर्थेणिनिः ॥ ७२ ॥

मू० प्रालेयाद्रेरुपतटमतिक्रम्यतत्तन्मनांसि ।
हंसस्वान्तंनिविशविशदंवर्त्मगन्तुःसुशीघ्रम् ॥
तेनोदीचीन्दिशमनुसरेः प्राणमार्गेणगच्छन् ।
सिद्धान्यस्यांशिवरतियुतान्दृष्टिमार्गंनयेथाः ॥७३॥

प्रालेयेति ॥

प्रालेयाद्रेर्हिमाद्रेरुपतटं तटसमीपे तत्तद्वीप्सायांद्विरुक्तिः योगिनांम

नांसि अतिक्रम्योपित्वोल्लङ्घ्येत्यर्थः ॥ अनुसरेरित्यनागतेन सम्बन्धः गन्तुः कैलासं गमनेच्छोःतवेत्यर्थः ॥ सु ॥ सुष्टुशीघ्रलघुप्रापकंवर्त्ममार्गं विशदंशुद्धंनकश्चित्तत्रप्रतिबन्धककारणमस्ति शुद्धवासनायुक्तव्यतिरिक्त योगिनांतत्रगमनासम्भवात् ॥ हंसस्वान्तं हंससंज्ञकयोगिनांमन्तःकरणं निविश तेनहंसस्वान्तवर्त्मनाद्वारेणप्राणमार्गेणगच्छन् उदीचीमुत्तरांदिशम नुसरेरनुगच्छ यस्यांदिशिशिवरतियुतान्महादेवप्रीतियुक्तान्सिद्धान्योगि नःदृष्टिमार्गेनेत्रपथंनयेथाः वहेः नयतिर्द्विकर्म्मकः ॥ ७३ ॥

मू० गत्वाचोर्ध्वंदशमुखतयाशैथिलीभूतसानोः ।
कैलासस्यात्रिदशहृदयेन्दोस्सुचेतोऽतिथिस्स्याः ॥
देवानाम्वावुपनिवसतांदीर्घदेशाच्छ्रमित्वं ।
त्वद्यात्रायाः शुभकरफलज्ञापकस्याम्बिकायाः ॥७४॥

गत्वाचोर्ध्वमिति ॥

हिमाद्रेस्तटस्ययोगिनांमनोऽतिक्रमानन्तरम् ॥ दशमुखस्यरावणस्य तपसाशैथिलीभूतोविश्लेषंप्रापितः सानुः शृंगंयस्यसदशमुखतयाःशैथिली भूतसानुः तस्यकदाचिद्देवता तिरस्कारायाराधितो महादेवोयद्यनेकप्रका रेणप्रसन्नोनबभूवतदाबलवतातेनबलरूपतपसाकैलासप्रकंपनेनस्वतः पार्व त्याः कण्ठाश्लेषानन्देनस्वयमेववशीभूतस्तस्यवरंददावितिपुराणप्रसिद्ध म् ॥ त्रयोदशसंख्यावयः परिमाणमेषामस्तीतित्रिदशाः संख्ययाऽव्यये त्यादिनाबहुव्रीहिः बहुव्रीहौसंख्येय इत्यादिसमासान्तोऽजितिक्षीरस्वा मीत्रिदशानांदेवानांहृदयान्यन्तःकरणानि तेषामिन्दुः ( उन्दीक्लेदन ) उनत्ति आर्द्रीकरोतिआल्हादयतीतियावत् ॥ इतिव्युत्पत्या ( उक्तधातोः उन्देरिच्चादेः इति उः प्रत्ययः ) आदेश्चेत्वमितीन्दु श्चन्द्रः प्रकाशकः

इत्यर्थः ॥ कैलासस्यस्फटिकसदृशत्वात्स्वच्छत्वात्प्रकाशकत्वमुक्तम् ॥ स्वच्छवस्तुषुसर्वंप्रकाशतेइतिध्वनिः ॥ अम्बिकायाः गौर्य्याः त्वत्तवयात्रायाः यापनोपायस्ययात्रानुयायनोपायेगतौदेवार्चने इतिविश्वः ॥ शुभकरस्यकल्याणदायकफलस्यप्रयोजनस्य ज्ञापकस्यसूचकस्य ऊर्ध्वमुपरिगत्त्वा । तत्रेतिशेषः ॥ तत्रोपानिवसतां निवासिनांदेवानां देवास्सदातत्रोपवसन्तीतिभावः ॥ त्वंदीर्घदेशाद्दूरमार्गागमनादितिहेतोरित्यर्थः श्रमितकितं शोभनंचेतस्सुचेतः तस्यसुचेतसः तस्यातिथिरितिसुचेतोऽतिथिरावेशिकस्स्याः स्युरावेशिकआगन्तुरतिथिर्नागृहागते इत्यमरः ॥ दूराच्चोपगतश्रान्तंवैश्वदेवउपस्थितम्अतिथिंतंविजानीयान्नातिथिःपूर्वमागतः इतिव्यासः ॥ नमित्रमतिथिंकुर्य्यान्नैकग्रामनिवासिनम् अदृष्टमद्भुतंपूज्यंतत्कालेसमुपस्थितम् ॥ चौरोवाऽप्यथचंडालश्शत्रुर्वामित्रघातकः ॥ वैश्वदेवान्त आपन्नः सोऽतिथिः कथ्यतेबुधैः ॥ अतिथिर्यस्यभग्नाशोगृहात्परिनिवर्त्ततेसदत्वादुष्कृतंपुण्यमादायगच्छति अतिथिम्पूजयेद्यस्तुश्रान्तंस्वगृहमागतं सवृषेगोशतेदत्तेफलंस्यादितिनिश्चितम् ॥ इतिपद्मपुराणवचनानि ॥ ममभगवद्दत्तस्यमनसः कैलासस्थयोगिनांहृदयेगमनामित्यद्भुतत्वात् तैःतत्पूर्वमदृश्यत्वात् श्रान्तत्वाच्चातिथित्वम् तस्यपूजायाः फलश्रवणत्वात्पूज्यत्वम् ॥ अतिथेः पूजाचपाद्यार्घादिनाकुशलवार्त्तयाच यथारामायणेवनवासगतेरामेतमानयनार्थंवसिष्ठऋषिपुरस्सरभरतस्य भरद्वाजाश्रमप्राप्तिसमये अतिथित्वेनतयोः पूजनसमयेशिष्यान्प्रतिपाद्यार्घ्यानयनार्थम्भरद्वाजकथनंवसिष्टमथदृष्ट्वैवभरद्वाजोमहातपाः ॥ सचचालासनात्तूर्णंशिष्यानर्घमितिब्रुवन् ॥ समागम्यवसिष्ठेनभरतेनाभिवादितः अबुध्यतमहातेजाः सुतंदशरथस्यतम् ताभ्यामर्घञ्चपाद्यंचदत्वापश्चात्फलानिच आनुपूर्व्याच्चधर्म्मज्ञः पप्रच्छकुशलंकुलेइति वनवासाद्रामचन्द्रानयनार्थंभरतेनानेकयत्नेकृतेऽपि श्रीरामचन्द्रस्यवनवासएवश्रेयस्करोऽभूत् एवंम

मसंदेशहरे त्वयिममविद्यालाभार्थगौर्य्याः समीपेगतेऽपि ममतच्चरणे स्थितिरेवश्रेयोभविष्यतीतिभावः ॥ नत्वभ्यागतत्वेनान्नमात्राधिकारीति ध्वनिः ॥ तिथिपर्वोत्सवेत्यक्त्वायेनमहात्मनासोऽतिथिः सर्वभूतानांशेषा नभ्यागतान्विदुरिति यमः स्याः भव ॥ ७४ ॥

मू० मुक्त्वातस्मिन्पवनपदवींशंभुनादत्तकाला ।
रुद्रस्यान्तोयदिचविचरेत्प्राणचारेणगौरी ॥
वाञ्छाभक्त्याविरचितवपुः रुद्धकामादिकंच ।
सोपानत्वंकुरुकुवलयारोहणायाग्रयायि ॥ ७५ ॥

मुक्त्वेति ॥

तस्मिन्सिद्धनिवासिनिकैलासेशम्भुनाशिवेनदत्तः कालोऽवसरोय स्याः सादत्तकालायावताकालेनसमाधिस्थोमहादेवस्तावत् तदन्तःकरणे गौ र्य्याः प्राणचारएवनास्तीतिभावः ॥ तस्मिन्कालेसमाधेर्निवृत्तोमहादेव इतिध्वनिः ॥ गीयतेसतीत्वेनदेवादिभिरितिव्युत्पत्या (गैशब्दे) अस्मात् (किशोरादश्चेति) औणादिकः ओरन् प्रत्ययः ॥ आदेश उपदेशे इत्या त्वेवृद्धौ च गौरइति (तस्मात्पिङ्गौरादिभ्यश्चेतिस्त्रीत्वेनङीपिगौरी) इति उमागौरीतुनग्नकन्योमयोर्मता इतिविश्वः ॥ यदिप्राणचारेणहृदयस्थ वाय्वारोहेण रुद्रस्यमहादेवस्यान्तः आत्मनिविचरेत् प्रविशेत् तर्हिपवन पदवीं आकाशमार्गंत्यक्त्वा अन्यथातत्रागमनासंभवात् ॥ अग्रयायिपुरो गतं चपुनः रुद्धानिकामादीनिविषयवासनानियेनतद्रुद्धकामादिकंगौर्य्या कृतमातृदृष्टिइत्यर्थः॥ अन्यथासतीत्वेनपातिव्रत्येन च तस्याः तेजोरूपत्वेन तस्यास्तेजसा भस्मसात्स्यात् ममकार्य्यहानिरितिध्वनिः ॥ वाञ्छानांम नोरथानां भक्त्यारचनयाविरचितवपुः कल्पितशरीरंसत् यथाकश्चित्सं

सारीमनोरथाविष्टस्सन् स्वमनोरथरचनया सर्वांराज्यसामग्रीं प्रकल्प्यरा जाहमितिमन्यते इत्यनुभवसिद्धम् कुवलयारोहणायहृदयस्थकमलोपरि यानायसोपानत्वंकुरु आरोहणपङ्क्तिरचय आरोहणंस्यात्सोपानमित्य मरः ॥ सोपानभावंभजेत्यर्थः ॥ ७५ ॥

मू० तत्रावश्यंस्वमितकुटिलोद्वासनोद्गीर्णकन्ते ।
नेष्यन्तित्वांशिखरिसदनाः स्वान्तप्रीतेर्गृहत्वम् ॥
तेभ्योमोक्षस्तवयदिसखेदूरलब्धस्यनस्यात् ।
शुद्धस्वान्तान्हृदयविधुरैः कल्पनैर्भीषयेस्तान् ॥७६॥

तत्रेति ॥

तत्रकैलासेअवश्यंसर्वथा शिखरिपर्वतेसदनानिगृहाणियेषांते शिख रिसदनाः कैलासनिवासियोगिनइत्यर्थः ॥ कुटिलाकौटिल्ययुक्ताः उद्वा सना विकल्पेमनोरथः भेदबुद्धिरित्यर्थः ॥ आहोताहोकिमुतविकल्पेकिं किमूतचेत्यमरः साउद्गीर्णा उत्सृष्टात्यक्ताइतियावत् ॥ स्वस्वस्माद्येनत त्स्वमितकुटिलोद्गीर्णकं त्वां स्वान्तप्रीतेर्मनोभक्तेर्गृहत्वंकृत्रिमप्रीतिपात्रत्वंने ष्यन्ति प्रापयिष्यन्ति हेसखेमित्रदूरलब्धस्यदूरदेशप्राप्तस्यमंगलाप्रान्तवा सिनः कैलासप्राप्तस्येत्यर्थः ॥ तवतेभ्यः शिखरिसदनेभ्यः मोक्षोनिवृत्ति र्नस्याद्यदियथाकस्यचित्स्वदेशवासिनः दूरलब्धेनकेनचित्स्वप्रीत्याकति चिद्दिनानिममपार्श्वे उषित्वागंतव्यमित्युक्तेः स्वनिवृत्तिर्नभवतितथा तदा शुद्धस्वान्तान् विषयापरिचितान्कपटरहितानितियावत् ॥ तान्योगिनो हृदयविधुरैः मनोविकलकारकैः विकल्पमितियावत् ॥ वैकल्येऽपिच विश्लेषेविधुरंविकलेत्रिष्वितिमेदिनी ॥ कल्पनैर्मनोरथैर्भीषयोत्त्रासयेः अत्रहेतुभयाभावादात्मनेपदंपुगागमश्चन ॥ ७६ ॥

मू० स्वान्ताम्भोजस्फुटिचहसितंमानसस्यादधानं ।

कुर्वन्कामंक्षणसुखकरप्रीतिमृद्धिङ्गतस्य ॥

धुन्वन्स्वान्तेशुभजविषयानंशुकानीववातैः ।

नानाचेष्टैर्मनविलसितैर्निर्विशेः कंनगस्थम् ॥७७॥

स्वान्तेति ॥

हेमनः स्वान्तेहृदयेयोऽम्बोजः कमलंतंस्फुटयति इतिस्फुटिताच्छील्ये ( सुप्यजाताविति‌णिनिः ) ग्रीष्मवर्षर्त्तौ अन्यत्राततितापात् हेतोः योगिनांमनोऽनवस्थितत्वान्नहृदयस्थकमलंविस्फुटयति किंतुयत्रनात्युष्णतानातिशीतता तत्रमनस्स्थितिसत्वात्तत्रतत्कमलंविकासयतीतिभावः ॥ तदुक्तंहठप्रदीपकायाम् ॥ सुराज्येधार्म्मिकेदेशेसुभिक्षेनिरुपद्रवे धनुःप्रमाणपर्य्यन्तेशिलाग्निजलवर्जिते एकान्तेमठिकामध्येस्थातव्यंहठयोगिना इति ऋद्धिङ्गतस्यस्वकार्य्यौषधिविशेषेणवृद्धिंप्राप्तस्यातएवराजहंसाः तत्रस्थजलपानेनविशुद्धंविग्रहं धारयन्तः आयुष्मन्तोभवन्ति चपुनः मानसस्यसरसः मानसंचित्तमित्युक्तं मानसंत्रैदशंसुरः ( इत्यनेकार्थकोशः )॥ हसितंहास्यंहसोहासोहास्यंचेत्यमरः ॥ हसएवहसितमितितारकादित्वात्स्वार्थे इत्तच् ॥ आदधानंधारयन्स्थलश्वैतकमलैरितिभावः ॥ क्षणेऽभ्याससमये क्षणशब्दोऽव्यवस्थायांसमयेऽपिचानिगद्यते ( इत्यनेकार्थकोशः ॥ योगिनामितिशेषः ॥ सुखकरीसुखंकर्त्तुंशीलमस्याः इति ( कृञोहेतुतेतिताच्छील्यार्थेटः ) याप्रीतिः सुखकरीप्रीतिः तांकुर्वत् धारयत् स्वान्ते अन्तःकरणेशुभजविषयान् पुण्येनकर्म्मणोत्पन्नान् भाग्यान् धुन्वत् उत्पादयत् वातैर्वायुभिरंशुकान् वस्त्रान् ॥ अंशुकंवस्त्रमात्रस्यात्परिधानोत्तरीययोः सूक्ष्मवस्त्रेनातिदीर्घेइतिशब्दार्णवे ॥ इवमनोविलसितैर्हृदये उत्पद्यमानैर्नानाचेष्टैरनेकविहारैः नगस्थंकैलासनिवासिनंकंयोगिनंकामंयथेष्टंनिर्विशेः कस्यचिद्योगिनोहृदयेप्रवेशङ्कुरु इत्यर्थः ॥ ७७ ॥

मू० देवोत्सङ्गेप्रणयिनइवस्त्रस्तवर्ष्मन्दुकूलां।
नत्वंदृष्ट्वानपुनरतुलांज्ञास्यसेकामचारिन्॥
यात्राकालेवहतिशुभवाञ्छालयंनिर्विमाना।
आशापाशग्रथितहृदयास्त्वागमेममसतीनाम्॥७८॥

देवोत्सङ्गेइति॥

प्रणयिनः महादेवस्येवतस्यकैलासस्योत्सङ्गे ऊर्ध्वभागे कटौच उत्सङ्गमुक्तसंयोगेसक्थन्यूर्द्धतलेऽपिचेति रत्नमालायाम्॥ वर्ष्मणः देहात् शरीरं वर्ष्मविग्रहः कायोदेहः इत्यमरः॥ दुकूलंपट्टवस्त्रंक्षौमंदुकूलंस्याद्वेपटवस्त्रस्येत्यमरः॥ वावर्ष्मदुकूलंसूक्ष्मवस्त्रम्॥ दुकूलंसूक्ष्मवस्त्रेस्यादुत्तरीयेसितांशुके इति शब्दार्णवः॥ वर्ष्मदुकूलंस्त्रस्तं शरीरादधःपतितं वर्ष्मदुकूलंयस्याः इतिस्त्रस्तवर्ष्मदुकूला तां निष्ठान्तस्य बहुव्रीहौपूर्वनिपातः॥ समाधिसमयेवायुना धः पतिताँङ्गवस्त्रस्य विस्मृतत्वात्तदवस्थैवस्थितेतिभावः॥ अतुलांजगत्यनुपमांसतींपार्वतीन्तांपूर्व परिचितां तवद्वारैवसमाधिर्भवतीतिभावः॥ दृष्ट्वानेत्रविषयांकृत्वा कामिनीमिवेतिशेषः॥ हेकामचारिन् त्वं पुनः त्वन्तुनज्ञास्यसे इतिन किन्तुज्ञास्यसे एवेत्यर्थः॥ कामचारिणस्तेपूर्वमपिवहुकृत्वादर्शनसम्भवादविज्ञानमसम्भावितमेवेति निश्चयार्थंनञ्द्वयप्रयोगः॥ तदुक्तम्॥ स्मृतिनिश्चयसिद्धार्थेषुनञ्द्वयप्रयोगः इति या पार्वती निर्विमाना विशेषोमानोऽभिमानः इतिविमानः॥ गर्वोऽभिमानोऽहङ्कारो मानश्चितसमुन्नतिरित्यमरः॥ निर्गतोविमानोयस्याः इतिनिर्विमाना प्रादयोगताद्यर्थे इतिसमासः॥ महादेवस्यदेवदेवस्य भार्य्यापार्वत्यहमित्याभिमानो दूरीभूतोयस्याः इति भावः॥ कालेसमाधिकालेऽपिमम भगवदत्तस्यस्त्वागमे शोभनसंगतौ

आशाइतिभगवद्दत्तस्यमेपुत्रस्यकदाममपार्श्वे आगमनम्भविष्यातिपाशाब न्धनरज्जुः आशापाशइवेत्याशापाशः तेनग्रथितंवद्धंहृदयंयस्याः इत्या शापाशग्रथितहृदयाशुभवाञ्छालयं शोभनंमनोरथाश्रयं मेमनासि आन यिष्यतिभगवद्दत्तमिति यश्चेतश्शोभनमनोरथः तस्यालयमाश्रयंत्वां वहति विभर्त्ति ॥ ७८ ॥

मू० स्वान्तेयस्याः विकचकमलंब्रह्मणाधिष्ठितञ्च ।
नीतायोगेनहठवलिनापाण्डुतामाननश्रीम् ॥
ऊर्ध्वेरन्ध्रेपरलयकुवंशोभिमूर्ध्निसिताब्जे ।
रुद्रोनाभेर्मुकुलनलिनेशोभतेविष्णुस्साक्षात ॥७९॥

स्वान्तेति ॥

यस्याः पार्वत्याः आननश्रींमुखशोभांहठएववलंशक्तिः पराक्रमामि तियावत् ॥ वलंपराक्रमेऽपिस्यादितिहैमः ॥ हठबलंताद्विद्यतेयत्रेतिहठ वालिना अतइनिठनाविनीन्हठयोगेनेत्यर्थः ॥ अशेषतापतप्तानांसमाश्रय मठोहठः ॥ अशेषयोगयुक्तानामाधारकमठोहठः ॥ हठाभ्यासंविनाज्ञा नमोक्षस्यासिद्धेरसंभवादाह ॥ हठवालिनेति ( तदुक्तंहठप्रदीपकायाम् ) ज्ञानंकुतोमनसिसंभवतीहतावप्राणेऽपिजीवतिमनोम्रियतेनयावत् ॥ प्रा णंमनोद्वयमिदंविलयंनयेद्योमोक्षंसगच्छतिनरोनकथंचिदन्यः ॥ पाण्डो र्भावः पाण्डुरतातांपांडुरतां (नगपांसुपांडुंभ्यंश्चेतिरः) हरिणःपांडुरःपांडु रित्यमरः ॥ पीतमिश्रशुक्लातामित्यर्थः ॥ तदुक्तंशद्धार्णवे ॥ पांडुपीत भागार्द्धः केतकी धूलिसन्निभः नीताप्राप्ता भूतेकर्तरिक्तः चपुनः यस्याः ऊर्द्धेरंध्रेब्रह्मरंध्रेपरस्यसर्वोत्कृष्टस्यब्रह्मणः ॥ लीयतेप्रविश्यतेऽस्मिन्नित्य धिकरणे बाहुलकादच् लयः स्थानंयत्रेतिपरलयः परलयंचयत्कुवमिति

परलयकुंबमुत्पलंकुवलन्तूत्पलंकुवमितित्रिकांडशेषः शोभते इति अवश्या र्थेणिनिः॥ पुनर्यस्याः मूर्ध्निललाटदेशयत्सिताब्जंश्वेतकमलं तस्मिन्रुद्रः शिवः शोभतेतत्रसंयमेनप्राणस्यसिद्धदर्शनंभवतीतिभावः ॥ तदुक्तंयोगदर्शने ॥ मूर्द्धज्योतिषिसिद्धदर्शनम् ॥ ललाटान्तः छिद्रेज्योतिरूपप्रकाशमानकमलेसंयमेनपृथिव्यन्तरिक्षचार्य्यदृष्टिगोचरासिद्धानां दर्शनम्भवतीतिभावः ॥ सूत्रस्यपुनर्यस्याः स्वान्तेहृदयेब्रह्मणाधात्राब्रह्मात्मभूसुरज्येष्ठधाताब्जयोनिरित्यमरः ॥ धिष्ठितमाश्रितंविकचकमलंविकसितपद्मंशोभि तत्रसंयमेनचित्तस्यसम्यक् ज्ञानंभवतीतिभावः ॥ तदुक्तंयोगदर्शने ॥ हृदयेचित्तसम्वित् ॥ हृदयदेशस्थकमले प्राणसंयमेनचेतनशक्तेः ज्ञानंसम्यक्भवतीतिभावः ॥ पुनर्यस्याः नाभेः नाभिसम्बन्धिनलिनमुकुलेकमलकुड्मलेकमलस्येषद्विकसितकालिकायामित्यर्थः ॥ साक्षात्प्रत्यक्षंसाक्षात्प्रत्यक्षतुल्ययोरित्यमरः ॥ विष्णुश्शोभतेप्रकाशतेनाभि चक्रे प्राणसंयमेनशरीररचनसामग्र्याः ज्ञानम्भवतीतिभावः ॥ तदुक्तंयोगदर्शने ॥ नाभिचक्रेताराव्यूहज्ञानम् ॥ नाभिचक्रेप्राणसंयमेनशरीररचनासामग्रीनांवातपित्तत्वगादीनांज्ञानंभवतीति ॥ ७९ ॥

मू० सिद्धाःयस्मिन्तवविजयिनस्तर्कयामुद्रयाच ।
हंसश्रेणीरचितवलयोबद्धपद्मासनस्थाः ॥
मूर्द्धन्ग्रीवाभुजकरशिखाबद्धरुद्राक्षपुञ्जाः ।
दृश्यन्तेचप्रतिहततमोवृत्तयश्चक्रभेदैः ॥ ८० ॥

सिद्धाइति ॥

यस्मिन्कैलासेहंसानांश्रेणीपंक्तिरिवश्रेणीयेषांतेहंसश्रेणयः रचितवलयः पूजासामग्र्यःयेषांतेरचितवलयः हंसश्रेणयश्चतेरचितवलयोहंसश्रेणीरचितवलयः ॥ बद्धानियानिपद्मासनानिबद्धपद्मासनानितानिवातिष्ठंतीतिबद्ध

पद्मासनस्था: ।। बद्धपद्मासनरूपेणास्थितांइत्यर्थ: ।। पद्मासनलक्षणम् ।। वामोरूपरिदक्षिणंचचरणं संस्थाप्यवामंतथादक्षोरूपरिपश्चिमेनविधिना धृत्वाकराभ्यांदृढम् ।। अंगुष्ठौहृदयेनिधायचिबुकं नासाग्रमालोकयेदेत द्व्याधिविनाशकारियमिनां पद्मासनंप्रोच्यते ।। मूर्धन्शिरोग्रीवाकन्धरा भुजबाहुकरहस्तशिखायामितिद्वंद्वैकवद्भाव: ।। प्राण्यङ्गत्वात् ।। मूर्द्धादि षुबद्धानिरुद्राक्षपुञ्जानिसमूहानियेषांतेमूर्द्धन्ग्रीवाभुजकरशिखाबद्धरुद्राक्ष पुञ्जा: चपुन: चक्रभेदैर्मूलाधारादिब्रह्मरन्ध्रान्तषट्चक्रभेदप्रकारैरित्य र्थ: ।। प्रतिहता:निवृता:तमोवृतया: तामसद्रव्यादभक्षणपानेनोत्पन्नताम सरसपुष्टशरीरसम्बन्धिमनोवृतयोमनोरथानि येषांतेप्रतिहततमोवृतय: तवमनसोविजयिन:स्ववशीकृतवन्त: सिद्धा:योगिन: उपलक्षितभूतयातर्क मुद्रयादृश्यन्ते ।। ८० ।।

मू० नासाग्रेदृष्टिरजुवपुषोबद्धजूटाजटानां ।
संध्यायन्तेगिरिशमनिशंस्वात्मनियत्प्रविष्टम् ।।
गङ्गायत्रप्रवहतिसदाधूर्जटे:केशपाशात् ।
यत्रस्नात्वाविमलविबुधा:संवसन्त्यग्रकूटे ।। ८१ ।।

नासाग्रेइति ।।

यस्मिन्कैलासे अग्रकूटेशिखरेनासाग्रेदृष्टि:नेत्रेणदर्शनमिति नासाग्रे दृष्टि: ऋजुकोमलं वपु:शरीरमिति ऋजुवपु: नासाग्रेदृष्टि:कोमलम्वपुर्ये षांतेनासाग्रेदृष्टिवपुष: ।। अग्रे इति अग्रार्थकमेकारान्तमव्ययम् ।। ज टानांशिखानां शिखाचूडाकेशपाशीवृतिनस्तुसटाजटेत्यमर: ।। बद्धानि कृतानीत्यर्थ: ।। जूटानिन्यग्रोधादिरसेनसमूहान्येकीकृतानीतियावत् ।। यैस्तेबद्धजूटा: संवन्त: संन्त: स्वात्मनिहृदये य:प्रविष्टायत्प्रविष्ट: तंपूर्व मेवहृदये प्रविष्टमितिध्वनि: ।। इतिव्यापकत्वंमहादेवस्यसूचितमिति

भावः॥ गिरिशंमहादेवं अनिशंसर्वदासंसम्यक्ध्यायन्तेयत्रकैलासेगंगा धूर्जटेः महादेवस्यकेशपाशात् जटाजूटसमूहादित्यर्थः ॥ पाशःपक्षश्च हस्तश्चकलापार्थाः कचात्परं इत्यमरः॥ सदानित्यंप्रवहतिप्रचलतिसंवस न्त्यग्रकूटे इतिपाठेविमलाः विबुधाः विमला शुद्धा अपिदेवाः यत्र गङ्गायांस्नात्वा अग्रकूटेशिखरे पर्वतस्येतिशेषः॥ संवसन्तिनिवास ङ्कुर्वन्ति॥ ८१॥

मू० स्तूयन्तेचामरवरगणैर्धर्म्मकामार्थकैर्यात्।
तुच्छंयत्रप्रचलविषयंस्वेन्द्रियारामकञ्च॥
शर्व्वोमागाः ददतिविपुला आशिषःस्वृद्धियुक्ताः।
पूज्यास्तेहिस्मरणविषयाः नामरूपाद्विभिन्नाः॥८२॥

स्तूयन्तेइति॥

यत्रकैलासे धर्म्मःकामःअर्थोयेषांते धर्म्मकामार्थकैः॥ अमरवराः इन्द्र वरुणादयः तेषांगणैः समुदायैः समुदायः समुदयः समवायश्चयोगणइत्य मरः॥ शर्व्वोमागाः महादेवपार्वतीसरस्वत्या स्तूयन्ते॥ गश्चगीतेचगाथा यांगश्चधेतुः सरस्वती (इत्येकाक्षरकोशः॥) शीघ्रं प्रसादार्थमहादेवः पत्न्यर्थमुमाविद्यार्थसरस्वतीतिभावः॥ इन्द्रियाणांचक्षुरादीनां यः आरामः सुखमिन्द्रियारामः सुशोभनः इन्द्रियारामः येनेतिस्वेन्द्रियारामकम्॥ प्रबलोऽत्युत्कटोयोविषयः॥ यस्ययोनित्यंसेवितः शब्दरसादिः सइत्य र्थः॥ यत्रकैलासेतुच्छंशून्यं असारंफल्गुशून्यंतु वाशिकंतुच्छरिक्थके इत्यमरः॥ यात् प्राप्नुयात् नामरूपाद्विभिन्नाः विशेषणभेदवन्तोहि हीत्यप्यर्थे अपि अतएवस्मरणविषयाः सन्तिनतुदृश्यन्ते तथापितत्रकै लासेतेपूज्याः पुष्पादिसामग्र्याः दृष्टिविषयमागताः॥ इतिकैलासस्थानस्या तिशयत्वमन्यस्थानापेक्षया इति भावः॥ तेशर्व्वोमागाः सुशोभनाः ऋद्ध

योऽणिसदयः तद्युक्ताः आशिषः हिताशंसा आशीर्हिताशंसाऽहिदंष्ट्रयोरित्यमरः ॥ आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोरितिकोशांतरम् ॥ ददतियच्छन्ति ॥ ८२ ॥

मू० प्राणैर्नीताःसततगतिभिर्योगिचक्राग्रभूम्यः ।
पञ्चाक्षानांनवगुणरजोदोषमुत्पाद्यसद्यः ॥
शङ्काःस्पृष्टाःइवगुणरजाःमानसस्याक्षरन्ध्रैः ।
वाञ्छाःयस्मिन्तवसुकृतिनोजर्जराःनिष्पतन्ति ॥८३॥

प्राणैरिति ॥

हेमनः कैलासेसततगतिभिरविरतगमनकर्तृभिः प्राणवायुभिर्योगिचक्राणांयोगिशरीरस्थमूलाधारादिषट्चक्राणामग्रभूम्यः स्थानानियद्यपिह्रस्वांतोभूमिशब्दस्तथाप्यत्र ( कृतिकारादक्तिनः ) इतिकृतङीबन्तस्यग्रहणं नीताःप्रापिताः गुणरजाःपांसु इतिगुणरजाः (गुणाःसत्वंरजस्तमइतिकोशाद्रजशब्देनैवगुणग्रहणेगुणइतिविशेषणं ( रजोगुणेचस्त्रीपुष्पेरेणुपरागयोश्च ) रजइतिकोशादेतेषामपिग्रहणनिवृत्त्यर्थम् ॥ गुणा रजाःपांसु इति गुणरजाः इत्यत्रादन्तोऽयम् ॥ रजइति ॥ रजोऽयंरजसासार्द्धं स्त्रीपुष्पगुणधूलिष्वजयः वाञ्छाः स्पृहाः सुकृतिनः पुण्यवन्तः तत्वंचसर्वथातत्र कैलासेतवगमनंभवतिकथमृतेपुण्यं मानसस्यचित्तस्य मानसंचित्तमित्युक्तंमानसंत्रेदशंसरः ( इत्यनेकार्थकोशः ) तवपंचाक्षानांज्ञानेन्द्रियचक्षुरादीनांतद्द्वारैवगुणदोषावात्मानंग्राहयति इतितवसहायकाः (इतिध्वनिः ॥ नवनूतनंयद्गुणरजः तद्दोषमुत्पाद्यसद्यश्शीघ्रंशंकास्पृष्टाइव सापराधत्वाद्भयविष्टाइव ( शङ्कावितर्कभययोरितिशब्दार्णवः ॥ जर्जराःविशीर्णारसन्तः ॥ अक्षरन्ध्रैरिन्द्रियमार्गैर्निष्पतन्तिनिष्क्रामन्ति यथाकेनाविदन्तः

पुरसंचारवतादूतेन गूढवृत्यारहस्यभूमिं प्रापितास्तत्रस्त्रीणां व्यभिचार दोषमुत्पाद्यसद्यः सशङ्काप्राप्तवेशांतराः जाराः क्षुद्रमार्गेणानिष्क्रामन्ति तद्वदितिध्वनिः प्रकृतार्थेशङ्काःस्पृष्टाः इवोत्प्रेक्षाः ॥ ८३ ॥

मू० सिद्धानांयत्रलघुपवनारोहसूच्छासितानां ।
मंगग्लानिंश्रमविजनितांस्नायुजालावलम्बा ॥
त्वत्संरोधस्फुटविसुषमैरम्बुजैश्चक्रसंस्थैः ।
व्यालुंपन्तिस्फुटसृतिसुधामृत्युरोगप्रहत्री ॥८४॥

सिद्धानामिति ॥

यत्रकैलासेत्वत्संरोधेनकुम्भकादिद्वाराप्राणवायुनिरोधेनमनसोऽन्तस्संयमेनेत्यर्थः ॥ यत्स्फुटंविकसनंतेनसुशोभनंसमंसर्वमस्येति सुषमं (वि) विशेषेणसुषममितिविसुषमंतैर्विसुषमैःशोभनैश्चक्रसंस्थैः मूलाधारादिषट्चक्रस्थितिमद्भिः इतिबाह्यानांव्यावृत्तिः अम्बुजैःकमलैस्तद्द्वारा इत्यर्थः ॥ मृत्युरोगप्रहर्त्रीप्राणपरित्यागरोगस्यनाशिनी स्फुटं स्पष्टंस्पष्टं स्फुटंप्रत्यक्तमुल्वणमित्यमरः ॥ सृतिः मार्गं अयनंवर्त्ममार्गाध्वपंथानःपदवीसृतिरित्यमरः ॥ यस्यामितिस्फुटसृतिः साचासौसुधा अमृतामिति ॥ स्फुटसृतिसुधापीयूषममृतंसुधेत्यमरः ॥ लघुक्षिप्रंलघुक्षिप्रमरंद्रुतमित्यमरः ॥ पवनस्यप्राणवायोरारोहणोच्छ्रायावरोहाभ्यां आरोहश्चारोहश्चारोहौताभ्यामारोहाभ्यामितिसरूपाणामित्येकशेषः ॥ श्रेण्यामप्यारोहोवरस्त्रियः अपिशब्दादवरोहेगजारोहे च आरोहोदैर्घ्यउच्छ्रायेस्त्रीकट्यांमानाभिद्यपि आरोहेगजारोहे इतिहेमचन्द्रः ॥ ऊर्ध्वाधोगतिभ्यामित्यर्थः ॥ सुशोभनउच्छ्वासितानां सुष्ठुत्यन्तश्वासवताम् ॥ सिद्धानांयोगिनां 'अङ्गग्लानिं' अवयवग्लानतां हर्षक्षयेनदीनतामित्यर्थः ॥ व्यालुंपंति अपनुदन्ति ॥ ८४ ॥

मू० तत्रस्थानंवरपशुपतेरुच्चकैर्दृश्यमानं ।
शक्तियत्रप्रचलतिसदादृष्टिमार्गाग्रयोगी ॥
अन्तर्लक्ष्यंतवसुमनसोवायुनाशीघ्रगामिन् ।
यस्योपान्तेपवनगतयोविद्ययावर्द्धितास्स्युः ॥८५॥

तत्रस्थानमिति ॥

तत्रकैलासे पशुंदेवादिमनुष्यान्तं पातिसंसाराद्रक्षति इतिपतिः ॥ तस्यमहादेवस्योच्चकैरुन्नतंदृश्यमानं यत्रमहादेवनिवासस्थाने वायुना प्राणवायुनाकरभूतेनहेशीघ्रगामिन् त्वरितगते नलुमतेतिनिषेधस्यानित्य त्वात्संबुद्धिगुणःपर्य्यायेसाधुःसंबुद्धौनपुंसकानांनलोपोवावाच्यःइत्युक्त्या यस्यपर्य्यायः तत्रनलोपाभावःसाधुः शोभनंमनःसुमनःतस्यसुमनसः तवअन्तःत्वय्येवेत्यर्थः ॥ लक्ष्यंज्ञातव्यंनतुलोकवत् ॥ बाह्यद्रष्टव्य मितिभावः ॥ स्थानमवकाशं स्थानन्नित्यावकाशयोःसादृश्येसन्निवेचेति हैमः ॥ भत्रतियत्रमहादेवावकाशे दृष्टिमार्गेपथि अग्रयोगी अग्रयोगी योगीत्येकवचनेनकश्चित्पुण्यवानितिध्वनिः ॥ शक्तिंकुण्डलिनींकुंडिलांगी कुण्डलिनीभुजङ्गीशक्तिरीश्वरी कुंडल्यरुन्धतीचैतेशब्दाःपर्य्यायवाचकाः ॥ सदानित्यंप्रचलतिप्रचालयतीत्यर्थः ॥ अन्तर्भावण्यर्थः ॥ चलधातोरच ॥ कुण्डलिन्यायोगीमोक्षद्वारंविभेदयेदिति भावः ॥ तदुक्तम् ॥ उद्घाटये त्कपाटंतुयथाकुंचिकयाहठात् ॥ कुण्डलिन्यातथायोगीमोक्षद्वारंविभेदयेत् येनमार्गेणगंतव्यंब्रह्मस्थानन्निरामयम् ॥ मुखेनाछाद्यतद्वारंप्रसुप्तापरमेश्वरी कंदोर्धकुंडलीशक्तिः सुप्तामोक्षाययोगिनाम् ॥ बन्धनायचमूढानांय स्ताम्वेत्तिसयोगवित् ॥ यस्यमहादेवस्योपान्तेसमीपेविद्ययाविज्ञानेनपा शुपतयोगेनवापवनेनप्राणवायुनागतिर्ज्ञानं परहृदयस्यवार्त्ताज्ञानंदेशांतरी

वस्तुज्ञानमितियावदित्यर्थः ॥ येषांतेपवनगतयः योगिन इतिशेषः ॥ वार्द्धिताः वृद्धिमन्तस्स्युर्भवेयुः ॥ ८५ ॥

मू० यन्नाभ्यांत्वंप्रविशसिसदायोगिनोमानसंत्वा ।
आच्छन्नायांविकचकमलैः प्रेक्ष्यतेसन्निकृष्टम् ॥
नाध्यास्यन्त्यव्यपगतशुचः स्वागतंदूरदेशात् ।
त्वामन्यद्धिप्रविलविरहंचण्डिकायश्चदूतम् ॥ ८६ ॥

यन्नाभ्यामिति ॥

यद्येषांयोगिनांविकचकमलैः प्रफुल्लित नाभिदेशस्थकल्हारैः आच्छन्नायां सर्वतः आच्छादितायां सदानित्यं प्रविशसि यद्यपितवस्थानमुरः तथाप्यतिचंचलत्वादेकाग्रतया भावेनैकाग्रकरणार्थसमानवायुनासहनाभ्यां प्रवेशोयुक्त स्ते इतिभावः ॥ विशेषणापगतोदूरीभूतः शुक्शोकोयेषांतेव्यपगतशुचः समाध्यतिरिक्तकालेऽपितवशुद्धत्वाद्वीतदुःखाः सन्तः योगिनोदूरदेशात् पंचापदेशसमीप मंगलादुर्गायाः नाम्नोपावर्त्तनात् देशविषयेतूपवर्तनमित्यमरः ॥ शोभनमागतमागमनं यस्येतिस्वागतं अतएवप्रबलोऽतिशयविरहो वियोगोयस्येति प्रबल विरहं मंगलाप्रान्तवर्त्तिदेशे त्वांत्यक्त्वाकैलासे आगताः इतिहेतोः ॥ प्रबलविरहः इतिभावः ॥ दूरदेशत्यागइतिध्वनिः ॥ चपुनः चंडिकायाः पार्वत्याः अपर्णापार्वतीदुर्गामृडानीचण्डिकाम्बिका इत्यमरः ॥ दूतंसंदेशहारकंस्यात्संदेशहरो दूत इत्यमरः ॥ संदिश्यते इतिसंदेशोनिरूपणंतद्धर इतिसंदेशहरः ॥ तदुद्देश्यत्वेनागतमित्यर्थः हि यतः अन्यत् स्वप्रविष्टमनसोऽपेक्षयाऽतिरिक्तमित्यर्थः ॥ सदाशुद्धत्वादन्यत्रवासनासंभवेनगमनानर्हत्वात्तत्रत्यक्तमितिसन्निकृष्टंसन्निहितं स्वहृदये आगतामित्यर्थः ॥ त्वांमानसंचित्तंप्रेक्ष्यदृष्ट्वाऽपितेयोगिनोनाध्यास्यन्तिनोत्कण्ठयास्मरिष्यन्ति ॥

आध्यानमुत्कण्ठस्मरणमितिकाशिकायाम् ॥ यस्यनिर्वासनायुक्तस्यदर्शनार्हत्वात् दूरदेशेत्यागः तस्यैवपुनर्दर्शनेनवीतदुःखात्वमितिविरोधाभासोऽलङ्कारः ॥ यद्यपि न्यायनयेमनसः एकत्वात् मंगलास्थानस्थकैलासस्थानस्यचभेदाभावेनान्यत्वन्नास्ति तथापिसांख्यनये मनसोज्ञानेन्द्रियकर्मेन्द्रियात्मकत्वात् ॥ उभयात्मकत्वाद्भेदविशिष्टत्वं सांख्ये उभयात्मकमत्रमनःसंकल्पकमिन्द्रियंचसाधर्म्यात् चक्षुरादीश्च मनोऽधिष्ठितानामेवस्वस्वविषयेषु प्रवृत्तेःसंकल्पमत्र मनःसंकल्पेनरूपेणमनोलक्ष्यते ॥ आलोचितमिन्द्रियेणवस्त्विदमिति ॥ सम्मुग्धमिदमेवंनैवमितिसम्यक्कल्पयति विशेषणविशेष्यभावेन विवेचयतीतियावत् ॥ यदाहुस्सम्मुग्धंवस्तुमात्रन्तु प्राग्गृह्णातिविकल्पितम् ॥ तत् सामान्यविशेषाभ्यांकल्पयंतिमनीषिणः ॥ तथाहि अस्तिह्यालोचनज्ञानं प्रथमंनिर्विकल्पकम् ॥ बालमूकादिविज्ञानसदृशंमुग्धवस्तुजमिति ततःपरंपुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया बुद्ध्यावसीयतेसाहिप्रत्यक्षत्वेनसम्मता ॥ इन्द्रियंचकुतस्साधर्म्यात् ॥ इन्द्रियान्तरेविशेषस्तत्रैवद्रष्टव्यः ॥ पातञ्जलभाष्येगुणपरिणामभेदप्रकरणे विशेषाविशेषलिङ्गेतिसूत्रभाष्य श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणानिबुद्धीन्द्रियाणि वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्येकादशंमनः इतिसर्वार्थम् ॥ किंचन्यायनयेऽपिमनसः एकत्वेऽपिकर्णशष्कुल्यवच्छिन्नाकाशवत् कुम्भाद्याकाशवत् तत्स्थमनोभिन्नत्वामितिनानुपपन्नंमनोऽन्यत्वामिति ॥ ८६ ॥

मू० तस्याः स्वान्तेकृतवसतिकंशुद्धवाञ्छाभिरामं ।
मेमातुश्चप्रियइति सखेचेतसाकातरेण ॥
प्रेक्ष्यस्वान्तेस्फुरितमनिशंत्वांत्वमेवस्मरामि ।
मत्स्नेहेनैवमयिसततंलम्बमानेयथास्वे ॥ ८७॥

तस्याः स्वान्ते इति ॥

तस्याः अम्बिकायाः यथास्वे आत्मनीव स्वाज्ञातावात्मनिस्वंचत्रि ष्वात्मीयेस्वास्त्रियां धने इत्यमरः ॥ मयिस्नेहोमत्स्नेहः प्रीतिस्त्वयैवस यिमगवद्दत्ते सततंनित्यंलम्बमानेस्वान्तेहृदये कृतापर्य्याप्तावसतिर्गृहंयेने तिकृतवसतिकंपर्य्याप्त गृहमित्यर्थः ॥ गमकत्वात्समासः ॥ युगपर्य्या प्तयोःकृतमित्यमरः ॥ वसतिरात्रिवेश्मनोरित्यमरश्च ॥ मनसः उभये न्द्रियात्मकत्वेऽपिचंचलत्वा च्चक्षुरादीन्द्रियाश्रययोग्यंत्वेऽपि अत्यन्तप्रि यत्वात् ॥ स्वान्ते एववसतिः लोके यथासत्यपिदर्शनादौवस्तुनोऽतिप्रियस्य हृदयेनैवालम्बनंकरोति यथारावणहृतया सीतयात्यक्तामुत्तरीयमाभरणा निच सुग्रीवानितानि इदम्पश्येदम्पश्येतितस्योक्त्यासीतायाः उत्तरीयभूष णानामतिप्रेम्ना दर्शनसत्वेऽपिहृदिकृत्वानिशस्वासरामचन्द्रः ॥ तदुक्तं रामायणे ॥ हृदिकृत्वासबहुश स्तमलङ्कारमुत्तमम् निशस्वासभृशंसर्पो बिलस्थइवरोषितः ॥ अत्यन्तप्रीतियुक्तवस्तुनो हृदिधारणेऽयंदृष्टान्तः ॥ यथापुत्रस्यपितामाताच शुद्धवाञ्छयामनोरथेनाभिरामं सुन्दरंशोभनमि तियावत् ॥ नतुसोदरत्वेन सहजशत्रुतयामलिनत्वमिति ध्वनितम् ॥ शु द्धमनसोहृदये एववसतिरितिस्वाभाविक मित्यनेनसूचितम् ॥ स्वान्त मनसिममेतिशेषो ऽनिशंनित्यंक्रियान्तरैरव्यवधानमितियावत् ॥ स्फुरि तंवारम्वारमागत्येवेतिशेषः ॥ स्फुरणशीलं त्वांप्रेक्ष्यज्ञात्वामेमातुश्चाम्बि कायाः प्रियः प्रेमकरः इतिहेतोः कातरेणभीतेन मनसाचेतसाभयंचात्र सानन्दमेव वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात् ॥ श्रवणात् कीर्त्त नाद्वापिसानंदाभीर्यथाभवेत् ॥ इतिरत्नाकरेदर्शनात् श्रवणेनात्रज्ञानस्या पिग्रहणम् ॥ तमेवस्मरामि मातुस्स्वान्तस्थितमेव चिंतयाम्येवकारोविष यान्तरव्यवच्छेदार्थः सदृशवस्त्वनुभवादिष्टार्थस्मृतिजार्यते इत्यर्थः ॥ अ तएवात्रस्मरणाख्योऽलंकारः तदुक्तम् सदृशानुभवादन्यस्मृतिस्स्मरणमु च्यते इति ॥ ८७ ॥

मू० तस्याः प्राणोऽभिलषतिमनायाहिशीघ्रन्त्वमस्यां ।
नोयायाश्चेदितरपुरुषेवामभावास्त्रियोहि ॥
पुत्रस्नेहेतवसुगमनंनिष्फलंस्याद्विलम्बे ।
पूर्णाशामेसकलसफलामन्दभाग्यस्यनस्यात् ॥८८॥

तस्याः इति ॥

हेमनः ममप्राणोऽसुः पुंसिभूम्न्यसवः प्राणइत्यमरः ॥ अभिलषति इच्छतित्वंमनोऽस्यामम्बिकायांमेमातरीत्यर्थः ॥ शीघ्रंत्वरितंयाहि प्राप्नुहि चेद्यदि नोयायाः विलम्बेकालेव्यतीतेसति तस्याः अम्बिकायाः इतरेम दन्येपुरुषेपुत्रस्नेहेतवमनसस्सुशोभनमपिगमनंमातुस्समीपेप्राप्तिः पुत्रसंदेशहारिणः तवतत्संदेशमानीयागमनमितिशोभनमितिभावः ॥ निष्फलमापार्थंस्यात् भवेत् ॥ स्वभर्तुर्महादेवस्यसेवार्थंकैलासगमनसमयेमेमात्राम्बिकयेत्युक्तं शीघ्रमायाहि अधुनैववर्षे आगामिष्यामीतिप्रतिज्ञायात्यन्तपापकर्म्मणाज्वरेणतिपीडितस्यमे सार्द्धवर्षाधिकालोऽग्रेऽगादैहिकपितृमातृस्नेहेनबहुकालंसंसारेऽस्मिञ्जीवेछोः द्वितीयहायनेगतेऽप्यधुनामयिनिराशयासमीपवर्त्त्यन्यस्मिन्पुत्रवत्स्नेहेसतितवगमनेऽपिमय्यर्द्धस्नेहःतस्मात्सकलजगन्मातृत्वादम्बिकायाः मातुर्ममतुल्योऽन्योनास्तीत्यभिमानमन्यमानस्यसकलाशानिष्फलास्यादितिभावः ॥ विलम्बेऽन्यत्रपुत्रवत्स्नेहेकारणमाह स्वयमेवग्रन्थकर्त्तातथाहियतस्स्त्रियोवामस्वभावाः योषितश्चारुप्रकृतयोभवन्ति वामः कामेसव्येपयोधरेउमानाथेप्रतीकूलेचारौवामातु योषितीतिहैमः ॥ संसिद्धि प्रकृतीत्वमेस्वरूपंस्वभावश्चनिसर्गश्चेत्यमरः॥ सकलजगन्मातृत्वादन्यस्मिन्नपिपुत्रवत्स्नेहेतव किं विद्वेषस्स्यान्नहिकिन्तु मन्दभाग्यस्यमूढमकार्य्यसाधकंभाग्यम्॥ प्राक्तनकर्म्मशुभाशुभंवायस्यसो

मन्दभाग्यः ॥ भाग्यंकर्म्मशुभाशुभमित्यमरः ॥ दैवंदिष्टंभागधेयंभाग्य मित्यमरश्च तस्यमेभगवद्दत्तस्यपूर्णस्यपूरितस्यपूर्णस्तुपूरितेत्यमरः ॥यस्यमे म्बिकामाता इतिपूर्णत्वमितिभावः ॥ आशापूर्णाशानित्यसाकांक्षत्वात्स मासः ॥ मदन्यो मातुः प्रियोनभविष्यतीतिकलयासहवर्त्तमानासकला षोडशभागसहिताकिंचिदपिनन्यूनेत्यर्थः ॥ कलातुषोडशोभागइत्यमरः ॥ सकलाचासौसफलासकलसफला पुम्वत्कर्म्मधारयेतिपुम्वद्भावोनस्या द्भवेत् ॥ ८८ ॥

मू० सामातावैहृदयकमलेत्वत्सुवासार्थवासे ।
साहस्रैरशोभिनिवरदलैःसुप्रकाशैः प्रफुल्लैः ॥
प्राणारोहैः प्रणधिहृदयंनर्त्तितंमेस्तिमात्रा
यस्याःअन्तेदिवसविगमेतन्मनस्तेसुहृच्च ॥ ८९ ॥

सामातेति ॥

यस्याः प्रफुल्लैर्विकसितैः अतएवशोभनः प्रकाशः प्रहासः सुप्रकाशः प्रकाशोऽतिप्रसिद्धेस्यात्प्रहासातपयोः स्फुट इतिविश्वः ॥ येषांतैस्सुप्रका शैर्वराणिश्रेष्ठानिदलानिपत्राणियेषांतैः वरदलैः सहस्राण्यवसहस्रपत्राणि विनापिप्रत्ययंप्रत्ययोत्तरपदलोपः अनेन उत्तरपद पत्रशव्दस्यलोपः सह स्राण्येवसाहस्राणि ( प्रज्ञादित्वात्स्वार्थेऽण् ) तैःसाहस्रैः कमलैः सहस्रपत्रंक मलंशतपत्रंकुशेशयमित्यमरः ॥ शोभिनिशोभायुक्तेत्वत्तवमनसः सुशो भनः वासोनिवासोऽर्थःप्रयोजनं यस्येतित्वत्सुवासार्थः ॥ सचासौवासो निवासस्थानमितित्वत्सुवासार्थवासस्तस्मिन्वसन्ति अस्मिन्नितिव्युत्पत्या बाहुलकादधिकरणेघञ् ॥ हृदयकमले अन्तर्मध्ये मेममसात्रा अम्बिक याप्राणारोहैः प्राणानामुपर्य्यधश्चालनैरित्यर्थः ॥ प्रणधिः प्रार्थनं प्रणधिः प्रार्थनेचेत्यमरः ॥ प्रणधिःकारिहृदयंप्रणधिःहृदयंमध्यमपदलोपीसमासः

नतूद्धतमित्यर्थः सात्विकमितियावत् ॥ नार्त्तितंनृत्यङ्कुर्वत् हेमनः तद्हृदयंतेसुहृन्मित्रंदिवसविगमेशत्राावित्यर्थः अस्तिभवति सावैप्रसिद्धामाता अम्बिका ॥ ९० ॥

मू० एभिस्साधोहृदयनिहितैर्लक्षणैर्लक्षयेथाः ।
यस्याः स्वान्तान्मिहिरशशिनोर्दूरदेशेऽभियातः ॥
तिर्य्यग्नाडीहृदयभवनंमद्विनाक्षामकांतिम् ।
सूर्य्यापायेनखलुकमलंपुष्यतिस्वामभिख्याम् ॥९१॥

एभिरिति ॥

हेसाधोनिपुणसाधुः समर्थोनिपुणोवेति काशिकायाम् ॥ यस्याः अम्बिकायाःस्वान्तादहृदयात् मिहिरशशिनोः सूर्य्यचन्द्रमसोःमिहिरार्य्यमपूषणइत्यमरः ॥ शशीप्रसिद्धः तिर्य्यक्नाडीइडापिंगलेसूर्य्यचन्द्रस्वरप्रवाहके इत्यर्थः ॥ दूरदेशेऽभियातः प्रसृतःकैलासस्थानादारभ्यरावलपिंडीमाभिव्याप्येत्यर्थः ॥ सर्वदाध्यानसमयेऽधोदेशविशेषाननभिव्याप्यहृदयदेशादब्रह्मरन्ध्रद्वारोपरिसरतः इदानीन्तु इमेतिर्य्यचीभूत्वास्वहृदयस्थानाद्रावलपिण्डीमभिव्याप्यदेशानभियातः मदालोचनार्थमितिभावः सुतवियोगईश्वरमपिविस्मारयतीतिध्वनिः ॥ हृदयनिहितैरविस्मृतैरित्यर्थः एभिर्मनोनर्त्तनाद्युक्तलक्षणैः तिर्य्यक् नाडीभिरभिज्ञानैः अधुनेतिशेषः ॥ अधुनामद्वियोगेनममप्रवासेनक्षामकांतिम् ॥ उत्सवोपरमात्क्षीणछायंहृदयभवनम् ॥ हृदयमेवभवनंहृदयभवनंमध्यमपदलोपीसमासः ॥ मत्समक्षेक्षीणकान्तिर्नास्तीतिभावः ॥ लक्षयेथाः निश्चिनुयाः तथाहिसूर्य्यापाये आदित्यास्तंगतेसतिकमलंपद्मंस्वात्मीयामभिख्यांशोभां अभिख्यानामशोभयोरित्यमरः ॥ नपुष्यतिनोपचिनोतिखलुसूर्य्यविरहितंपद्ममिवपुत्रविरहितंमातुर्हृदयंनशोभतेनसुखिभवतीत्यर्थः ॥ ९१ ॥

मू० गत्वासद्यः सुतनुतनुतांशीघ्रसम्पातहेतोः ।
तस्यास्स्वान्तेप्रथमकथितेरम्यदेशेनिषन्नम् ॥
अर्हस्यन्तोहृदयचकितां कर्तुमस्याः सुवृत्तिं ।
प्राणायामैर्मयिगिरिशसक्तांचतस्यांसुसक्ते ॥ ९२ ॥

गत्वेति ॥

अम्बिकानिश्चयानन्तरं कृत्यमाह हेहृदयमनः शीघ्रसपातक्षिप्र प्रवेशएव हेतुस्तस्यशीघ्रप्रवेशार्थमित्यर्थः ॥ षष्ठीहेतुप्रयोगे इतिषष्ठी ॥ संवा तःपतितेयोगे प्रवेशेवेदसम्विदे इतिशब्दार्णवः ॥ सद्यः लघुर्शीघ्रमिति यावत् ॥ सुतनुतनुतांसुशोभनातनुः अल्पातनुः कायेत्वचिस्त्रिस्यात्त्रिष्व ल्पेविरलेकृशे इतिमेदिनी ॥ तनुतांदेहितां त्वग्देहयोरपितनुरित्यमरः ॥ अत्यन्तसूक्ष्मदेहतामित्यर्थः ॥ यद्यपिसंकल्पवृत्तिमनसोदेहाश्रयंविनापि गमनस्यवक्तुंशक्यत्वेऽपितथापिगवादिपशोस्संकल्पात्मकमनसः बुद्ध्यस हायस्य तत्रगमनासम्भवादाह ॥ सुतन्विति यथायोगीसूक्ष्मदेहतांयोगब लेनप्राप्यानेकविषयान्प्राप्नोति एवंसंकल्पात्मकमनःसंकल्पव्यापारेण सूक्ष्मदेहतां प्राप्नोतीतिध्वनिः गत्वाप्राप्य अस्याः अम्बिकायाः प्राणायामैः प्राणवायोरायमनैः गिरिशसक्तांमहादेवेलीनां सुशोभनांवृत्तिं अन्तःकरणस्यव्यापारमित्यर्थः ॥ अन्तःकरणस्यव्यापारमित्यर्थः ॥ अन्तर्मध्येहृदयमनसि एवचकितांतस्याः अन्तः प्रवेशेनाश्चर्य्यमयीमित्यर्थः ॥ ममनस्तु स्ववृत्यादेवे आसक्तमितिकेनहेतुनावृत्तिरन्यथाजातेतिचकितत्वमितिध्वनिः ॥ कृत्वातांचेतिशेषः ॥ तांवृत्तिंतस्यामम्बिकायांसुसक्तेसंलग्नेमयिभगवद्दत्तेकर्तुंकारयितुमित्यर्थः ॥ अर्हसियोग्योऽसि यथाकश्चित् किंचित् अन्विष्यन् क्वचिदुन्नतेस्थित्वाशनैश्शनैरतितरांद्राघीयसींदृष्टिमिष्टदेशेपातयति तद्वदित्यर्थः ॥ ९२ ॥

मू० तन्वीश्यामागिरिशरसिकाप्राणरोधेसुसक्ता ।
भेदेसूर्य्यस्यसुपुलकिताबद्धवीरासनस्था ॥
दृष्टिन्नासाग्रधृदतिनतोच्चाचनोखेचरींस्था ।
कर्त्तुर्यास्याद्युवतिविषयेसृष्टिराद्येवधातुः ॥ ९३ ॥

सम्प्रतिदृष्टिपातफलमभिज्ञानञ्चश्लोकद्वयेनाह तन्वीति ॥ तन्वी कृशाङ्गीश्लक्ष्णंकृशंतनुरित्यमरः ॥ वोतोगुणवचनादितिङीप् ॥ श्यामायुवतिः श्यामायौवनमध्यस्था इत्युत्पलमालायाम् ॥ यद्यपिमातृसंभावनयापुत्रेणेदंकथनमनुचितंतथापिदेवतारूपेयथार्थस्तुतिकथमावश्यकमितिनानुचितंरसः रागोविद्यतेयस्याः रसिका ॥ अतइनिठनावितिठन् ॥ रसोगन्धजलेरसेशृंगारादौविषेवीर्य्येतिक्तादौद्रवरागयोः देहधातुप्रभेदेचपारदस्वादयोः पुमानिति मेदिनी ॥ गिरिशेमहादेवेरसिका इतिगिरिशरसिका तस्मिन्ननुरागवती दृष्टिचक्षुः दृष्टिर्ज्ञानेऽक्षिणदर्शने इत्यमरः ॥ नासाग्रेधरतीतिनासाग्रधृत्( कर्त्तरिक्विप् )॥ प्राणरोधेसँय्यमनेसुसुष्ठुसक्तालग्नाबद्धवीरासनस्थाबंधनंयद्वीरासनं तेनस्थिता नातिनतानम्रा उच्चा उन्नताच ( तदुक्तम् ॥ ) शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्मनः नात्युच्छ्रितं नातिनीचमितिसमग्रीवशिरः शरीरमितिश्रुतिश्च सूर्य्यस्यभेदे अष्टकुम्भकमध्येसूर्य्यभेदनाख्यकुम्भकेकृतेसतिसुशोभनापुलकितासरोमांचा अष्टौकुम्भकभेदाश्चेति सूर्य्यभेदेनमुज्वायीसीत्कारीसीतलीतथा भस्त्रिकाभ्रामरीमूर्छाप्लाविनीत्यष्टकुम्भकाः सूर्य्यभेदनाख्यमिति आसनेसुखदेयोगीबध्वाचैवासनंततः दक्ष्यनाड्यांसमाकृष्यबहिस्स्थंपवनंशनैः॥ आकेशादानखाच्चनिरोधावधिकुंभयेत् ततःशनैःसव्यनाड्यारेचयेत्पवनंशनैः ॥ खेचर्य्यामुद्रयास्थिता ॥ खेचरीलक्षणमाह ॥ कलांपराङ्मुखीङ्कृत्वात्रिपथेपरियोजयेत् साभवेत्खेचरीमुद्राव्योमचक्रंतदुच्यते ॥ युवतयएवविषयाः तस्मिन्युवति

विषये युवतीरधिकृत्येत्यर्थः ॥ धातुर्ब्रह्मणः आद्याप्रथमासृष्टिः रचनकौशल्यमिवस्थितेत्युत्प्रेक्षा प्रथमनिर्मितायुवतिरिवेत्यर्थः ॥ प्रायेणशिल्पिनां प्रथमनिर्म्माणे प्रयत्नातिशयवशाच्छिल्पसौष्ठवंदृश्यते तथाचास्मिन्प्रपंचे नकुत्राप्येवंविधंरमणीयारमणीरत्नेष्वस्तीतिभावः ॥ तदेवम्भूतायास्त्रीतत्रान्तरभवनेस्यात् ॥ तांजानीथाः इत्युत्तरश्लोकस्थपदेनसम्बन्धः ॥९३॥

मू० तांजानीथाःपरिमितभुजांमातरंमेमृडानीं ।
दूरीभूतेमयिहृदिचरेवत्सदूरामिवोध्नीम् ॥
मूर्ध्नःप्राणाद्गलितममृतंह्यष्टपत्रेसुपद्मे ।
ऊर्ध्वास्यायापिवतिरसनांसंनियम्यैवछिद्रे ॥ ९४ ॥

तांजानीथाः इति ॥

हृदिचरतीतिहृदिचरः ॥ चरेष्टः इतिटः ॥ हृद्द्युभ्यांचेतिसप्तम्याः अलुक् चरिष्णुमातुरितिशेषः ॥ तस्मिन्हृदिचरे अन्तःकरणसंलग्ने अनेन वियोगासहिष्णुत्वंव्यज्यते मयिभगवद्दत्तेदूरीभूतेदूरस्थितेसति वत्सोदूरो यस्याः तांऊध्नीङ्गामिवातएवपरिमितभुजां अतिसूक्ष्माहारांमृडानींमम्बिकांमेभगवद्दत्तस्यजीवितां प्राणरक्षिकांजानीथाः (जीवप्राणधारणे) इत्यस्याकर्म्मकत्वात्कर्त्तरिक्तः ॥ जीवादपिप्रियामवगच्छेरित्यर्थः ॥ ऊर्ध्वं उपरि आस्यंमुखं वक्त्रास्ये वदनंतुंडमाननं लपनंमुखमित्यमरः ॥ वक्त्रं आस्यंवदनंतुडं आननंलपनंमुखं सप्तमुखस्य ॥ आस्यंते वर्णायेन अस्यते ग्रासोवाऽस्मिन् तदास्यम् ॥ ण्यत् ॥ मुखंमुखांतरालंच द्वयमास्यमितीरितामितिशाश्वतः ॥ यस्याः सा उपरिमुखा या अम्बिकाह्यष्टपत्रसुपद्मे अष्टादशपत्रकमलेमूर्ध्नोब्रह्मरन्ध्रात्प्राणात्प्राणवायुद्वारागलितं पतितममृतं पीयूषंछिद्रेकपालकुहरेरसनां जिव्हांसंनियम्यैवतत्रदत्त्वैवेत्यर्थः पिबति॥ तदुक्तम् ॥ कपालकुहरेजिव्हाप्रविपरीतगाभ्रुवोरन्तर्गतादृष्टिर्मुद्राभवतिखे

चरी ॥ तस्याःफलम् ॥ रसनामूर्द्धगांकृत्वाक्षणार्द्धमपितिष्ठति विषै र्विमुच्यतेयोगीव्याधिमृत्युजरादिभिः अन्यदपिवहुफलंविस्तरभयान्नालि खितम् ॥ ९४ ॥

मू० उत्कल्लोलंविसमृदुवपूः सोमधाराकटंवा।
पीत्वाशक्तिंगलितमभितः चिन्तयन्तीपराञ्च ॥
जीवन्नीछुः सततविहठात् श्रीमहादेवशैले।
आलोकेतेनिपतितपुरासावलिव्याकुलावा ॥ ९५ ॥

उत्कल्लोलमिति ॥

विसवत् मृणालतंतुवत्मृदुकोमलंवपुः शरीरं यस्याः इतिविसमृदुवपूः विरहेणेतिभावः ॥ वावलिषुनित्येषुप्रोषितार्थेषु देवताराधनेषु व्याकुला व्यापृतापरांशक्तिं कुण्डलिनीम्वाचिन्तयन्ती वाधयन्तींचालयन्तीतिया वत् ॥ अनेनमूढावस्थादर्शिता कुटिलाङ्गीकुण्डलिनीभुजङ्गीशक्तिरीश्वरी कुण्डल्यरुन्धतीचैतेशब्दाः पर्य्यायवाचकाः ॥ उद्घाटयेत्कपाटन्तुयथा कुंचिकयाहठात् कुण्डलिन्यातथायोगीमोक्षद्वारम्विभेदयेत् ॥ योगमार्गेण गंतव्यंब्रह्मस्थानन्निरामयम् ॥ मुखेनाछाद्यतद्वारं प्रसुप्तापरमेश्वरी कंदो र्ध्वेकुण्डलीशक्तिः सुप्तामोक्षाययोगिनाम् बन्धनायचमूढानां यस्ताम्वेत्ति सयोगवित् कुंडलीकुण्डलाकारासर्पवत्परिकीर्त्तिता साशक्तिश्चालितायेन सयुक्तोनात्रसंशयः इति उत् ॥ उन्नतानिकल्लोलानिलहर्य्यः यस्मिन् उत्क ल्लोलं अभितः सर्वतोगलितंपतितंसर्वतोविसृमरमित्यर्थः ॥ सोमधाराक टम् सुधाधारासमूहम् संघातेकटचेतिकटच पीत्वापानंकृत्वा अतएव सततंनिरन्तरं जीवन्नीछुर्निरंतरविशेषहठयोगात् प्राणधारणेछुः नतुलया वस्थांगता इतिध्वनिः ॥ अन्यथातवागमन प्रतीतिर्नस्यात् ॥ सोमे

मातातवमनसः आलोकेदृष्टिपथेपुरानिपततिसद्यः निपातिष्यतीत्यर्थः स्यात्प्रबन्धेपुरातीतेनिकटागामिकेपुरा इत्यमरः ॥ यावत्पुरानिपातयोर्लडितिलट् ॥ ९५ ॥

मू० मत्सादृश्यम्विरहतनुवाभावगम्यंलभन्ती ।
पृच्छन्तीवाहृदयवसनांवासनांतत्परान्तु ॥
कच्चिद्भर्त्तुः स्मरसिरसिकेत्वंहितस्येतिजीवो ।
मत्सङ्केतंविदितवतीमावयोद्वारभूताम् ॥९६॥

मत्सादृश्यमिति ॥

विरहेणतनुकृशं भावगम्यंभावः क्रियाप्रकृतेस्मरणक्रिया तयाज्ञातव्यम् ॥ नतुसाक्षात् दूरस्थत्वादतिकालत्वात्क्षणंक्षणंविस्मृतमांस्मृत्वा स्मृत्वापिज्ञातमिति भावः ( भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु इत्यमरः ॥ क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥ मत्कायस्यादृष्टचरत्वात्सम्प्रतिसंभावनयोत्प्रेक्ष्यमित्यर्थः मत्सादृश्यंमदाकारसाम्यं प्रतिकृतिमित्यर्थः ॥ यद्यपिसादृश्यन्नामप्रसिद्धवस्त्वनन्तरगतमाकारसाम्यं तथापिप्रतिकृतित्वेनविवक्षितम् ॥ इतरथालेख्यत्वासम्भवात् ॥ आलेख्येऽपिचसादृश्य मित्यभिधानात् लभन्तीस्वहृदयेस्थापयन्तीवायथामहादेवप्रतिकृतिंयोगीध्यानावस्थितः इतिभावः ॥ हृदयवसनंवासोयस्याः साहृदयवसनातां तत्परामिश्रार्थोद्युक्तां तत्परेप्रसितासक्ता विष्ठार्थोद्युक्तउत्सुक इत्यमरः ॥ तत्परमुत्तमंयस्यतत्परः परः श्रेष्ठारिदूरान्योत्तरे क्लीबंतुकेवले इतिमेदिनी ॥ इतिममनात्रोश्चहृदयगतंनकेनाचिदन्येनज्ञातमित्यर्थः ॥ मत्सङ्केतं मयामातुःरहस्यकथनमित्यर्थः ॥ एतद्देशान्मातुर्विरहवत्याः दर्शनार्थम् कैलासगमनरूपंममविचारमित्यर्थः ॥ सुसुष्टुविदितवतींज्ञातां आवयोर्द्वारभूतां मातुर्ममच संदेशानयननयने उपायरूपांयद्यप्या

वयोस्संदेशानयननयनेमनसोद्वारभूतत्वम् तथापिवासनायाः मनोजन्यत्वात्तद्रूपत्वेनतस्याः द्वारभूतत्वम् ॥ किंचवासनया एवमनोगच्छति इतितस्याँप्रथमानुगमनेनद्वारभूतत्वमित्याह वासनांमनसः संकल्परूपां वृत्तिमित्यर्थः ॥ तत्तच्छरीराधिष्ठितत्वेनोपाधिनामनोभेदेऽपिसाक्षिरूपत्वे नैकाकारादुभयोरैक्यंतज्जन्यवासनायाः अप्येकरूपत्वेनज्ञातृत्वात्स्वनिष्ठवासनांपृच्छन्तीतिभावः इत्याहपृछन्ती हेरसिकेतेजस्विनि शृंगारादौविशेषीर्य्येगुणेरागेद्रवेरसः दूरदेशादत्रकैलासेममहृद्यागमनंतेजोविनाऽसम्भवमितिध्वनिः ॥ अतआह रसिके इति भर्त्तुः पोष्टुः पुष्यतीतिकर्त्तरितृच् पोष्टातस्यपालकस्यवृद्धिकर्त्तुरितियावत् ॥ भर्त्ताधातरिपोष्टरीत्यमरः ॥ स्मरसिकच्चित् स्मरसिकिं कच्चित्कामप्रवेदने इत्यमरः ॥ पोष्टारस्मरसि किमित्यर्थः ॥ अधीगर्थदयेषामितिकर्म्मणिषष्ठी पुत्रस्यापिमातुःपालकत्वात्पुत्रंस्मरासिकिमितिभावः ॥ स्मरणेकारणमाह ॥ त्वंहियतः तस्यमम पुत्रस्य जीवोप्राणधारणं मातुर्वियोगिनस्तस्यमत्संदेशेन जीवयतीतिजीवः ( पचाद्यच् ) प्राणधारयित्रीवाशब्दोविकल्पे उपमायांविकल्पे चेत्यमरः ॥ ९६ ॥

मू० उत्सङ्गेवाकरधृतवतीबद्धपद्मासनेच ।
प्राणैः प्राप्तंहृदयकमलेमांहिसाद्रष्टुकामा ॥
प्रेम्णास्वार्द्रंनयनकमलंसारयित्वाकथञ्चित् ।
भूयोभूयः कृतमपिवलिंविस्मरंतीमदाशा ॥ ९७ ॥

उत्सङ्गइति ॥

किंचबद्धपद्मासने उक्तलक्षणे उत्सङ्गे ऊरूपरिभागेकरयोर्हस्तयोर्धृसंधारणंविद्यतेयस्याः साकरधृतवती प्रेम्णास्नेहेनसुसुष्टु आर्द्रक्लिन्नमश्रुप्रवाहेणात्यन्तपूरितमित्यर्थः ॥ नयनकमलंनेत्रारविन्दंकथंचित् कृछ्रेणसारयि

त्वामार्जयित्वा अन्यथापूजाभङ्गास्यात् प्राणैः पराक्रमैः शक्तिः पराक्रमः प्राणः इत्यमरः ॥ प्राणवायुनिरोधद्वारा मनः एकाग्रताकरणपराक्रमैरि त्यर्थः ॥ बहुकालविरहहेतुनामनसोऽनवस्थितत्वात्तत्प्रत्यक्षीकर्तुमशक्य त्वादितिभावः ॥ हृदयकमले प्राप्तमागतंमांहिनिश्चयेन हिहेतावधारणे इत्यमरः ॥ द्रष्टुकामा ( तुम् काममनसोरपीति तुमुनोमकारलोपः)॥ दर्शनेछुः अतएवमदाशा मयिआशादीर्घातृष्णायस्याः सा ॥ आशातृष्णा पिचाग्रता इत्यमरः ॥ सप्तमीविशेषणेबहुव्रीहाविति सप्तम्याः ( पूर्वनि पातः ) अतएवज्ञापकात् समासः ॥ व्यधिकरणबहुव्रीहिश्चसा अम्बिका अतएवभूयोभूयः पुनः पुनः कृतंरचितमपि ( अपीतिशङ्कायाम् ) गर्हा समुच्चयप्रश्नशंकासम्भावनास्वपीत्यमरः ॥ आत्मनेतिशेषः ॥ विस्मरणा नर्हमपीत्यर्थः ॥ बलिमुपहारं करोपहारयोः । पुंसिवलिरित्यमरः ॥ वि स्मरन्तीवाआलोकेतेनिपततीतिपूर्वेणान्वयः ॥ ९७ ॥

मू० शेषान्घस्रान्विरहदिवसस्थापितस्यावधेर्वा ।
विन्यस्यन्तीहृदिगणनयाब्रह्मरन्ध्रस्थप्राणैः ॥
विद्यायांमांप्रणयहृदयंत्यक्तसंसारसारं ।
सार्द्धवर्षम्भवविषमहत्यक्तपित्रादिबंधुम् ॥ ९८ ॥

शेषानिति ॥

विरहस्यावियोगस्य दिवसोऽन्हः तस्मात्स्थापितस्य तत आरभ्यनि श्चितस्यावधेरन्तस्यशेषान् गतशिष्टान् घस्रान् वासरान्ब्रह्मरन्ध्रस्थ ब्रह्मरन्ध्रेस्थितिसद्भिः प्राणैः प्राणवायूनांरोहावरोहणैरित्यर्थः ॥ गणनया एकोद्वावित्यादिसंख्यानेनहृदि मनसिविन्यस्यन्तीवा प्राणरोहावरोहणै र्वासरान्गणनयन्तीत्यर्थः ॥ विद्यायांव्याकरणादि शास्त्रे इत्यर्थः ॥ नत्व

ध्यात्मविद्यायामितिभावः ॥ प्रणयेनप्रीत्याविशिष्टंहृदयं मनोयस्येति मध्यमपदलोपीसमासपूर्वकोबहुव्रीहिः अर्थात्प्रणयविशिष्टहृदयंयस्येतिता त्पर्य्यार्थेनसमानाधिकरणे बहुव्रीहिरितिभावः ॥ त्यक्तंनिरस्तंसंसारे जगत्प्रपंचेयत्सारं दुग्धघृतादिसाध्यंवस्तु अन्यच्चभोग्यंविषयादियेनसः त्यक्तसंसारसारः तं सप्तमीविशेषणेबहुव्रीहाविति सप्तम्यन्तस्यपूर्वनि पातेप्राप्ते निष्ठेतिक्तान्तस्य पूर्वनिपातेप्राप्तेच तुल्यबलविरोधे परत्वात् निष्ठान्तस्यैवपूर्वनिपातः ॥ विषमज्वरपीडितेनमयातीक्ष्णकटुकषायादि शुण्ठिपिप्पलादिवस्तुज्वरदिनादारभ्य यावज्जीवंसेवितमिति ध्वनिः ॥ सार्द्धवर्षषण्मासाधिकैकसंवत्सरमित्यर्थः ॥ भवेनजातेनभवः क्षेमेच संसारेसत्तायां प्राप्तिजन्मनोरितिमेदिनी ॥ विषमेनविषमसंज्ञकज्वरेणे त्यर्थः ॥ हन्यतेहिंस्यते इति हः मरणसमकालप्राप्तः इत्यर्थः ॥ ( हनधातोः ) बाहुलकात्कर्म्मणिडः ) सचडः धातुसंबधेप्रत्यय इत्य नेन भविष्यदर्थेसोमयाजीपुत्रोभविता इतिवत् भवविषमहः जातविषम ज्वरेणयोऽहंमरिष्यामीत्यर्थः ॥ तंत्यक्तोनिरस्तोमनसः इतिशेषः यद्यपि व्यापारेणशुश्रूषयासम्बन्धसत्वेपितथापिमनसोनिरस्तः इतिभावः ॥ पित्रादि आदिपदेन भ्रातृकलत्र भगिन्यादि बन्धुर्येनसः त्यक्तपित्रादिबन्धुः तम् ॥ ९८ ॥

मू० यामुन्त्यक्त्वाशिवगिरिगताहारिणीप्राणमस्य ।
यानत्यक्ताकथमपिमयापण्यजीवेनलब्धा ॥
दोषंमत्वाकिमपिमयियाध्यायतिप्राणरोधैः ।
गत्वाशैलेगिरिशमनिशंपुत्रमित्यब्रवीन्माम् ॥९९॥

यामुंत्यक्त्वेति ॥

मामितिपूर्वश्लोकस्थेनान्वयः ॥ अमुंत्यक्तसंसारादिकंमांत्यक्त्वानि

वृत्यशिवगिरौकैलासेगतायाता अस्यैवंभूतस्यसंसारत्यागेनैवगतप्राणस्ये तिभावः ॥ प्राणंहारिणी अवश्यंजीवंहरिष्यती ( आवश्यकाधमर्ण्ये योर्णिनिरितिभविष्यदर्थेणिन् ) अकेनोर्भविष्यदाधमर्ण्ययोरित्यनेन कर्तृ कर्म्मणोरितिप्राप्तकर्म्मषष्ठ्याः निषेधः ॥ ननुपिष्टस्यपेषणमनुचितंकुतः संसारत्यागेनैवगतप्राणस्यममप्राणंहरिष्यति संसारत्यागेनैवगतप्राणस्या पिवासनानिवृत्यर्थमितिभावः ॥ वासनानिवृत्तेरपिसंसारत्यागेनैवयुक्ता कथंतत्वम् ॥ अत आह ॥ पण्योविक्रेयोऽसौजीवः इतिपण्यजीवः तेन विक्रेतव्यजीवेन आत्मनालब्धा प्राप्ता अतः प्राणंहरिष्यतीतिभावः ॥ मयाकथमपिविषमज्वरात्यन्तबाधसमयेऽपियानत्यक्तापुत्र इतिमामब्रवी त् क्वचिन्निपातेनाभिधानम् ॥ यथासुंनारद इत्यबोधि सा अम्बिकाम यिभगवद्दत्तेकिमपिकियदप्यनेकप्रकारकामितियावत् ॥ बहुप्रकारेणैवेत्य र्थः ॥ नत्वल्पेनैवेतिभावः ॥ किंवितर्केपरिप्रश्नेक्षेपनिंदाप्रकारयोरिति विश्वः ॥ दोषंपापम् ॥ अदृष्टग्रहकृत्यादिजन्मामित्यर्थः ॥ नत्वास्मिञ्ज न्मनिशरीरादिजन्यमन्यथाकथमस्मिन्मयितस्याः पुत्रत्वव्यवहारइतिभा वः ॥ मत्वाज्ञात्वाशैलेकैलासे गत्वाप्राप्य प्राणरोधैरत्यन्तमनः एकाग्रत यास्थिरासनेनचेतिभावः ॥ गिरिशंमहादेवंध्यायतिस्मरति अहमस्याः पुत्रइतिकरुणया इतिभावः ॥ आलोकेतेपुरानिपततीतिपूर्वेणान्वयः ॥९९॥

मू० सव्यापारामहनिनतथापीडयेन्मद्वियोगः ।
शङ्करात्रौगुरुतरशुचंनिर्विनोदांजनित्रीम् ॥
मत्सन्देशैस्सुखयितुमलम्पश्यदेवीन्निशीथे ।
ध्यानावस्थांस्फुटविनयनैःप्रोष्यस्वान्तेचतस्याः १००

सव्यापारामिति ॥

हेसखेमनः अहनिदिवसेसव्यापरांपूर्वोक्तहृदयस्थापनबलिकर्म्मसंपा

दितवर्तीमद्वियोगोममविरहः तथातेनप्रकारेण प्रकारेगुणवचनस्येतिथाल् नपीडयेत् दुःखंदध्यात् ॥ यथारात्राविति शेषः ॥ किन्तुरात्रौनिर्व्यापा रांकेवलंमयिविन्यस्तचित्तामिति किंतुरात्रौगुरुतराशुक् यस्याः तांगुरुत रशुचा मतिदुःखांशङ्केतर्कयामि शङ्कावितर्कभययोरितिशब्दार्णवे ॥ अतो निशीथेऽर्द्धरात्रे स्फुटविनयनैः स्पष्टनेत्रैः उन्निद्रनेत्रैरित्यर्थः ॥ स्पष्टस्फुटं प्रत्यक्मुल्वणमित्यमरः ॥ ध्यानावस्थामीश्वराराधनेस्थितामित्यर्थः ॥ यद्यप्युन्मीलितनयनैरैवध्यानेन लयोभवतीतिध्यानावस्थामित्ययुक्तम् ॥ तदुक्तं ॥ प्रनष्टश्वासानिश्वासः प्रध्वस्तविषयग्रहः निश्चेष्टोनिर्विकारश्चल योभवतियोगिनाम् ॥ किंचार्धोन्मीलितलोचनःस्थिरमनानासाग्रदत्तेक्षणः चन्द्रार्कावपिलीनतामुपनयन्निस्यन्दभावेनयः ॥ इतितथापिमयितस्याः अत्यन्तप्रीत्याहेतोः क्षणमपिवियोगासहिष्णुतयाचागमिष्यतीतिप्रत्याशया चयावदन्तःकरणवृत्तिविलीना तावदपिचक्षुषासहसम्बंधवियोगोनभवे त्किन्तुतद्वारैवमदन्तःकरणेतस्यप्रवेशोभवेदितिभावः ॥ तत्रप्रवेशेमदन्तः करणवृत्यासहतस्याभेदेन लयेनिष्फलेब्रह्माणिपुनः पुनर्जन्ममरणानिवृत्ति रेवत्यक्तसंसारसर्वस्वस्यमातृरूपायाः ममोपासनयाफलं भवेदितिध्वनिः॥ तदुक्तम् ॥ यत्रदृष्टिर्लयस्तत्रभूतेन्द्रियसनातनी साशक्तिर्जीवभूतानांद्वेअल क्ष्येलयङ्गते इत्यस्यविस्तारस्तुयोगग्रन्थेबहुशः देवींतपोबलयुक्तामित्यर्थः॥ शुद्धभावेनतत्रगन्तव्यमन्यथा अग्न्यादिदेववत् ॥ शापेनतत्रगमनाश क्यत्वेममकार्य्यहानिस्स्यादितिभावः ॥ मत्संदेशैर्मद्वार्ताभिः अलंपर्य्या प्तंसुखयितुमानंदयितुंतस्याः जनित्र्याः स्वान्तेऽन्तःकरणे प्रोष्यस्थित्वे त्यर्थः पश्य सखाधात्रीचपितरौचित्रदूतशुकादयः सुखयन्तीष्टकथनसु खोपायैर्वियोगिनीमितिरत्नाकरे ॥ दूतश्चेदंमनः इतिभावः ॥ अनेनजाग रावस्थोक्ता ॥ १०० ॥

मू० पित्रोर्निद्रांपठनसमयेपाठयन्तीन्दुमूर्त्ति ।

नीतारात्रिः क्षणइवमयाप्राप्तयोर्यापयन्तीम् ॥

तामेवोष्णैर्विरहमहतीमश्रुभिर्येवमाङ्कला ।

शेषांमूलयुदयगिरौसन्निकर्षैकपार्श्वम् ॥ १०१ ॥

पित्रोरिति ॥

पठनसमयेसमेतिशेषः ॥ निद्रांप्राप्तयोः पित्रोः मातुः पितुश्चेत्यर्थः ॥ पितामात्रेति एवशेषः ॥ मांपाठयन्त्यामयासार्द्धंयेवरात्रिः क्षण अक्षिपरिस्यन्दनकालइवनीता यापिता तांरात्रिमेवविरहेणमहतींदीर्घत्वेनप्रतीयमानां उष्णैरशीतैरश्रुभिर्नेत्रांबुभिः ( अस्रुनेत्राम्बुरोदनंचास्रुमश्रुचेत्यमरः ) ॥ यापयन्तीङ्गमयन्तीम् ( यातेण्यन्ताच्छतृप्रत्ययः ) ( अर्त्तिह्रीत्यादिनायुक् ) उदयगिरिमूलेप्राच्यः दिशः प्रान्तेइत्यर्थः ॥ उदयगिरिग्रहणंक्षीणावस्थाद्योतनार्थम् ॥ कलाएवशेषोयस्याः इतिमध्यमपदलोपीबहुव्रीहिः । कलाशेषातां इन्दुमूर्त्तिचन्द्रकाम् इवस्थितामित्यर्थः ॥ मूर्त्तिःकाठिन्यदेहयोरित्यर्थः सम्यक्निषण्णंस्थितंसंलग्नमितियावत् ॥ एकंपार्श्वं अस्थिविशेषसमूहंयस्याःसासन्निकर्षैकपार्श्वातां द्वेपर्शुकानांपृष्ठानांपार्श्वंपृष्ठ्यमनुक्रमादित्यमरः ॥ शयनेइतिशेषः ॥ स एवकालः सुखिनामल्पः प्रतीयते दुःखिनांतुविपरीतः इतिभावः ॥ एतेनकार्य्यावस्थोक्ता ॥ १०१ ॥

मू० तास्मिन्कालेहृदययादिसायोगानिद्रांगतास्यात् ।

अन्वास्यैनांहृदयविमुखंध्यानकालंक्षमस्व ॥

माभूदस्याः विनायिनिमयिध्यानलब्धेकथंचित्

यामांसद्योऽरमितिसुत आहप्रदूरासुनिद्राम् ॥ १०२ ॥

तस्मिन्निति ॥

हेहृदयतास्मिन्कालेत्वदुपसर्पण समये साअम्बिका योगः चित्तवृत्ति निरोधः सएवनिद्रा योगनिद्रातस्यांगताप्राप्तायदिस्याद्भवेत् एनांयोगनिद्राणामन्वास्यपश्चादासित्वेत्यर्थः ॥ उपसर्गवशात्सकर्म्मकत्वम् ॥ हृदयविमुखम् ॥ हृदयात्पराङ्मुखांनिवृत्तंसादित्यर्थः ॥ अन्यथानिद्राभङ्गा स्यादितिभावः ॥ ध्यानकालंयावत् ध्यानावस्थिता तावत्कालंक्षमस्व ( प्रार्थनायांलोट् ) ध्यानकालंसहनस्य प्रयोजनमाह ॥ माभूदिति अस्याः ममममातुरम्बिकायाः इत्यर्थः ॥ विनयिनानम्रेदीने इत्यर्थः ॥ तत्पादोपसर्पणोत्तरं दण्डवन्नमस्कर्त्तरीत्यर्थः ॥ मयिकथंचित्कृछ्रेण ममापूर्वादृष्टवशात्पुत्रस्नेहवशाचकैलासेऽपि ईश्वराराधनकाले मयिवृतिकुतायां तस्यां तत्तत्क्षणेऽनाराध्योपि देवप्रत्यक्षीभवति पूर्वात्यन्ताभ्यासवशादिति भावः ॥ ध्यानेनाचिंतनेन लब्धेज्ञातेसातिसद्यस्तत्क्षणशोभनानिद्रासुनिद्रा मातुरम्बिकायाः अत्यंतप्रेमपात्रोऽहं यस्यांनिद्रायां प्रत्यक्षीभवाम्यन्याचिन्तानिवर्त्तक इतिभावः ॥ प्रकर्षेणदूराप्रदूरा अत्यन्तानिवृत्तिपराइत्यर्थः ॥ माभूत् ॥ मास्तुमाङिलुङितिलुङ् ॥ सर्वलकारापवादः ॥ यामातामां भगवद्दत्तं अरंद्रुतं सुतहेपुत्र इत्याहब्रवीतिसंभ्रमोक्तिरलङ्कारः यथाबहुवैरिणोरेकोनिर्बलवैरी कथंचित्तस्मान्मुक्तोऽपि अतिभयाद्रात्राव पितमवेपश्यन्ममारेत्याव्हयति ॥ १०२ ॥

मू० तामुत्थाप्यस्वमृदुपवनैः शीतलीसम्प्रयुक्तैः ।
प्रत्यश्वस्तांध्वनिभिरभितोऽनाहतैर्निक्कणैश्च ॥
गर्भप्राणंस्तिमितनयनांत्वत्सुनाथेसुदेशे ।
वक्तुंधीरंस्विषितचचनैर्मातरं प्रक्रमेथाः ॥ १०३ ॥

तामिति ॥

तामम्बिकां शीतलीकुम्भकसंप्रयुक्तैर्मिलितैरिति शीतलीसंप्रयुक्तैः मध्यमप दलोपीसमासः ॥ शीतलीलक्षणंचेति जिव्हयावायुमाकृष्यपूर्ववत्कुम्भसाधनम् ॥ शनकैर्घ्राणरन्ध्राभ्यां रेचयेत्पवनंसुधीरिति स्वमृदुपवनैः स्वस्योपकारकोमल वायुभिरित्यर्थः ॥ तदुक्तम् ॥ मनोयत्रविलीयेत्पवनस्तत्रलीयते पवनोलीयतेयत्रमनस्तत्र विलीयते उत्थाप्यप्रबोध्य एतेनतस्याः प्रभुत्वाद्व्यजनानिलसमाधिर्व्यज्यते यथाह भोजराजः ॥ मृदुभिर्मर्दनैःपादेशीतलैर्व्यजनैःस्तने ॥ श्रुतौचमधुरैर्गीतैर्निद्रा[illegible]बोधयेत्प्रभुम् ॥ इतिनिक्वणैर्भूषणनिनदसदृशैरित्यर्थः ॥ भूषणानांतुशिंजितम् ॥ निक्वाणोनिक्वणः इत्यमरः ॥ आसमन्ताद्धन्यतेहिंस्यतेचीचीकूची आनकादिशब्दैरित्याहतः न आहतोऽनाहतः नतैराक्रान्तइत्यर्थः ॥ आङ्पूर्वकहनधातोः ॥ कर्म्मणिमातिवुद्धिपूजार्थेभ्यश्चेति अनुक्त समुच्चयार्थकचकारेणकर्त्तरिक्तः ॥ अकृष्टः शिक्षित इतिवत् तैरनाहतैर्ध्वनिभिर्निर्ह्रादैः प्रत्यश्वस्तांसुस्थिताम् ॥ तदुक्तंत्रिपुरासारसमुच्चये ॥ आदौमत्तालिमालाजनितरवसमस्तारसंस्कारकारी नादोऽसौवांशिकस्यानिलभरितलसद्वंशनिस्वानतुल्यः ॥ घंटानादानुकारीतदनुच जलधिध्वानधीरोगभीरोगर्जन्पर्जन्यघोषः परइहकुहरेवर्त्ततेब्रह्म नाड्याइति ॥ अन्यत्रपुनरुच्छ्वासिताम् ॥ श्वसेः कर्त्तरिक्तः ॥ एतेनतस्याः सौकुमार्य्यंगम्यते त्वत्सुनाथेत्वयासहितेसुदेशेशोभनहृदये इत्यर्थः ॥ स्तिमितनयनांकिमिदमिति विस्मयान्निश्चलनेत्रां मानिनींमनस्विनीं जनानौचित्यासहिष्णुत्वामित्यर्थः ॥ गर्भप्राणोस्यगर्भप्राणं अन्तर्लीनप्राणकमित्यर्थः ॥ निश्चलमितियावत् ॥ गर्भोपरमकेऽन्तःस्थेगर्भोऽग्नौकुक्षिणोऽर्भके इतिशब्दार्णवे ॥ अन्यथा तीव्रवेगप्राणवायुनाऽन्यत्रतव सम्भवात् वक्तुरन्यत्रगमनेसंदेशानयनस्य वक्तुमशक्यत्वादिति भावः ॥ धीरंधैर्य्यविशिष्टंसत् अन्यथाद्रुतसंदेशस्य

भीतवत् अविश्वासप्रसङ्गादितिभावः ॥ सुशोभनैरिषितवचनै रिष्टो क्तिभिः इषतं इषा भावेकः वाञ्छावासना इत्यर्थः ॥ मातरंगौरीम्प्रक्रमेथाः मत्सन्देश प्रारम्भकुर्य्याः ॥ १०३ ॥

मू० मित्रंपुत्रस्यतवसुसुते विद्धिमांमानसंच ।
तत्संदेशैर्हृदयनिहितैरागतंत्वत्समीपम् ॥
यद्वृंदानित्वरयतिसृतौवायुभिर्योगिनांच ।
वाञ्छायुक्तैर्गिरिशविषयेस्वेषुमोक्षोत्सुकानि ॥१०४॥

मित्रमिति ॥

हेशोभनंसुतेसुसुतेशोभनंपुत्रवतीत्यर्थः ॥ कतिचिद्दोषाणिमत्वापरित्यक्तोऽपिपुत्रस्तवदर्शनाकांक्षी अस्तिकिंतुनमृतइतिभावः ॥ मांमनः तव पुत्रस्यभगवद्दत्तस्येत्यर्थः ॥ मित्रंप्रियसुहृदंतत्रापिहृदयनिहितैर्मनासिस्थापितैस्तत्संदेशैः तस्यपुत्रस्यसंदिश्यते इतिसंदेशोनिरूपणंकस्यचित्स्वामिनोभित्रस्यवामनस्स्थितवृतान्तकथनमित्यर्थः ॥ तैःसंदेशैः त्वत्समीपंतवाम्बिकायाः समक्षे आगततवपुत्रस्यसंदेशकथनार्थमागतमित्यर्थः ॥ मानसंचित्तंविद्धिजानीहिनकेवलमहंवार्त्ताहरंकिन्तुघटकमप्यन्तरङ्गमित्यर्थः॥ इत्याशयेनाहयन्मानसंवाञ्छायुक्तैर्वासनासंमिलितैर्वायुभिः प्राणवायुभिर्यद्यपिवासनायाः मनोजन्यत्वेन तदधिष्ठानत्वान्मनोयुक्तत्वंनतुप्राणाधिष्ठातृत्वम् ॥ तथापिमनः प्राणयोः परस्परोपकार्य्योपकारकभावेनैवैकार्थेऽभेदप्राणयुक्तत्वम् यथालोके शोकादिमानसीव्यथायुक्तस्यपुरुषस्यप्राणवायुनिस्सारणेनैवकिंचित्शोकादिनिवृत्यामनश्शान्तिमापद्यते स्वेष्वात्मसुमोक्षेमुक्तौकैवल्यइतियावत् ॥ मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्श्रेयसामृतंमोक्षोऽपवर्गइत्यर्थः ॥ उत्सुकानामुत्कण्ठितानांसृतौमार्गेमार्गाध्वपन्थानःपदवीसृतिरित्यमरः ॥ योगिनांवृन्दानिसमूहानि गिरिशविषयेमहादेवं

प्रति त्वरयतिशीघ्रंगमयतिपान्थोपकारिणोममकिमुवक्तव्यंसुहृदुपकारित्व मितिभावः ॥ १०४ ॥

मू० इत्याख्यातेऽपिफल्कसुतंदेवकीचोन्मुखीसा ।
त्वामुत्कण्ठोच्छ्वसितहृदयावीक्ष्यसंभाव्यचैवम् ॥
श्रोष्यत्यस्मात्परमवहितासौम्यसीमन्तनीनाम् ।
पुत्रोदन्तःसुहृदुपनतः प्रागमात्किञ्चिदूनः ॥१०५॥

भर्तृसख्यादिज्ञापनस्यफलमाह ॥

इतीति इत्येवंतवपुत्रस्यसंदेशकथनार्थमागतमेवमित्यर्थः ॥ आख्याते कथनेपिफल्कसुतमक्रूरंदेवकीश्रीकृष्णमातेव साममममाता उन्मुखीतव समक्षेमुखंकृतवतीत्यर्थः ॥ उत्कण्ठया औत्सुक्येनोच्छ्वसितहृदयाविक सितचित्तासतीत्वांमनोवीक्ष्यज्ञात्वासंभाव्य सत्कृत्यच अस्मात्पुत्रमैत्री ज्ञापनात्परंसर्वंश्रोतव्यम् ॥ अवहिता अप्रमत्तासतीश्रोष्यति अत्रदेवकी अक्रूरोपाख्यानादस्याःपातिव्रत्यंमनसोदूतग्रहणसंपत्तिश्चव्यज्यते तद्गुण स्तुरसरत्नाकरे ॥ ब्रह्मचारीबलीधीरोमायावीमानवर्जितः धीमानुदारो निरशङ्कोवक्तादूतस्त्रियांभवेत् ॥ ननुवार्त्तामात्रश्रवणादस्याःकोलाभइत्या शङ्क्यार्थान्तरमुपन्यस्यति हेसौम्यसाधोसीमन्तनीनांनारीणां नारी सीमन्तनीवधूरित्यमरः ॥ सुहृदोपनतः मित्रमुखेनप्राप्त इत्यर्थः ॥ सुहृत्पदंविप्रलम्बशङ्कानिवारणार्थम् ॥ पुत्रोदन्तस्सुतस्यवार्त्ता वार्त्ता प्रवृत्तिवृत्तान्तउदन्तः स्यादित्यमरः ॥ प्रागमात् गृह आगमनात् किंचित् ऊनः ईषदूनः तद्वदेवानन्दकारीत्यर्थः ॥ १०५ ॥

मू० तामायुष्मन्ममचवचनादात्मनश्चोपकर्तुं ।
ब्रूयादेवंतवसतिसुतः कालिगिर्य्याश्रमस्थः ॥

अव्यापन्नःकथयतिदशांमातरंत्वांसरोगी ।
पूर्वाविद्यंगुरुतररुजंप्राणिनामेतदेव ॥ १०६ ॥

सम्प्रतिसंदिशति ॥

तामिति हे आयुष्मन् ( प्रशंसायामतुप् ) परोपकारश्लाघ्यजीवित इत्यर्थः ॥ ममवचनंभगवद्दत्तमित्रस्यकथनंतस्मादात्मनः स्वस्योपकर्त्तुंच परोपकारेणात्मानंकृतार्थयितुमित्यर्थः ॥ उपकारक्रियांप्रतिकर्म्मत्वेऽपित स्यानुकरोतीत्यादिवत्संबन्धमात्रविवक्षायामात्मनइतिषष्ठीनविरुद्ध्यतेय थाहभारविःसालक्ष्मीरुपकुरुतेयथापरेषामिति तथाश्रीहर्षश्चसाधूनामुप कर्त्तुंलक्ष्मींद्रष्टुंविहायसागन्तुमिति तांममातरमेवम्ब्रूयात् भवदिति शेषः ॥ हेसति अम्बिके तवसुतोभगवद्दत्तइत्यर्थः ॥ कालिगिरेःपर्वतस्या श्रमेषुनिवासस्थानेषुतिष्ठतीति कालिगिर्य्याश्रमस्थः सन्नव्यापन्नोनमृतः॥ यद्यपिपूर्वोक्तश्लोकेऽपिसुसुते इत्यस्यभावकथनेनमृतत्वाभावएवसूचितः तथापिस्पष्टतयातत्रनोक्तमित्यपुनरुक्तिदोषः ॥ अमरणेहेतुमाह सरोगी दुःखीसन् त्वांमातरंदशांस्वावस्थांकथयति अकथितंचेतिविहितकर्म्मसंज्ञा याः अर्थनिबन्धनत्वादपरिगणितस्यापि कथधातोर्द्विकर्म्मकत्वात्कर्म्म संज्ञा तथाहिगुरुतररुजामत्यन्तकष्टप्राप्तानांप्राणिनां एतदेवस्वावस्थाकथ नमेवपूर्वाविद्यं एतदेव प्रथममवश्यंज्ञापनीयम् ॥ कृत्याश्चेत्यावश्य कार्थे ण्यत् ॥ १०६ ॥

मू० हस्तम्बध्वाप्रगतिविनयोयोऽब्रवीत्सन्मुखेत्वां ।
दूरेवर्त्तीभवतिविधिनावैरिणीरुद्धमार्गः ॥
सोऽतिक्रान्तः श्रवणविषयंलोचनाभ्यामदृष्टः ।
त्वामुत्कण्ठाविरचितपदंमन्मुखेनेदमाह ॥ १०७ ॥

हस्तमिति ॥

यः तवपुत्रोहस्तंबध्वाबद्धहस्ताञ्जलिरित्यर्थः ॥ प्रणतौनमस्कारेवि नयोनम्रः दण्डवत्कृतप्रणाम इत्यर्थः ॥ सन्मुखेसमक्षेत्वांमातरं स्वदशामितिशेषोऽब्रवीत् सोऽतिदूरेवर्त्तीदूरस्थः केनापिप्रकारेणतेनावश्यागन्तव्यंस्वयमेवकिं तवप्रयासेननचागन्तुंशक्यते इत्याह वैरिणाविरोधिनाविधिनादैवेनरुद्धोमार्गोयस्यसः रुद्धमार्गः प्रतिबद्धवर्त्मा सार्द्धवर्षयाबत् पीडाकेनाप्युपायेननिवृत्ता इतिदैवंविनानसम्भवतीतिदैवएवमार्गरुणाद्धि इतिभावः ॥ श्रवणविषयंकर्णपथमतिक्रान्तः श्रवणेन्द्रियाविषयोऽपिनास्तीत्यर्थः ॥ तथालोचनाभ्यामदृष्टः नेत्राभ्यामप्रत्यक्षः नेत्रेन्द्रियविषयोऽपिनास्तीत्यर्थः ॥ अतिदूरत्वाद्द्रष्टुंश्रोतुंनशक्यः इतिभावः ॥ सः तवपुत्रः त्वामुत्कण्ठयोत्साहेनविरचितानिपदानिसुप्तिङन्तशब्दान्वाक्यानिवायस्य तदुत्कण्ठाविरचितपदम् ॥ पदशब्देचवाक्येचेतिविश्वः ॥ इदंवक्ष्यमाणंमन्मुखेनमनसः मंमाननेनवक्त्रा स्यंदनंतुडमाननंलपनंमुखमित्यमरः ॥ सएवब्रूतेइत्यर्थः ॥ मनसोवक्त्रासंभवेऽपिमुखेनकथनमसङ्गतम् तथापि मनसोदूतत्वासंभवेऽप्युक्तोत्तरमेवोत्तरमस्मिन् ॥ १०७ ॥

मू० नाहंशक्योयदिसुजननींदुष्टदेहेनद्रष्टुम् ।
त्यक्त्वेमंत्वामचिरदिवसादागमिष्यामिसेवाम् ॥
कर्त्तुन्तुष्ठ्यातवविधिवशात्कालपाशेनबद्धा ।
नागच्छेयंस्वितरगमनात्क्षीणपुण्यःक्षमध्वम् ॥१०८॥

नाहमिति ॥

यदित्सुजननींशोभनस्वभावांमातरं तवादर्शनेममेवापराधस्त्वन्तुसरलस्वभावाइतिभावः ॥ त्वांदुष्टेनज्वरादिनादूषितेनेत्यर्थः ॥ देहेनशरीरेण

सहृद्द्रष्टुंनेत्रविषयंकर्त्तुंनाहंभगवद्दत्तः शक्यः समर्थः तदा इमं ज्वरादिदूषितंदेहंत्यक्त्वात्याज्यतवमातुः तुष्ट्याप्रसादेनाचिरदिवसात्कतिचिद्दिनानन्तरं अचिरकालादेवदेहोपतिष्यतीतितदनन्तरमितिभावः ॥ सेवांकर्तुमागमिष्यामि विधिवशाद्दैवाधीनत्वात्कालपाशेनमृत्युरज्जुनाबद्धः क्षीणो नष्टःपुण्योयस्य क्षीणपुण्यःसन् शोभनंयदितरं अन्यस्थानमित्यर्थः ॥ इतरत्वंकैलासापेक्षया स्वर्गस्थानमित्यर्थः ॥ नतुनरकमितिध्वनिः ॥ ननुक्षीणपुण्याः नरकेएवयान्तिनतुस्वर्गेक्षीणपुण्यः कैलासगमनार्थमकृतपुण्यः इतिभावः ॥ अन्यथाकैलासस्थमातुश्चरणारविन्दे प्रतिक्षणंकथंसुस्थितोभवेयम् ॥ तत्रगमनाद्धेतोनागच्छेयम् ॥ प्राप्नुयांतदाक्षमध्वंसोऽपराधः क्षन्तव्यः इत्यर्थः ॥ स्वर्गगमनेऽपिवारंवार जन्ममरणपरम्परासत्वात्स्वर्गसुखस्याप्यल्पत्वंसूचितम् ॥ कैलासस्यमुक्तिसाधनत्वात्तत्रस्थायाः मातुरतिशयपुण्यत्वात्तत्सेवायाः मुक्तेरपि अधिकफलत्वात्क्षीणपुण्यस्यममागमनंनभवेदितिभावः ॥ १०८ ॥

मू० योग्योऽहंतेनयनसरणेर्मान्नयस्वाङ्घ्रिपद्मं ।
नीत्वातस्मिन्निशितानिनिदेप्राङ्कुशेनप्रमत्तम् ॥
स्वान्तेभद्रंविषयगहनेचारिणंशिक्षयेस्त्वं ।
आश्वास्यैवंप्रतिसमयकंगाढशोकांसुविद्याम् ॥१०९॥

योग्योहमिति ॥

हे जननिचेत् तेतवनयनसरणेः नेत्रपथस्य सरणिपद्धतिपद्ध्यापन्था नइत्यमरः ॥ नाहंभगवद्दत्तोयोग्यः तर्हि स्वस्यात्मनोऽङ्घ्रिपद्मंचरणकमलंनीत्वाप्रापयित्वा निशितः निशातः शाच्छोरन्यतरस्यामितीत्वविकल्पात् निशायतेस्मनिशातम् ( शोतनूकरणे ) निनदोऽनाहतशब्दः सएव

पृष्ठाङ्कुशः ॥ सृणिरङ्कुशोऽस्त्रीसृणिस्स्त्रियामित्यमरः ॥ निनदएवप्राङ्कुशः निनदप्राङ्कुशः निशितश्चासौ निनदप्राङ्कुशो निशितनिनदप्राङ्कुशः तीक्ष्णनिनदसृणिरित्यर्थः ॥ लौकिकाङ्कुशापेक्षयासंसारविषयविमुखकरणकरणत्वेनानाहतसृणौ प्रकर्षत्वमितिभावः तेन ॥ ननुस्वयमेवकथंनायाति इत्याह प्रमत्तम् ॥ अनवस्थितं मनश्चंचलत्वादनेकवासनायुक्तत्वेनतत्रगमनाशक्यत्वादितिभावः ॥ विषयगहनेपुत्रस्त्रीधनादिविषयवासनाकाननेचारिणं आसक्तमित्यर्थः ॥ स्वान्तंमनः ॥ इभानांहस्तीनां इन्द्रः ऐरावतोमहाहस्तीत्यर्थः ॥ स्वान्त इभेंद्रइवस्वान्तेभेन्द्रं मनोहस्तिनं शिक्षयेः शिक्षांकुरु इत्यर्थः ॥ समयंसमयंप्रतीतिप्रतिसमयंप्रतिसमयः एवेतिप्रतिसमयकं ( स्वार्थेकः ) कालेकाले इत्यर्थः ॥ पुत्र अन्यथापुत्रमित्रस्यमनस्तवसमक्षागमनेनपुत्रप्रति स्मरणप्रवाहेनिमग्नायाः मातुस्तवसंदेशविस्मरणंस्यादितिभावः ॥ अतएवगाढोनिर्भरः शोकोयस्याः सा गाढशोका तां उद्गाढनिर्भरं तीव्रैकान्तनितान्तानिगाढवाढदृढानिचेत्यमरः ॥ गाढशोकायाः आश्वासनमशक्यम् ॥ अतआह शोभनाविद्यासुविद्यातांविद्यारूपामित्यर्थः ॥ यथाकश्चित्पुत्रादिमरणधनाद्याहरणशोकातुरः गाढशोकेनिमग्नोऽपिविद्वांश्चेत्शास्त्रप्रज्ञयानिस्सरतिशोकप्रवाहादन्यथाम्रियते एवंपूर्वोक्तरीत्या आश्वास्य प्रबोध्य जीवितं धारयेथाः ॥ इत्युत्तरश्लोकपदाभ्यामन्वयः ॥ १०९ ॥

मू० शलादाशुत्रिनयनवृषोत्खातकूटान्निवृत्तः ।
शैलस्थायास्त्रिनयनपदेदत्तचेतस्सुमातुः ॥
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि ।
मत्संगृह्यप्रहितवचनंजीवितंधारयेथाः ॥ ११० ॥

शैलादिति ॥

त्रिनयनस्य त्र्यम्बकस्य वृषभेणोत्खाता अवदारिताः कूटाः शिख राणियस्यतस्मात् कूटोऽस्त्रीशिखरंशृंगमित्यमरः ॥ शैलात्कैलासादाशुशी घ्रम् निवृतंप्रत्यागतंसत् साभिज्ञानंसलक्षणं यथातथा प्रहितंप्रेषितंकुशलं भव्यं भावुकं भवकंभव्यंकुशलं क्षममस्त्रियामित्यमरः ॥ येषुसाभिज्ञानप्र हितकुशलेषु तैः तस्याः ममातुर्वचोभिः ममच मत् ममप्रहितंप्रेषितंवच नंसंगृह्यसम्यक्ग्राहयित्वेत्यर्थः ॥ शैलस्थायाः कैलासनिवासिन्याः त्रिन यनस्यमहादेवस्यपदेचरणे पदाऽङ्घ्रिचरणोऽस्त्रियामित्यमरादराकान्तपद शब्दश्चरणवाचकः ॥ दत्तं धृतंचेतोमनोयस्याः दत्तचेत्ताः दत्तचेताश्चासौमा तादत्तचेतस्सुमाता तस्याः जीवितंजीवनंधारयेथाःस्थापय ॥ प्रार्थना यांलिङ् ॥ ११० ॥

मू० कच्चित्सौम्यव्यवसितपदंबन्धुकृत्यंत्वयामे ।
प्रत्यादेशान्नखलुभवतोधीरतांकल्पयामि ॥
धैर्य्यम्वक्तिप्रदिशसिवरंज्ञानिनेयाचितंनो ।
प्रत्युक्तंहिप्रणयिषुसतामीप्सितार्थक्रियैव ॥१११॥

कच्चिदिति ।

हे सौम्यसाधोइदमेवबन्धोः सुहृत्संबन्धिनःकृत्यंकार्य्यंबन्धुकृत्यंदेव दत्तस्यगुरुकुलमितिवत्प्रयोगः व्यवसितंकच्चित्करिष्यामीतिनिश्चितंकिमु्क च्चित्कामप्रवेदने इत्यमरः ॥ अभिप्रायज्ञापनंकामप्रवेदनम् ॥ नचतेतूष्णीं भावात् अनङ्गीकारशङ्केयतस्तेसएवोचितः इत्याह प्रत्यादेशात् करिष्यामी तिप्रतिवचनात् उक्तिराभाषणंवाक्यमादेशोवचनंवचइतिशब्दार्णवे ॥ भव तस्तवधीरतां गम्भीरत्वंनकल्पयामिनसमर्थयेखलु तर्हिकथमङ्गीकारज्ञानं

तत्राहयाचितं सन्नेवक्तिनभाषते ददामीतिप्रतिज्ञावचनंनकरोतीत्यर्थः ॥ किन्त्वप्रतिज्ञातमपियोगिनेवरंश्रेष्ठं ॥ वरोजामातरिवृतौदेवतादेरभीप्सितेपिङ्गेपुंसित्रिषुश्रेष्ठेकुंकुमेतुनपुंसकम् ॥ इतिमेदिनी ॥ धैर्य्यंधीरतांप्रदिशसिददासिमनसस्त्वस्यपार्श्वेऽत्यन्तप्रियपदार्थोधैर्य्यंतच्चधय्यार्थंप्रयतमानायायोगिने धैर्य्यंधारयतीतिभावः ॥ तदेवदानमितिध्वनिः युक्तंचैतत् इत्याह हियस्मात् सतांसत्पुरुषाणां प्रणयिषुयाचकेषुविषये इप्सितार्थक्रियैवापेक्षितार्थसम्पादनमेवप्रत्युक्तं प्रतिवचनंक्रियाकेवलमुत्तरमित्यर्थः॥ नीचोवदतिनकुरुतेनवदतिसज्जनःकरोत्येवेतिभावः ॥ १११ ॥

मू० एतत्कृत्वाविधिमनुचितप्रार्थनावर्त्तिनोमे ।
सौहार्द्दान्मारकइतिचवामप्यनुक्रोशबुद्ध्या ॥
इष्टान्देशान्हृदयविचरेर्वासनासम्भृतश्रि ।
माभूदेवंक्षणमपिचतेवासनाविप्रयोगः ॥ ११२ ॥

सम्प्रति स्वापराधसमाधानपूर्वकं स्वकार्य्यस्यावश्यकरणं प्रार्थयमानोमनोविसृजति ॥ एतदिति ॥ हेहृदयसौहार्दात्सुहृद्भावात् (वाहृद्भगसिध्वन्तेपूर्वपदस्यच ) इत्युभयपदवृद्धिः ॥ मारकः मरिष्यतीत्यर्थः ॥ (मृङ्धातोर्भविष्यदर्थेएवुल् ) ॥ इतिहेतोर्मयिविषये अनुक्रोशबुध्याकरुणाधियावा कारुण्यंकरुणाघृणा कृपादयाऽनुकंपास्यादनुक्रोशइत्यमरः ॥ यद्यप्यम्बिकाविषयेतवसंदेशहरणं नानुचितं तथापितत्वज्ञानसिद्धये योगिनामनेकजन्मपरम्परयाद्वारभूतं त्वाम्प्रतिमे सन्देशंहरणमित्येवंरूपा अनुचिता तव अननुरूपायाप्रार्थनातत्रवर्त्तिनिर्वन्धपरस्यमेममैतत्संदेशहरणंरूपंविधिंकर्त्तव्यमपूर्वादृष्टंवा विधिर्विधानेदैवेऽपीत्यमरः ॥ विधानेइत्यस्यकर्त्तव्यकर्म्मणीत्यर्थः ॥ दैवेइत्यस्यापूर्वप्राक्तनशुभाशुभकर्म्मणीत्यर्थः ॥ ननुविधिशब्दस्योक्तार्थेनाशुभकर्त्तव्यादृष्टयोरपिग्रहणं श्रूयतेतत्र

प्रार्थनावर्त्तिनो मे मय्यनुक्रोशबुद्ध्याचेत्यनेनप्रियार्थ एवसूच्यते इति भावः ॥ कृत्वासंपाद्य एतद्देशात्कैलासस्थमातुर्दुःखिनो ममसन्देशस्यकर्णपथप्राप्तिरेवअपूर्वादृष्टत्वसम्पादनमितिभावः ॥ वासनामनोरथः ताभिस्संभृताश्रि उपचित्तशोभंसत् इष्टान्स्वाभिलाषितान्देशान् हृदयदेशानित्यर्थः ॥ योगिनामितिशेषः ॥ विचरेः यथेष्टंहृदयेषुविरहेत्यर्थः ॥ देशकालाध्वगंतव्याः कर्म्मसंज्ञाह्यकर्मणामितिवचनात् सकर्म्मकत्वम् ॥ एवंक्षणमपितेतववासना विप्रयोगोघटकतया इतिशेषः ॥ द्वारभूतया इत्यर्थः ॥ तद्रूपयावासनयासहाविरहोमाभूत् मास्तु ॥ माङि लुङि त्याशिषिलुङ् ॥ ११२ ॥

मू० तत्संदेशंप्रवरहृदयंदिव्यवाचाचचक्षे ।
प्राणंत्यक्त्वाशिवहितरतोमातृसंदर्शनाय ॥
प्राप्योदन्तंप्रमुदितमनाःमातरंसम्प्रतस्थौ ।
केषान्नस्यादवितथफलाप्रार्थनाऽभ्युन्नतेषु ॥११३॥

तत्सन्देशमिति ॥

प्रवरहृदयंवासनायुक्तमनोऽपेक्षयातन्निर्मुक्तमनसः श्रेष्ठत्व दर्शनार्थं वरमित्युक्तेऽपिप्रशब्दोपादानम् ॥ स्वकार्य्यवशादधिकतात्पर्य्यार्थम् ॥ तत्कर्तृपूर्वोक्तंसन्देशंसन्देशवाक् दूतादिमुखेनसंदिश्यमानवचनमित्यर्थः॥ दिव्यवाचादैववाण्या तस्यै इतिशेषः ॥ मात्रे इत्यर्थः ॥ आचचक्षेकथितवान् शिवस्यहितेप्रीतौरतः संसक्तः सोभगवद्दत्तः उदन्तंवार्त्तां वार्त्ता प्रवृतिवृत्तान्त उदन्त इत्यमरः ॥ मातृदत्तमितिशेषः ॥ प्राप्यज्ञात्वा प्राणंत्यक्त्वाप्रमुदितमनाः अत्युत्सुकमनस्को मातृसंदर्शनायमातुर्दर्शनार्थं मातरंदेवीमम्बिकांसंप्रतस्थौ तदुद्दिश्यसम्प्रस्थितवान् सम्यक् प्रस्थानंचै

तद्देहदंशत्यागः यद्यपिसंदेशप्रदान समनन्तरकालिनोऽपिदेहत्यागोनसंभाव्यतेग्रन्थसमाप्तिदर्शनात् ग्रन्थसमाप्तिसमनन्तरकालेऽपितत्वन्नसम्भाव्यते मंगलास्थानाद्गमनानन्तरमेकादशदिनोत्तरं तस्यमरणात् ॥ तथापिलोकापेक्षया प्राणसत्वेऽपि वस्तुतः तेनमातृचरणेशरीरप्राणोऽर्पितएवेति तत्तद्ग्रन्थाशयेनाविस्पष्टामीतिभूतकालिन्प्रयोगस्य साधुत्वम् ॥ अभ्युन्नतेषु उन्नतेषु उत्तमेष्वित्यर्थः ॥ प्रार्थनायाश्चावितथमनृतं वितथंत्वनृतम्वचः ( इत्यमरः ) ॥ नवितथंफलंयस्याः अवितथफला सफलेत्यर्थः ॥ केषान्नस्यात् अपितु सर्वेषांसफलास्यादिति ॥ ११३ ॥

मू० श्रुत्वावार्तांहृदयकथितांतांसुदैवोऽपिसद्यः ।
देहान्मुक्तिंसदयहृदयः सम्विधायास्तकोपः ॥
संयुज्यैनंयदिभगवद्दत्तंभवान्याः सुहर्षः ।
तस्याःस्वान्तेस्वभिरतसुखेवासयामासशश्वत्॥११४॥

श्रुत्वेति ॥

अस्तोनिवृतः कोपः क्रोधोयस्यास्तकोपः सुदैवोब्रह्माऽपि अतएवदययासहितः सदयः सदयश्चासौहृदयः सदयहृदयः अम्बिकयातुश्रुतामितिभावः ॥ हृदयकथितांमनोवचनांवार्त्तांवृत्तान्तंसद्यः आत्मनोदेहस्यमुक्तिंमोचनंनिवृतिमित्यर्थः ॥ मुक्तिमोचनमोक्षयोरितिहैमः ॥ सम्यग्विधायकृत्वासुहर्षः समुदितस्सन् अस्त्वेवंविधपुरुषोऽपि अस्मिन्कलिकालेभाग्यशूरस्तपस्वी ममलेखनमप्यतिक्रामतीतिभावः ॥ निष्पापत्वेनाशीतिवर्षपर्य्यन्तभोक्तृदेहः परित्यक्तः इतिध्वनिः ॥ एनंभगवद्दत्तंपदिपादेसंयुज्ययोजयित्वातच्चरणारविन्दाश्रयङ्कारयित्वा इत्यर्थः तस्याः अम्बिकायाःशोभनमभिरतं अत्यन्तसुखं यत्रस्वभिरतसुखंतस्मिन्स्वान्ते अन्तःकरणेशश्वतनित्यं वासयामास निवासंकारितवान् ॥ अत्राप्युक्तोत्तरमेव॥११४॥

गूढार्थादिविप्रकाशिकान्तविबृतिस्सम्पूर्णतामेतिच ।
बालानन्दकृतासुतेनभगवद्दतेननाम्नामम ॥
दूतान्तादिमनोकृतेर्गुणरसेन्द्वङ्कैसमेफाल्गुने ।
तुष्ट्यैशम्भुशिवोभयोःप्रतिदिनम्भूयात्सदानौशुभम्१९६३

गवर्मेण्टोपाधिधारिणःपण्डितश्रीरामकृष्णतर्कशास्त्रिणः (हरिद्वारसेविनः ॥ ) सहर्षमिदमुच्यते यन्मनोदूताभिधंनिबन्धंदृष्टिसरणिमागत्य रञ्जयतिनोचेतः प्रसारयति चाल्पवयस्कस्यापिकवेर्भणतिप्रसरकुञ्जनिगूढ क्षितिधरोपसंसक्तस्तनयित्नु विद्युल्लतामेषद्वीणाप्रघोषसंस्तब्धविद्वन्मण्डलीकृत चारुप्रभासच्छटादीधितिंकिंबहुना यतः ।

जायन्तेविधिबद्धगाढरसनासंनद्धबुद्धीन्द्रियाः ।
विद्वांसोविविधप्ररूढमतयोवर्त्स्यन्तिचैवापरे ॥
किञ्चाहंप्रविभज्यसुन्दरगुणारोपच्छटाभास्वराम् ।
भगवद्दत्तकृतिंविलोक्यधिषणांमन्येबुधाःप्राक्तनाम् ॥१॥

यदयमष्टादशहायनोऽपि शृङ्गारवैराग्ययोर्हेयोपादेयकक्षांपरामधिजगे । कविवृन्दसंसेवितचरणकुहरस्य श्रीमतःकालिदासस्य मेघदूताभिधांभारतीं योगवैराग्यपथाऽनुससारैतेनास्य पूर्वोपार्जितवैदग्ध्यसमुद्भूतसंस्कारावल्यनुमीयते नह्यपरिपक्वमतेरवंविधरचनोल्लासःसंघटते पितृभिश्चास्य श्रीबालानन्दशास्त्रिभिर्गूढार्थप्रकाशिकाख्या ॥ विविधप्रमाणगुम्फितासुमनोहराप्रवृतिर्व्यधायिप्रदर्शितंचपुस्तकद्वयंश्रीमद्भिः ( बालानन्दशास्त्रिभिः ) गङ्गातीरतरङ्गशीतलेशिले हरिद्वारनाम्निपुरे निरीक्ष्य च परमानन्दकक्षामुपगतोऽस्मि किम्बहुना॥ एतयोर्लिपिबन्धेनविद्धचित्त

विहारिणा ॥ प्रसभंमनूमनोर्नीतं परागोन्मत्तभृङ्गताम् ॥ २ ॥ अलमति विस्तरेणविज्ञेषु ॥ १ ॥

माधुर्य्यादि गुणगणलास्य भूमितयाप्रकर्षेणसहृदयानांहृदिस्पृक् अलङ्कारनिकुरुम्बोल्लासेन चाधिकतरंचमत्कारकारि मनोदूताऽभिधानमेतत् काव्यं भावध्वनिरसध्वनिप्रधानतयासकलकाव्यमूर्द्धन्यतामालम्बते अथ च पञ्चदशवार्षिकेणबालेननिर्म्मितमित्यतोऽधिकतरंश्लाघ्यते इतिसमनुते पण्डितवर श्रीगोकुलचन्द्रशर्म्मणांतनूजः पण्डितमण्डलाऽऽखण्डल श्री गङ्गाधरशर्म्मणामनुजः जम्बूपुरीवदनारविन्दायमान श्रीरघुनाथमन्दिर स्थराजकीयपाठशालाऽध्यक्षः श्रीमत्प्रतापसिंहनृपतेरप्रतिमंकृपापात्रम् पण्डितजगदीश्वरशर्म्मा उक्त श्रीरघुनाथमन्दिरस्थपाठशालाप्रधानाऽध्यापकेन श्रीरघुपतिचरणसरसीरुहरसलिहा काशीनाथशर्म्मणाऽप्येतत् काव्यदृष्ट्वाऽदुष्ठमितिपर्य्यष्टयतक्रियासाभिहारेणेति शिवम् ॥ जम्बूवास्तव्यपण्डितनिक्कारामपाठकोऽमुमर्थंसम्मनुते सुकाव्यमित्यथर्ववेदाद्यध्यापकबलदेवशर्म्मा ॥ २ ॥

अयिमहाशयाः पश्यतविधेःकौतुकं यदिरावलपिण्डीनिवासिविविध विद्यारसरसनचातुरीचण श्रीमद्बालानन्दशास्त्रितनूजभगवद्दत्तशर्म्मप्रणीतमभिनवंसुमधुरञ्चैतत्मनोदूताख्यं विद्वद्वर्य्यपण्डितबालानन्दशास्त्रिकृतगूढार्थप्रकाशिकाख्यटीकासहितंकाव्यंहरिद्वारागतबालानन्दशास्त्रिणांसविधेऽवलोकितमस्माभिः तदिदंसटीकंयोगशास्त्ररहस्यबोद्धृणांविशेषतश्चमनोयोगावगाहनकौतुकितमानसानांसुहृदयानांविदुषामवश्यमानन्दयतिचेतांसिव्याख्यापिनितान्तसरलासम्यगर्थावबोधनक्षमतामावहतिकचिच्चटीकाकृतातर्का अपिसुसमाहितास्सन्ति तदिदंसुमनोहरंसमस्तलोकोपकारायाल्पमूल्येनैववितरेयुरित्यभिप्रेमः सकलसुरासुरमाणिक्यमरीचिचयचुम्बितचरणसरसीरुहयुगला श्रीभागीरथीनिवर्त्तयतु निष्प्रत्यूहंकार्यजात

मेतेषामित्याशास्महे इतिशम् ॥ पंडितव्याकरणाध्यापकगोविन्दशास्त्री ( संस्कृत मनोरंजनी पाठशाला हरिद्वार ॥ ३ ॥ )

अष्टादशवर्षीयोऽप्यष्टादशविद्याविदांवरेण्यः ।
पंडितभगवद्दत्तश्चक्रेकाव्यंमनोदूतम् ॥ १ ॥
तदिदंतत्स्मृतिरूपंगुणगुम्फितंरीतिभूषितंचापि ।
नानालंकृतियुक्तंसम्मनुतेखण्डकाव्यमिदम् ॥ २ ॥

श्रीभारतधर्म्ममहामण्डलमहामोहपदेशकपंत्ताम्भूषणविद्यासागराद्यने कोपाधिकराजपुत्नायणान्तर्गताजयमेरुपुर प्रतिष्ठितश्रीमद्राजकुमारमहा विद्यालयधर्म्मशिक्षकोऽमृतसरःपुरवासीश्रीबलाकिरामशार्म्मा &. R. A. S. &. ॥ ४ ॥

यदेतन्मनोदूताख्यंकाव्यंश्रीभगवद्दत्तकविकृतं योगिविद्हृदयसर्व स्वमिवप्रतिभाति तच्छ्रीबालानन्दविद्वाद्भिः सरलदेवभाषयायोगविषयग म्भीरतांसरलीकुर्वद्भिः संवलितम् ॥ अथच श्रीमहर्षिसाधुरामकृतपंचा यतनदेवप्रतिष्ठाख्ययागे (श्रीसूर्य्यलोक।) गतवतामयादर्शितत् भगवद्द त्तसद्धारणावती मद्भगवद्दत्तकृतयोगिहर्षहर्षितविद्वज्जनमनोभ्रमरस्थान मिदंकाव्यम् ॥ खल्वेतत्संसारतापतप्तानांपांथानांसहतशीतलोपदेशवाटि काविश्रामस्थलम् ॥ अत आद्रियतेऽभितः मथुरावास्तव्यपण्डितदामोद रेणसदामोदरेणशास्त्रिणामहोपदेशकेन ॥ ४५ ॥

सम्मतिरत्रज्वालाप्रसादशर्म्मणः विद्यावारिध्युपाधिधारिणोमहोप देशकभारतधर्म्ममहामण्लस्यमुरादाबादनिवासिनः ॥ ६ ॥

भोभो महानुभावाः प्रियसुहृदश्चभगवतिपरमेश्वरेदौत्यङ्गतंमनःपरम पुरुषार्थं गमयतीतिकेषान्नाऽनुभवद्गतम् तादिमंग्रन्थंपूर्वापरंसमनस्कम

भ्यसतांतत्वविद्यारसिकानांनदुर्लभमितिव्याकोशंपर्य्यालोचितम् अपरञ्च देवविषयकरतिजनकत्वेनशिवेतरध्वंसकत्वान्मेघदूतादिभ्यश्चातीवाधीयानानांशुश्रूषमाणानांचकल्याणकरमिदंमनोदूतम् यत्रहिअश्रद्धयसप्तदशवयस्केनापिग्रन्थकृतातीन्द्रियाणिविषयजातानिप्रकाशयतबोधितमेतत्साधनेहिनियमोऽन्यजनानांयोगिनांतुतपसाखिलसिद्धिः तत्रतंत्रुद्धिसंयोगंलभतेपौर्वदेहिकमितिच तदेतदाकलय्यसारासारविवेचनहंसागुणगृह्याविपश्चितोनुभवन्त्वितिप्रार्थयेमेरठनिवासीपंडितगोकुलचन्द्र महोपदेशकोभारतधर्म्ममहामण्डलस्येतिशम्॥ सँव्वत् १९६३ चैत्रशुदिचतुर्थ्याम्॥ ७॥

ललितमधुरकोमलवर्णाभिराममर्थचमत्कृतिजनकमद्भुतप्रवन्धं समस्तजगदाधारेश्रीश्वरेग्रन्थकर्तृमनोनियोगविषयकं शब्दार्थसदृश्याभ्यांमेघदूताभाषमपि योगरहस्यविदांविदग्धानामपूर्ववस्तुप्रतिपादकमिदंमनोदूताख्यमीश्वरस्तवरूपंपद्यात्मकं श्रुतिमधुरशब्दार्थेपिपठिषूणां जन्मिनाङ्कमपि विचित्रमवर्णनीयस्वरूपंस्वात्मसंवेद्यंसाहित्यसुधास्नानजन्यमामोदं समुल्लासयति॥

रम्यार्थप्रतिपादकंस्तवमिदं दृष्ट्वामनोदूतकंजन्मीस्वात्मानिचेश्वरस्यपरमांश्रद्धांसमालम्वतेयद्यप्यस्तिचमेघदूतसदृशं शब्दार्थसम्पादिभिर्निर्मातुःप्रतिभाप्रवन्धकरणेलोकाद्वितीयामता॥ अद्यवर्त्तमानसामयिकराजविद्यान्ययवनविद्याप्रचारप्राचुर्य्यलुप्तसंस्कृतसंस्कारप्रायेऽप्यार्य्याणांहृदिसंस्कृताविद्यायास्तदेवस्वाभाविकमहत्वंविलोक्य महान्हर्षश्चचित्तेजायतेएवंप्रायेऽप्यत्रदेशेसंस्कृताविद्याप्राचीनपठनपाठनरीतिप्रचारं पूर्ववदेवनवीनग्रन्थाविष्कारान्समाचारपत्राँश्चावलोकयन्नहमेताद्विद्याविषयेऽपीश्वरस्यानुकूल्यमवगच्छामि॥ सम्मातिरियंलक्ष्मीनारायणशास्त्रिणः॥ ८॥

श्रीरावलपिण्डीनिवासिपण्डितकुलोत्तंसेन श्रीमद्भगवद्दत्तकविनानिर्म्मितमिदंमेघदूतानुसृतिपुरःसरमपरमेवनव्यंमनोदूतंनामकाव्यम् तदेव

खलुतत्पित्रा श्रीबालानन्दमहाभागेनविवृतमतीवप्रमोदकरंचसरसहृदया
नाम् ॥ नखलुपूर्वजन्मार्जितकवित्व बीजभूतपुण्यसंस्कारमन्तरैतादृश
स्यापूर्वस्य सुचारुचातुर्य्याचित्तस्य प्रसादगुणगुम्फितस्यचप्रबन्धस्यनि
र्म्माणंसंभवतीतिमन्यामहे ॥ सादरंसबहुमानपुरस्सरं ग्रन्थस्यास्यमुद्राप
णेस्वसम्मतिंदद्मोवयमिति ॥ इत्यलम्विज्ञवरेषु ॥ ह० कान्यकुब्जानिवासि
गणेशदत्तवाजपेयिनः ॥ म० म० भा० ध० म० मं० ॥ ह० महोपदेश
कबाबूरामशर्म्मणः ॥ १० ॥

अहोमनोदूताख्यं खण्डकाव्यं भगवद्दत्तकर्तृकं मेघदूतानुकारिमनो
हरंच मयाव्यलोकि आशास्ये यदेतस्यावलोकनेनविद्यार्थिनामुपकारोवि
द्वन्मनोमोदश्चभविष्यतीति ॥ श्रीभारतमहामंडलमहोपदेशकलब्धशास्त्र्यु
पाधिक श्रेष्ठनीति गवर्नमेण्ट पाठशालाप्रधानाध्यापक जगन्नाथशर्म्मा
हम् ॥ ११ ॥

अत्रशुभावसरे मुलतानप्रांत श्रीसूर्य्यलोकावच्छिन्नस्थाने ब्रह्मचार्य्यु
पाधिभृच्छ्रीमत्साधुरामशर्म्माप्रहूतबहुविद्वद्वरसमाजागत श्रीयुतबालान
न्दशास्त्रिणापंचदशवयस्काधीतानन्तव्याकरणादिविद्या परीक्षोत्तीर्णपूर्वक
र्म्मोपार्जितपरिपाकलब्धराजयक्ष्मात्मकासाध्यातङ्कग्रस्तहेतुत्वजीवनाशा
निरस्तस्वविद्यावैभवात्मक कीर्त्तिस्थिरीकरणकामाष्टादशहायनस्थ श्रीम
द्राधारमणपदभ्रमरायितभक्तजनप्राप्य श्रीमद्वैकुण्ठलोकगतस्वतनूजभगव
द्दत्तनिर्म्मितमनोहरं मनोदूतनामकाव्योदर्शि तद्दर्शनन्यस्मारित भगवद्द
त्तगुणग्रामाकृष्टपरिम्लानहृदयतत्कृतग्रन्थसौन्दर्य्यपरामर्शकरणाक्षमेणापि
बीकानेरीयहर्षान्वयजकेवलरामशर्म्मणातत्काव्यरचनायां धन्यवादात्म
कासम्मतिः प्रालेखि ॥ १२ ॥

श्रीविजयतेतराम् ॥

गुणरसांकेंदुकमितिसंवत्सरारंभदिने ऋषिसंज्ञाविशिष्टसाधुरामश

र्म्मकृतयज्ञाहूतविद्वज्जनांतर्गतसमागतपण्डिताग्र्यगण्यहरनालज्ञात्युद्भवबा लानन्दशास्त्रिणः पार्श्वेस्वसुतसप्तदशवयस्कस्यस्वर्वासाय भगवद्दत्तविरचि तमनोदूतकाव्यस्यातिलालित्यतामवेक्ष्यतदीयजन्मांतरीयाभ्यासविशेषत यैहिकजन्मनि स्वेष्टकृपयाप्राणान्तसमये योगविशिष्टमेघदूतानुकरणमनोदू तकाव्यंकृतमितिज्ञात्वासर्वेषांबालानामुपकारोऽनेन भविष्यतीत्यस्मिन्ग्र न्थेन्त्राह्मिज्ञातीयशतलक्षग्रामनिवासिसिंधुदेशीयमहोपाध्यायपदवींगतजेसो हमपिसम्मतिंकरोमि ॥ जिलामीयांवालीतासीलिलैया ॥ १३ ॥

श्रीमत्साधुरामब्रह्मचारिनिमंत्रणाहूतदेशांतरीयविद्वन्मण्डलस्थहरना लज्ञातीय श्रीयुतबालानन्दशास्त्रिद्वारापञ्चदशवयस्केनैव भगवद्दत्ताभिधे नतत्सुतेनसुप्तप्रबुद्धन्यायेनेवाधिगताखिलसद्विद्यापुंजेनाल्पवयस्यसाध्यरो गरुग्णेन कीर्त्तिरक्षरसंबद्धास्थिराभवति भूतलइत्यभिप्रायमवलम्ब्यमेघ दूतनामकाव्यपरिणालीभूत मनोहरमनोदूतनामकाव्योनिर्म्मायि दृष्ट्वातं स्वर्गप्राप्तिंच तस्यश्रुत्वातद्गुणव्रातवरणोत्सुकोऽपितद्विरहानुषक्त चिन्तत्वा त्तदुल्लेखितुमशक्तस्सञ्जगतीतलेतद्यशोविख्यातिं श्रोतुकामोमुलतानान्तिक शुजाबादपत्तनस्थपुष्करणांतर्गत पण्याज्ञातिजबल्लाभिधेयोमनोदूतकाव्य लालित्येसम्मतिंलिलेख चित्तविक्षेपात् ॥ १४ ॥

श्रीचंद्रभागायाः पूर्वतटेमुलतानमण्डलान्तर्गत श्रीसूर्य्यलोकेब्रह्मसत्र व्याजाच्छ्रीमत्सूर्य्यनारायणोपासकसाधुरामब्रह्मचारिनिमंत्रितविविधदेशा न्तरागतपण्डितवरसमाजमध्यस्थपण्डिताग्र्य श्रीयुतबालानन्दशास्त्रिपंच दशहायनवयस्य धीतव्याकरणन्यायमीमांसादिहेतुकदुर्बलीभूतमस्तकहृ दादिप्रधानावयवजन्याचिकित्स्यार्त्त्यार्त्तस्वकीयात्मजभगवद्दत्तनिर्म्मिता तिललितमनोदूतनामकाव्यमदर्शयत् दृष्ट्वाचतंतद्गुणगणंस्मरणशोकावृ त्तमानसोमुलतानपत्तनस्थपुष्करणान्ववायान्तर्गत व्यासोपाधिराधाकृ ष्णशर्म्माकाव्यप्रशस्तौसम्मतिमालिखत् ॥ १५ ॥

महाशयाः आपदचूडामिदंमनोदूतं पर्य्यालोचयतः सुखमनुभवतश्च नविश्राम्यतीयंलेखिनी अप्रशंस्येमंग्रन्थंतत्परिहायवक्तृविशेषानिस्पृहमतस रतांगुणग्रहणोद्देश्यक व्यापारवन्तोभवन्तोभवंतु हस्ताक्षराणिपण्डितराम प्रसादशर्म्मणः किलपरीक्षितगढानिवासिनः ॥ १६ ॥ जि मेरठ ॥

दृश्यंतेब्रह्मचारिणोऽपियानिकाव्यान्याकर्ण्यमनसिज मनोदूषिताता निकथमिवमादृशावर्जितव्यानिनकथयेरन् पुनर्व्यवहारविदेतु मनोदूतं तेषांपरमबोधकरम् मन्वाननप्रशस्यतेकृताष्टोत्तरशतयज्ञेनसाधुरामब्रह्म चारिणा साधुरामस्यसम्मतिः ॥ १७ ॥

साधुरामब्रह्मचारिकृतयज्ञगतेनमया एतन्मनोदूताव्हकंकाव्यमवलो कि तंदिङ्मात्रंमनासिमहाल्हादोजातः काव्यकृतविज्ञस्यसप्तदशवयस्क स्येमंपंचत्वं श्रुत्वामनसि महद्दुःखंजातमेतत्काव्यंविद्वाद्भिरवश्यमवलो कनीयम् ॥ सूजापत्तनस्थस्य जोसीतिजात्यवच्छिन्नहेमराजशर्म्मणास्स म्मतिरत्र ॥ १८ ॥

वर्षेह्यग्निरसांकचंद्रप्रमितेश्रीसूर्य्यलोकेशुभे ।
सर्वेयज्ञमहोत्सवेद्विजगणाः प्राप्तास्तुदेशांतरा ॥
च्छास्त्रित्तत्रसुबालचन्दहरनालज्ञातिरप्यागतः ।
तत्पुत्रेणकृतंमनोभूदभिधंकाव्यंमहत्सुंदरम् ॥ १ ॥
तद्दृष्ट्वाहिवरकृतौबुधवराविश्वेऽददुः सम्मतिं ।
शूजाबादपुरागतस्यशिवदत्तस्यास्तिवैसम्मतिः ॥
दैवान्मृत्युमुपागतस्सभगवद्दत्ताभिधोग्रंथकृत् ।
हाकष्टंखलुशोकवारिधिगतासर्वेसभासज्जनाः ॥ २ ॥

सम्मतिरत्नंदरागाजीखाननिवासिपंडितमन्नूलालात्मजपंडितआत्मारामेणापिकृता ॥ २० ॥

काव्येयस्यदृढाग्रहोनचलने स्फोटोरवेनोतनौ ।
गीतेरागविलासईश्वरपुणस्यासीन्नयस्यस्मरे ।
चिंतावैनिगमेनयस्यविभवेधृत्वास्मृतिंपूर्वजां ।
बालानन्दशरीरजातभगवद्दतोहिबाल्येऽमुया ॥ १ ॥
वृत्यैवंविचरंश्चकोविदवरः योवीक्षतेशास्त्रकं ।
नित्यंकौरववंशकार्यरतकश्चक्रेपिसाधूदितम् ॥
दैवेनैवमकार्य्यपूर्वजनितेनाघेनसप्तेन्दुके ।
वर्षेक्षीणकरज्वराभिमिलितोऽवर्वर्तसंशय्यालये ॥ २ ॥
भद्रंकर्त्तुमियेषलोकसुखदः गन्तुंसयोगेनस्वः ।
वर्षार्धंविषमज्वरेणयुगपद्दग्धोपिबालात्मजः ॥
तर्कैकर्कशतांजगामनयतेर्नामायशोराजकैः ।
मार्तण्डंविदुषांचयुक्तमहमेनंस्तौमिपूर्वाक्षरैः ॥ ३ ॥
क्रांत्वासर्वतमोऽन्धकारमनिशं बाल्येसुविद्यारतो ।
ध्यात्वाकामदुघांरमांचभगवद्दत्तः सबालात्मजः ॥
दृष्ट्वास्वंविषमज्वराभिग्रसितं सप्तेन्दुकेवत्सरे ।
कृत्वायोगपरार्थकंस्वरगमत्काव्यंमनोदूतकम् ॥ ४ ॥

ज्ञात्वाभ्यासंचबाल्येवयसिनिखिलविद्वांसआश्चर्य्यमापुः।
शिष्टाचारानुरक्तप्रथितमतिमतस्तस्यदृष्ट्वामनीषाम् ॥
कृष्णेयोगीश्वरोयंमुनिशशिवयसिस्वीयवृतिंचकार ।
दूतांतंनामकाव्यं प्रथमसुतमनः स्वर्गतिप्राप्तयेच ॥५॥

जिल्लामीयावालीलैयानगरस्थकाष्ठपालजात्युत्पन्न श्रीटाहल्यारामात्मजशतलक्षस्थमहोपाध्यायब्राह्मिजात्यवच्छिन्न जेसराजशिष्याविशारदपदविशिष्ट जगन्नाथशर्म्माहंपञ्चभिश्श्लोकैस्सम्मातिमकार्षम् ॥ २१ ॥

स्वस्तिश्रीसर्वोपमेयसदुक्तियुक्ति विचारपारगविगतविकृति सुगतप्रकृति सुनीतिविनीति प्राप्तिपरिहारसंलग्नमनस्कपरोपकृति जनित यशोहिमकरखरकरधवलीकृताशाखण्डेषु हरनालज्ञात्युद्भवशाखि संज्ञाविशिष्टसात्मजवालानन्दशर्म्मसु सात्मजसभ्रातृ भ्रातृजजेसब्राह्मिकर्तृकानातितत यस्समुल्लसन्तुतरामत्रतत्रास्तुशंश्रीशंकृपात अपरंविदम् ॥

श्रीसाध्वादिमरामसाधितमखे श्रीचन्द्रभागातटे ।
पूर्वेभानुपुरेहिकोटिवसति श्रीजेसराजाव्हयाः ॥
जग्मुस्तत्रजगामशास्त्रिवरकोबालादिमानन्दक।
स्तेनैतेनिजपुत्रसंस्मृतिकृतेकाव्यंसमर्थार्थिताः ॥ १ ॥
कृत्वावृत्तिमिमांसुयंत्रणविधावस्योद्यमात्कोस्म्यह ।
मस्मिन्नेवसुसम्मतिंददतवाआलोक्यसंशोध्यच ॥
इत्युक्तैश्चकृतप्रतिज्ञविबुधैः श्रीजेसराजाव्हयै ।
राज्ञसश्चददामिसंमतिमहंबुद्ध्यास्वयापण्डिताः॥ २ ॥

श्रीमद्रावलपिंडीनामनगरे बालादिमानन्दक ।
आस्तेश्रीहरनालजातिजमहोपाध्यायसंज्ञायुतः ॥
तस्याभूतनयः शरैकवयसिप्राप्ताखिलर्द्धिस्सदा ।
संद्विद्याविनयप्रयुक्तभगवद्दत्ताभिधस्सत्कविः ॥ २ ॥
प्रारब्धेननगैकवर्षवयसिप्रातेनकष्टांदशां ।
षण्मासंक्षयमज्ज्वराग्निवशतोदंदह्यमानेनह ॥
तेनाकारिसुयोगप्रापिजलमुग्दूतानुकारीहभो ।
योगाद्भ्रष्टजनेनवाहरिषदंकाव्यंमनोदूतकम् ॥ ४ ॥
ततपित्रासमकारितस्यसुशुभाव्याख्याचतुष्ट्यौविदां ।
तद्दष्ट्वासुविचार्य्यशास्त्रि विबुधैदत्ताशुभासम्मतिः ॥
संभूयादिदमेवविश्वविदुषांसंतुष्टिसंप्रापकं ।
वच्मीशानुग्रहाद्दयालुरनिशंलैयाख्यवासिद्विजः ॥ ५ ॥

जिलामैयावालीलैयानगरस्थकाष्ठपालजालजातित्वावच्छिन्नब्राह्मिज्ञातीयकरोडस्थ जेसाराजाशिष्य दयालुचन्द्रशर्म्मणः श्लोकबद्धासम्मतिरियमेव ॥ २२ ॥

स्वस्तिश्रीमत्सकलपापराशिनाशकारक राधिकाजानिपत्क जानुध्यानशुद्धानुमानसमस्तगुणगणालङ्कृत स्वदेषायविदेषायसभास्वसौशील्यगुणाभिलब्धसन्मानशास्त्रिसंज्ञाविशिष्टसात्मजमहोपाध्यायबालानन्दजीकाभिधानेषुसात्मजजेसब्राह्मिकृताबखरस्थ भोजेपौत्रजातिजकविसंज्ञाविशिष्टजेसाशिष्यविद्याधरशर्म्मकृताश्चप्रणतिततयस्समुल्लसन्तुतरामत्रतत्राखु

शम् श्रीस्वेष्टकृपात अपरन्त्विदम् ॥

श्रीशास्त्रिरावलपिण्डिकानिजगृहश्चास्तिद्विजःकर्म्मठो ।
बालानन्दउदारधीर्मतिमतांप्रोक्तोयथार्थाख्यया ॥
वेदैर्योजितवान्विधिंकवितयाकाव्यञ्चवृत्तैरहिं ।
तर्केणैवबृहस्पतिंसमहोपाध्यायसंज्ञान्वितः ॥ १ ॥
तत्सूनुर्हरनालजातिजवरोविद्यासुतातोपमो ।
विद्वानध्ययनश्रमेणभगवद्दत्ताभिधानोमतः ॥
मान्यःप्राज्ञवरैश्चपंचदशकाक्षप्राप्तविद्याधनो ।
वर्षेसप्तदशेज्वरोतिविषमस्तद्देहमध्येभवत ॥ २ ॥
षण्मासपर्य्यन्तमभूच्चकष्टंतदीयदेहेज्वरसंभवंवै ॥
तेनैवविप्रःसविचालितोऽभूद्योगीवियोगाद्गताचित्तवृतिः ३
योगपरार्थविशिष्टंकाव्यश्रेष्ठंचमनोदूताख्यम् ।
समयेतत्राकार्षीद्घनदूतानुकरणंचासौ ॥ ४ ॥
मनोदूतंकाव्यंनिजसुतकृतंवीक्ष्यजनकः ।
सुतंदृष्ट्वाऽपुत्रंतदतिविरहेणैवमिलितः ॥
सुताख्यामेतिष्ठेदितिमतियुतःपंडितवरो ।
व्यधादव्याख्यांतस्यप्रथितपदपङ्क्त्याविरचिताम् ॥५॥
अभूत्कविपंडितमंडितकाव्यःसरावलनिर्म्मितपुर्कृतवासः

पवर्गतुरीयकवर्गतृतीयवकारतवर्गतृतीयमुखाख्यः॥६॥

किंसम्बोधनमस्तिसुद्धिपगतेस्तुल्येचकः प्रत्ययो।
विष्णोरंशसमुद्भवोऽत्रितनयःकोनिस्पृहस्सर्वदा॥
कीदृक्षोजलधिर्बभूवनितरां लक्ष्म्याविवाहात्परं।
कोऽकार्षीज्ज्वरजातकष्टसमयेकाव्यंमनोदूतकम्॥७॥

सेवायांधातुरुक्तःकइतिबुधवरैःश्रेयसीकामुरारे।
श्चंद्रस्यामंत्रणंकिंकविमतिरचितंतारकागच्छतश्च॥
व्यक्तायांवाचिधातुःकइहनिगदितःकोऽस्तिदानेचधातु।
र्वर्णश्चत्वादिमःकोऽल्पवयसिकृतवान्कोमनोदूतकाव्यम्८

मनोदूतकाव्यस्यमुद्रापणायकृतास्सम्मतिश्शिष्यविद्याधरेण
मयाजेसराजस्यकोटिस्थितस्यगुरोःश्रौतवाण्यैवसंप्रेरितेन९

श्रीविक्रमराज्यतस्त्रि षडङ्क भूवर्षे चैत्रशुक्लषष्ठ्यां शनौ महर्षिसाधु रामयज्ञे श्रीमत्पुरुषोत्तमलालजीकस्यात्मजलालाधरशर्म्मणा श्रीमद्भगवद्दत्तहरनालज्ञातिकृतमनोदूतकाव्येसम्मतिङ्कृता॥ करोडलालासन निवासि जिला मीयावाली॥ २४॥

दृष्ट्वाह्येतन्मनोदूतंसंतुष्टोमेममनोह्यभूत्
कर्त्तुःपंचत्वतांश्रुत्वाशतधाभिद्यतेसुहृदिति॥

मथुरावासी मनोहरलाल शुक्लः॥ २५॥

अत्रसम्मतिः पंड्यासूर्यशङ्करनागरशर्म्मा विहारीपुरामथुरापुरी २६

अत्रसम्मतिः वेदपाठीकेशवरामकाशीनिवासीमहल्ला मणिकर्णिका घाट ॥ २७ ॥

सर्वे सज्जनमहाशयाः मयामनोदूतकाव्यमवलोकितं अध्ययनान्महानाल्हादो जातः अवश्यमेवमुद्रायितव्यम् ॥ कराक्षराणि वासुदेवशर्म्मणः टीकमेंद्रवेदपाठी ॥ २८ ॥

ठाकुरदासमहावीरेणस्वहस्तेनलिखितमिदंग्रन्थमत्युत्तमम् ॥ देरास मैलखानदेश ॥ २९ ॥

रसैत्क्षालितैःपद्यरत्नैःसुरीत्याअयंकाव्यहारःकृतःशोभमानः
रसोत्कर्षकैःशुद्ध्यलंकारयुक्तैर्मनोज्ञैर्गुणैर्गुफितोदूषशून्यः १
बालानन्दस्यपुत्रेणगुणिनामग्रगामिना ।
कविनाप्रतिभावच्छ्री भगवद्दत्ताशर्मणा ॥ २ ॥
तदेतन्मनोदूतसंज्ञंहिकाव्यंनिरीक्ष्यातिहर्षेणप्रोत्फुल्लमानः ।
वदामीतिवाक्यंसुविज्ञैःसुधीभिः
सुकाव्येषुह्येतन्समामाननीयम् ॥ ३ ॥

पण्डित प्यारेलाल शास्त्रिणः (जि० सहारनपुर पाठशालावस्तीराम शास्त्रीजी )

आनन्द कन्द समाहितानिरूपित ब्रह्मास्वादमिव प्रकाशयत् स्वच्छार्थगार्भित हृदयामनोदूताभिधानं काव्यं वृतिकुलकुमुदानन्द चन्दुमिव चेतसि ममनित प्रमोद संदोह मदात् । सुहृत्पद्मानन्ददिवाकर व्याकरणाद्यनेकतन्त्र स्वतन्त्र श्रीबालानन्दशर्म्मात्मजेन विद्वत्कुलमनोभृङ्ग सरसिजेन भगवद्दत्तेन राचितं समीहे खलुमुद्रितं सदचिरेण काव्यकलाकोविदानां निखिल बुधानां चेतासि लगिष्यतीति रटति व्याकरणतीर्थ श्री

कपिलेश्वर शर्मा भागीरथीयास्थ ।

आलोकित मिदमद्य किल मया भगवद्दत्त कुशाग्रमतेर्भगवद्दत्ताभिधस्यषोडशवर्ष देशीयस्यैव कृतिरभिनवं मनोदूताभिधंखण्डकाव्यं सुप्रसिद्धस्यकविकुलगुरुकालिदासकृतस्य मेघदूतस्यैवानुसृत्य पद्यछायादिकमिद मुपनिबद्धं भवेयु रेवात्र यद्यपिदोषाः केचन महतामपिप्रबन्धेषुसुलभा एवैत इति-अथापितु षोडशवर्षवयस्केनाद्यत्वेकेनचिद् इदमुपनिबद्धमितियत्सत्यं मनसोऽगोचरएवायमर्थः स्मारितं किलानेनमहाभागेनपूर्वतस्य कस्यचनाविद्वत्प्रकाण्डस्येदं बाक्यं “ वालोऽहं जगदानन्दन मे वाआस्पस्वतीति ” अहो अस्यबालस्यापिविविधार्थ विषयिणीप्रातिभा अहोदार्शनिकार्थोपनिबन्धनचातुरी । अहो अल्प एववयसि विविधविषयाव गमः । अहो निर्व्याजनिष्ठुरस्य विधेरकरुणंविलसितंयदसावङ्कुरायमाणयैवसहषतिभया लोकान्तर मेवानुप्रादित्त इति । सर्वामिमा लोच्याश्चर्य्येणचकारुण्येनचहर्षेण च परितापेनच युगपदेवेत्तरङ्गयते मानसम् । ग्रन्थकारस्य पित्राच विधिवाञ्चितेन श्रीबालानन्दविदुषोत्तरपद्यानिविविध पाण्डित्य पूर्णया व्याख्यया विवृण्वता सदमेवानुचेष्टितं वात्सल्यस्यच वैदुष्यस्यचस्वीयस्य सर्वथा चेदं सटीकंकोविद मभिनन्दाम् । अनुमन्महे चाचिरान प्रकाशनमस्येति ।

पण्ति गिरधरशर्मा व्याकरणाचार्य्यः न्यायशास्त्री संस्कृतरत्नाकर सम्पादकः ।

बाल्येपिसत्कविरिवकाव्यन्निर्मितवान्कृती ।
यशस्वीभगवद्दत्ताकीर्त्या तिष्ठतिभूतले ॥ १ ॥

सम्मतिरत्र दुर्गादत्तशास्त्रिणां ऋषिकुलाचार्य्याणाम् ।

श्रीविद्वद्वर्य्य वालानन्दराचितगूढार्थ प्रकाशकाख्यटीकया संबद्ध

विद्वन्मनोरञ्जकं श्रीमद् भगवद्दत्तकृतं मनोदूताभिधमवलोकितं वाचस्पतिनाप्रसन्नमनसाऽभावि हरिद्वारस्थेन व्याकरणतीर्थेन

बाला नन्दात्मज भगवद्दत्त निर्मित मनोदूतकाव्यातिरम्यं दृष्ट्वा भगवदत्तस्य पूर्वोपार्जिता पूर्वजन्यां प्रतिभांमन्यामहेऽतो विद्वज्जनमोद हेतु काव्यमिदम् अत्रार्थे सम्मातिर्नाराणदत्तशर्म्मणोाग्निहोत्र्युपनामकस्य हृषिकेशस्थस्य ॥

॥ इति शुभम् ॥



